॥ श्रीमद्राघवो विजयते ॥

# अथ द्वितीयः सर्गः

**अथाच्युतं न्यस्तसमस्तहेयगुणं गुणानामुदधिं शुभानाम्।**
**दधार गर्भे जमदग्निपत्नी प्राचीव पूर्णं विमलं विधुं सा॥१॥**

**कृपा टीका**—इसके अनन्तर जमदग्नि की पत्नी रेणुकाजी ने निर्मल पूर्णचन्द्र को पूर्व दिशा की भाँति सभी हेयगुणों से रहित तथा सभी कल्याण गुणगणों के महासागर अच्युत नारायण को ही अपने गर्भ में धारण किया॥१॥

**विशेष**—इस महाकाव्य पर विशिष्टाद्वैत दर्शन का पूर्ण प्रभाव परिलक्षित होता है। विशिष्टाद्वैत सिद्धान्त में ब्रह्म को निर्विशेष और निर्धर्मक नहीं स्वीकारा गया है। वहाँ हेय गुणों से रहित होने के कारण ही निर्गुण कहा जाता है तथा उसी ब्रह्म को निरवधिक समस्त कल्याण गुणगणों का निलय होने से सगुण भी कहा जाता है। यह स्वाभाविक ही है कि कवि की अपनी अवधारणा और उसके विचार उसकी रचना में उन्मुक्त रूप से प्रकट होते हैं, जैसे श्रीहर्ष का अद्वैतवाद उनके नैषध महाकाव्य में भी प्रगट हुआ है। प्रस्तुत महाकाव्य के रचयिता जगद्गुरु रामानन्दाचार्य होने से विशिष्टाद्वैत दर्शन के मूर्धन्य व्याख्याता और प्रस्थानत्रयी के भाष्यकार भी हैं।

**सा रेणुका केशमताङ्घ्रिरेणुं प्रपन्नकामार्पणकामधेनुम्।**
**बभौ वहन्ती जठरेऽजनं तं शमीव विप्रद्विडरण्यवह्निम्॥२॥**

**कृपा टीका**—वे श्री रेणुका ब्रह्मा एवं विष्णु द्वारा पूजित चरण रेणु वाले शरणागतों की कामनापूर्ति के लिए कामधेनु के समान ब्रह्मदेवी राजा रूप वन को भस्म करने के लिए दावानल तुल्य उन परमात्मा परशुराम को गर्भ में धारण करती हुई अग्निगर्भा शमी की भाँति सुशोभित हो रही थीं॥२॥

**संभाविता भावभवेन भर्त्रा गुर्वीकृता गर्भजगौरवेण।**
**रेजे वने ब्राह्मणधर्मपत्नी प्रत्यूषसन्ध्येव खगारुणाभ्याम्॥३॥**

**कृपा टीका**—विशुद्ध दाम्पत्यभाव तथा कल्याणमय प्राणवल्लभ जमदग्नि के द्वारा

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सम्मानित की हुई तथा अपने गर्भ में स्थित परमेश्वर के अंश के गौरव से विशाल व्यक्तित्व सम्पन्न की हुई ब्राह्मणश्रेष्ठ जमदग्नि की पत्नी रेणुका सूर्य तथा अरुण से सम्मानित प्रातःकालीन संध्या के समान वन में सुशोभित हुईं॥३॥

**तेजस्विनी वैष्णवतेजसाढ्या वर्चस्विनी ब्राह्मणगेहलक्ष्मीः।**
**कौटीरदीपान् विभया निनाय दोषापि सख्यं दिनदीपकानाम्॥४॥**

**कृपा टीका**—स्वयं स्वाभाविक तेज से सम्पन्न तथा गर्भ में स्थित भगवान् विष्णु के तेज से युक्त परमवर्चस्विनी उस ब्राह्मणश्रेष्ठ जमदग्नि की गृहलक्ष्मी रेणुका ने अपने अपूर्व तेज से रात्रि में जल रहे कुटी के दीपकों को दिन के दीपकों का मित्र बना दिया अर्थात् रेणुका के तेज के सामने रात्रि में प्रकाशित होने वाले दीपक भी दिनदीप की भाँति श्रीहीन हो गए॥४॥

**सा सच्चिदानन्दमनन्तकीर्तिर्गर्भे वहन्ती द्विजराजपत्नी।**
**नो बाधिता दोहदबाधयाद्धा साध्वी समासादितसाधुसत्त्वा॥५॥**

**कृपा टीका**—जमदग्नि जैसे साधुमहापुरुष के तेज से युक्त अनन्त कीर्तिवाली पतिव्रता रेणुका सच्चिदानन्द परमात्मा को गर्भ में धारण करती हुई भी गर्भ की पीड़ा से किञ्चित् भी पीड़ित नहीं हुई॥५॥

**पुंसः पुराणस्य महोमयीसा माद्यन्मुखाम्भोरुहमामनोज्ञा।**
**लावण्यलक्ष्मीं वपुषः पुपोष प्रातस्तनी प्रागदिगिवाम्बरस्य॥६॥**

**कृपा टीका**—जिस प्रकार प्रभातकालीन पूर्व दिशा आकाश की शोभा का पोषण करती है उसी प्रकार गर्भगत पुराणपुरुषोत्तम श्रीनारायण के तेज से युक्त एवं प्रसन्न मुखकमल की शोभा से सम्पन्न उस सुन्दरी रेणुका ने अपने शरीर की सौन्दर्य लक्ष्मी का पोषण ही किया अर्थात् सगर्भावस्था में भी उनके शरीर की शोभा घटी नहीं॥६॥

**प्रवालताम्राधरपल्लवा सा ससत्प्रसूतिः कचमञ्जुभृङ्गा।**
**दिदेव देवीव धृताम्रगर्भा नता वसन्ते सहकारशाखा॥७॥**

**कृपा टीका**—श्रेष्ठ गर्भस्थ प्रसव से युक्त आम्र के किसलय के समान लाल अधरपल्लव वाली सुन्दर केशरूप भ्रमरों से सुशोभित वह देवी रेणुका आम के बौर धारण करने वाली वसन्त ऋतु में झुकी हुई आम्रवृक्ष की शाखा की भाँति सुशोभित हुई॥७॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सा तेजसा गर्भगतार्भकस्य तन्वी तनिम्ना च तनोरनिन्द्या।**
**भेजेऽर्हणा दीपा विलासवीचेर्लक्ष्मीं निदाघीय सुरापगायाः॥८॥**

**कृपा टीका**—अनिन्द्य चरित्र वाली वे रेणुका गर्भस्थ शिशु के तेज से तथा शरीर की दुर्बलता से पूजा के दीपकों से युक्त लहरवाली ग्रीष्मकालीन गंगा जी की शोभा को प्राप्त हुईं॥८॥

**भूदेवसच्छस्यबलाहकेन गर्भेण तद्धाम तडिन्मयेन।**
**विद्योतिता द्यौरिव दुद्युते सा वर्षर्तुलक्ष्म्या महिताहिताशा॥९॥**

**कृपा टीका**—हितैषी लोगों में आशा का संचार करने वाली वह रेणुका ब्राह्मणरूप श्रेष्ठ शस्य सम्पत्ति के लिए मेघरूप गर्भस्थ शिशु से तथा उसके तेजरूप बिजली के प्रकाश से चमत्कृत होती हुई वर्षाऋतु की शोभा से सम्मानित आकाश दिशा की भाँति देदीप्यमान हो रही थी॥९॥

**सा सुप्रसन्ना विरजाविशेषसत्त्वाम्भसा पोषितगर्भकार्भा।**
**वव्रे शरदबालमरालमायामायाधवस्य श्रियमङ्घ्रिजायाः॥१०॥**

**कृपा टीका**—अपने गर्भ में परमेश्वर को पाकर परम प्रसन्न गर्भिणी होने से रजोगुण और रजोभाव से रहित तथा विशिष्ट विभूति रूप जल से जिनके गर्भस्थ शिशु का पोषण किया गया है। ऐसी रेणुका ने शरद्काल में मानसरोवर से आए हुए हंसशावकों की शोभा से युक्त, मायापति भगवान् विष्णु के श्रीचरण से प्रकट हुई गंगाजी की शोभा का भी वरण कर लिया। अर्थात् गर्भस्थ शिशु की शोभा से रेणुका शरद्कालीन हंसों से युक्त गंगा जैसी लगी॥१०॥

**ब्रह्मद्विडत्युद्धतराजवंशकञ्जानलप्रख्यमहो हि मान्या।**
**गर्भश्रिया सा शुशुभेऽद्भुतश्रीर्हेमन्तसन्ध्येव वधूरवन्ध्या॥११॥**

**कृपा टीका**—अद्भुतकान्ति वाली ब्राह्मणवधू वह रेणुका ब्राह्मणद्वेषी अत्यन्त उद्दण्ड राजवंश रूप कमलों को समाप्त करने के लिए अग्नि के समान तेज रूप महा हिम अर्थात् घनीभूत बर्फ से युक्त गर्भगत शोभा से हेमन्त ऋतु की सन्ध्या के समान शोभायमान हुई॥११॥

**स्वनीलकेशैरतसिप्रसूनं तनूरुचा सर्षपपुष्पशोभाम्।**
**अर्भत्विषा वेपितशत्रुगात्रा जिगाय गेया शिशिरर्तुलक्ष्मीम्॥१२॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—गर्भस्थ बालक की कान्ति से शत्रुओं के शरीर को कँपाने वाली सभी के लिए गान करने योग्य उन रेणुका जी ने अपने नील केशों से तीसी के फूल तथा शरीर की शोभा से सरसों के फूल को भी तिरस्कृत करती हुई शिशिर ऋतु की शोभा को भी जीत लिया॥१२॥

**सा रेणुका केशवकेशवन्द्यपादाब्जरेणुर्गृहमेधधेनुः।**
**ब्रह्मर्षिवर्यस्य बभार भासं प्रातर्दिवो दीप्तदिवाकरायाः॥१३॥**

**कृपा टीका**—केशव अर्थात् भगवान् विष्णु तथा क=ब्रह्मा, ईश=शिव इन तीनों देवताओं द्वारा जिनके चरणकमल के धूलि की वन्दना की गई है ऐसी श्रेष्ठ ब्रह्मर्षि जमदग्नि की गृहलक्ष्मी रेणुका बालसूर्य की दीप्ति से प्रकाशित प्रातःकालीन अन्तरिक्ष दिशा की शोभा को धारण कर रही थी॥१३॥

**व्यथाहरस्यास्य महीसुराणां गवां सुगर्भस्य महार्भकस्य।**
**मातुर्व्यथायै न बभूव भारो हारो यथा पौष्पउदारकीर्तेः॥१४॥**

**कृपा टीका**—ब्राह्मणों एवं गौओं की व्यथा को दूर करने वाले उत्कृष्ट गर्भ में वर्तमान उन परमेश्वरांश उदारकीर्ति वाले महान् शिशु का भार पुष्प के हार के समान माता के कष्ट के लिए नहीं हुआ प्रत्युत उनके लिए सुखद ही हुआ॥१४॥

**सा सूक्ष्मवासा विशदाखिलाशा पाशापहा वासववर्धितानाम्।**
**मन्दस्मिता पादविलासलक्ष्म्या विप्राश्रमं सम्मृडयाम्बभूव॥१५॥**

**कृपा टीका**—सगर्भा नारी के अनुरूप ही सूक्ष्म वस्त्र धारण की हुई तथा अपनी कान्ति से सम्पूर्ण दिशाओं एवं भक्तों की आशा को विशद अर्थात् स्वच्छ करने वाली वासव अर्थात् इन्द्र के द्वारा सम्मानित देवताओं के भयपाश को नष्ट करने वाली मन्द मुस्कान से युक्त रेणुका ने अपने चरणों की थिरकन की शोभा से ब्राह्मणवर्य जमदग्नि के आश्रम को ही आनन्द से भर दिया॥१५॥

**नम्रीकृता गर्भजगौरवेण मधोर्मनोज्ञेव रसालशाखा।**
**सच्छायया मण्डितमायया सा मोदं वितेने विबुधातिथीनाम्॥१६॥**

**कृपा टीका**—गर्भस्थ शिशु की गुरुता से कुछ झुकायी हुई सी वसन्त की सुन्दर आम्र की शाखा की भाँति वह रेणुका माया अर्थात् भगवल्लीला को सुशोभित करने वाली अपनी स्नेह की छाया से देवतारूप अतिथियों का मोदवर्धन करने

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लगी अर्थात् जैसे थका हुआ पथिक आम्रवृक्ष की छाया से प्रसन्न होता है उसी प्रकार देवतागण रेणुका की स्नेहछाया से प्रसन्न होने लगे॥१६॥

**क्वचिद् विहंगान् दधती पयोभिः क्वचिद् रसालं रसितालवालम्।**
**सा कुर्वती गर्भवतीव्रतानां पुण्याशिषा पुण्यचयं चिकाय॥१७॥**

**कृपा टीका**—कहीं पक्षियों का पालन करती हुई तो कहीं आम के थालों को जल से खींचती हुई उस रेणुका ने गर्भवतियों के लिए विहित व्रतों के पवित्र आशीर्वाद से अपूर्व पुण्यों का संचय कर लिया॥१७॥

**पाथेयमुक्तानपि वासतेयी गेहागतान् सादरमातिथेयी।**
**सा स्वापतेयी पतिचेष्टितज्ञा पुपोष पुत्रानिव मञ्जुमाता॥१८॥**

**कृपा टीका**—अपने गृह कार्य कुशलता से संपादित करती हुई अतिथि सत्कार में निपुण अपने पति को प्रसन्न करने में दक्ष जमदग्नि की चेष्टाओं से भलीभाँति परिचित वे श्रीरेणुका पाथेय अर्थात् दरिद्रता के कारण यात्रा के लिए भोजन आदि की व्यवस्था न करने वाले वनों में भटकते हुए ऐसे सहायताहीन पथिकों को घर में आया देख पुत्रों के ही समान वत्सला माता की भाँति खिला-पिलाकर पालन पोषण करती थीं॥१८॥

**विशेष**—इस श्लोक में महाकवि ने अपनी व्याकरणपटुता का दिग्दर्शन कराते हुए 'पथ्यतिथिस्वपतिवसतेर्ढञ्' सूत्र से सिद्ध होनेवाले पाथेय, आतिथेय, स्वापतेय और वासतेय-इन चारों ही शब्दों को एक ही श्लोक में मुक्तालड़ियों की भाँति पिरोया है।

**तृणाय मत्वा किल गर्भपीडाम् क्रीडानमन्मञ्जुलकन्धरा सा।**
**प्रेम्णा सिषेवे स्वशिशोः शिवाय व्रतानि वेदे विहितानि साध्वी॥१९॥**

**कृपा टीका**—गर्भ की पीड़ा को तृण के समान सामान्य समझकर लज्जा से सुन्दर कन्धों को झुकाती हुई भावी शिशु के कल्याणार्थ वह साध्वी वेदविहित व्रतों को प्रेम से करने लगी॥१९॥

**पदे पदे पद्मदलामलाक्षी प्रपूजिता देववधूवरूथैः।**
**गर्भं वहन्ती हरिमादरेण श्रद्धावती त्रींश्च निनाय मासान्॥२०॥**

**कृपा टीका**—पग पग पर देवललनाओं के द्वारा पूजित होती हुई, कमलपत्र के

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

समान नेत्र वाली रेणुका ने श्रीहरि को ही आदरपूर्वक गर्भ में धारण करती हुई श्रद्धावती होकर तीन मास व्यतीत किये।।२०।।

**तां भावयित्रीं भवभूतिभूम्नः पुंसः क्रियां पुंसवनाभिधानाम्।**
**विधाय विप्रोऽदितितुल्यशीलां संयोजयामास भवेन भार्याम्।।२१।।**

**कृपा टीका**—महर्षि जमदग्नि ने देवमाता अदिति के समान स्वभाववाली संसार की विभूतियों की प्रचुरता से युक्त परमात्मा को ही अपने गर्भ में निवास देकर सम्मानित करने वाली रेणुका नामक अपनी प्रिय पत्नी को पुंसवन संस्कार करके शास्त्र के अपूर्वजनित कल्याण से संयुक्त कर दिया।।२१।।

**अथोपसेदुः शकुनानि सौम्यां भौमानि दिव्यानि च दैहिकानि।**
**अर्थापयन्तीव निजार्थवत्तां सान्निध्यतो गर्भगतस्य विष्णोः।।२२।।**

**कृपा टीका**—इसके अनन्तर सौम्यमूर्ति रेणुका के समक्ष स्वर्ग, भूमि तथा देह सम्बन्धी अनेक शुभ शकुन उपस्थित हुए। मानो ये रेणुका के गर्भ में वर्तमान भगवान विष्णु के सान्निध्य से अपनी अर्थवत्ता ही चरितार्थ कर रहे थे।।२२।।

**माकन्दमारन्दसुमन्दमन्दो लोलल्लतोदोलितदेवदारुः।**
**भागीरथी निर्झरबिन्दुवाही सेव्यां सिषेवे शिशिरः समीरः।।२३।।**

**कृपा टीका**—लताओं को चंचल करके देवदारु वृक्षों को हलके हलके हिलाने वाला गंगाजी के प्रवाह से निर्झरित छोटी-छोटी बूँदों को धारण करने से शीतल आम के बौर के मकरन्द से मधुर ऐसा त्रिविध समीर जगत्सेव्या रेणुका की सेवा करने लगा।।२३।।

**ऊधोभराक्रान्तगतिर्गवीशा गृष्टिर्गृहीतामरवासदेहा।**
**हुंकुर्वती सम्मुखमेव तस्या वत्सं पयोऽपाययतालिहन्ती।।२४।।**

**कृपा टीका**—जिनके शरीर में सभी देवताओं का निवास है ऐसी सभी गौओं की ईश्वरी एक बार ही बछड़ा जनी हुई कामधेनुपुत्री नन्दिनी अपने थनों के भार से धीरे-धीरे चलती हुई, हुंकारती हुई रेणुका के सम्मुख आकर चाटती हुई बछड़े को पिलाने लगी।।२४।।

**वामोरुवामादृगमोघभाग्या पुस्फोर संसूचितमंगलालिः।**
**प्रदक्षिणां दक्षिणतश्चचार प्रदक्षिणामेत्य चमोरुमाला।।२५।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—समस्त मङ्गलों की सूचना देने वाली अमोघ भाग्य की विधायिका, श्रेष्ठ ऊरु वाली रेणुका की बायीं आँख फड़कने लगी एवं अत्यन्त कुशल गृहिणी रेणुका जी के दाहिनी ओर से चमोरु अर्थात् मृगसमूह ने परिक्रमा की॥२५॥

**काकोऽनुवाको ननु दक्षिणेन ताम्राधरां तां ददृशेऽधिशस्यम्।**
**पुस्फोर वामोऽपि भुजो भविष्णोर्ददर्श दृश्यं नकुलं कुलीना॥२६॥**

**कृपा टीका**—अरुणाधरा रेणुका के दाहिनी ओर हरे खेत में मधुर बोलने वाला कौआ दिखा। सौभाग्यवती रेणुका की बायीं भुजा फड़की तथा उन कुलवती ने दर्शनीय नेवले को देखा॥२६॥

**क्षेमं जगौ क्षेमकरी च तस्याः क्षेमावहं ह्यर्भकमावहन्त्याः।**
**श्यामा पिकी श्यामसरोरुहाक्ष्या वामाङ्घ्रिपस्था चकलं चुकूज॥२७॥**

**कृपा टीका**—समस्त जगत् का कल्याण करने वाले शिशु को गर्भ में धारण करती हुई उन रेणुका जी के लिए क्षेमकरी पक्षी (सफेद चील) ने क्षेम अर्थात् कल्याण का गान किया। नीले कमल के समान नेत्रवाली रेणुका के वाम भाग में स्थित वृक्ष पर श्यामा विराजमान हुई तथा कोकिला भी पंचम स्वर में बोली॥२७॥

**तां तिग्मरश्मिर्नततापतीग्मं सद्गर्भभाराभिनताङ्गयष्टिम्।**
**नवोन्मिषन् नन्दननालिनेया मोदेन तन्मोदलतां व्यतानीत्॥२८॥**

**कृपा टीका**—पूर्ण गर्भ के भार से जिनकी शरीर यष्टि थोड़ी झुक गई थी ऐसी रेणुका को चण्डकिरण सूर्यनारायण भी अधिक नहीं तपा रहे थे अर्थात् उनके लिए अपनी किरणों की उष्णता कम कर ली थी प्रत्युत नवीन विकसित होती हुई नन्दन वन की कमलिनी की सुरभि से सूर्यनारायण रेणुका की प्रसन्नता लता को ही फैला रहे थे॥२८॥

**सुधामयूखो निशि नीरजाक्षीं सुधामयूखैः सुखयाञ्चकार।**
**निशीथिनी पद्मपलाशशोभां निशीथिनीशो व्यदिशद् दृशेऽस्याः॥२९॥**

**कृपा टीका**—कमलनेत्रा रेणुका को अमृतकिरण वाले चन्द्रमा रात्रि में अपनी अमृत किरणों से सुखी करते थे। निशीथिनी अर्थात् रात्रि के पति चन्द्रदेव रेणुका के नेत्र को रात्रिकालीन कमल की शोभा अर्पित करते थे। अर्थात् जैसे रात्रि में कमल सम्पुटित हो जाता है तद्वत् चन्द्रमा अपनी शीतल किरणों से रेणुका

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

को सुलाकर उनके नेत्रों को सम्पुटित कर देते थे॥२९॥

**तां मङ्गलो माङ्गलिकीमकार्षीद् भुवं जगन्मङ्गलमङ्गलस्य।**
**प्रवालरागेण पदं जगाम भौमोऽपि तद्भौम सुरार्भकस्य॥३०॥**

**कृपा टीका**—जगत् के मङ्गलों को भी मङ्गल करने वाले परशुराम को भी जन्म देने वाली उन रेणुका देवी को मङ्गल ने मङ्गलमयी बना दिया और पृथ्वी के देवता ब्राह्मणरूप में अवतरित होने वाले रेणुका के गर्भस्थ शिशु के चरण की भौमदेव ने मूँगे जैसे रंग के व्याज से सेवा की अर्थात् अपनी लालिमा अर्पित करते हुए भावी शिशु के चरणों में मङ्गल ने निवास किया॥३०॥

**सौम्योऽपि तद्ब्राह्मणसोमतेजः स्वतेजसा सङ्गमयाम्बभूव।**
**समस्तशास्त्रार्थबुधत्वमर्भे समर्प्य धन्यं बुबुधे बुधः स्वम्॥३१॥**

**कृपा टीका**—चन्द्रपुत्र बुध ने भी उस ब्राह्मण चन्द्र के तेज में अपने तेज के माध्यम से स्वयं को संगत (तदनुसार) कर लिया और उस गर्भस्थ शिशु को सम्पूर्ण शास्त्रार्थ समर्पित करके बुधदेव ने अपने को धन्य माना॥३१॥

**जगद्गुरोर्गर्भगतस्य जिष्णोर्गुरुर्गरिम्णा गरयाम्बभूव।**
**गीर्वाणसापत्नकृपाकृपाणीं वाणीं शिशोर्गीष्पतिराविवेश॥३२॥**

**कृपा टीका**—रेणुका के गर्भ में विराजमान जगत् के गुरु विजयशील भगवान् विष्णु की गुरुता से बृहस्पति भी गौरवान्वित हुए तथा देवताओं के शत्रु राक्षसों पर उमड़ने वाली कृपा को भी नष्ट करने के लिए कटार के समान अर्भक परशुराम की वाणी में बृहस्पति ने स्वयं प्रवेश कर लिया॥३२॥

**तदर्भकं भार्गववंशदीपं सभार्गवःस्वस्तिगिरा समर्च्य।**
**अखण्डशुक्रत्वममुत्रबाले निधाय शुक्रः शुशुभे शुभञ्जुः॥३३॥**

**कृपा टीका**—शुभ लक्षणों से युक्त भृगु पुत्र शुक्र भी भृगुवंश के दीपक उस बालक को स्वस्त्ययन से समर्चित करके उसमें अखण्डशुक्रत्व अर्थात् अखण्ड ब्रह्मचर्य का आधान कर सुशोभित हुए॥३२॥

**शनैश्चरः स्वं शनकैस्थिरत्वमायुष्यधादर्भकभूषणस्य।**
**स्वनीलतां नीलसरोजकान्तिः केशाननैषीत् किल केशवस्य॥३४॥**

**कृपा टीका**—शनिश्चर ग्रह ने अपनी मन्दगति सम्बन्धिनी स्थिरता को शिशुभूषण

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परशुराम की आयु में समर्पित कर दिया अर्थात् शनिश्चर की स्थिरता परशुराम की आयु में आगयी और उन्होंने अपनी नीलिमा भगवान् नारायण के अंश परशुराम के नीलकमल की शोभावाले केशों को सौंप दी॥३४॥

**राहुर्द्विजद्विड्द्विजराजराहुं सहस्रबाह्वब्जतुषारबाहुम्।**
**संवर्धयामास समानशीलं समुल्लसच्छत्रविनाशलीलम्॥३५॥**

**कृपा टीका**—जिसकी छत्र विनाशलीला आगे चलकर समुल्लसित होगी और जो भविष्य में सहस्रबाहु रूप कमल को नष्ट करने के लिए हेमन्त का चन्द्र बनेगा तथा जो ब्राह्मणद्वेषी राजवंशरूप चन्द्र को ग्रसने के लिए साक्षात् राहु के समान होगा-ऐसे रेणुका के गर्भस्थ शिशु को अपने समान स्वभाव वाला समझ कर राहु ने भी उसका संवर्धन किया॥३५॥

**केतुश्च तं ब्राह्मणवंशकेतुमर्भं समाधित्सितधर्मसेतुम्।**
**जगज्जनिस्थाननिरोधहेतुमपूपुजत् त्यक्तनिजस्वभावः॥३६॥**

**कृपा टीका**—केतु ग्रह ने भी अपना क्रूर स्वभाव छोड़कर धर्मसेतु की रक्षा करने वाले संसार के जन्म, स्थिति और प्रलय के अभिन्न निमित्तोपादान कारण ऐसे ब्राह्मणवंश के केतु उस गर्भस्थ शिशु की पूजा की॥३६॥

**अथोपतस्थे जमदग्निभार्यां सुस्वप्नमाला सुफला रसाला।**
**महानुभावोद्भव एव नूनं प्रादुर्भवन्त्येव शुभानि भूत्यै॥३७॥**

**कृपा टीका**—इसके अनन्तर सुन्दर फल देने वाले अत्यन्त मधुर सुन्दर स्वप्नों की श्रेणियाँ जमदग्नि की पत्नी रेणुका के समक्ष उपस्थित हुईं। निश्चय ही महापुरुषों के जन्मकाल में ही ऐश्वर्य का बोध कराने के लिए शुभ शकुन उत्पन्न होते ही हैं॥३७॥

**तां स्वप्नकाले द्विजपर्णशाले सोमोऽथ राजा रजताद्रिगौरः।**
**समर्हयत् सादरसामगानैः पीयूषकुम्भैः सितपुष्पपूगैः॥३८॥**

**कृपा टीका**—रेणुका के स्वप्नकाल में जमदग्नि की पर्णकुटी में चाँदी के पर्वत के समान श्वेतवर्ण वाले राजा सोम अर्थात् चन्द्रमा ने आदरपूर्वक सामगान करते हुए श्वेतपुष्पों एवं अमृतपूर्ण कलशों से रेणुका जी की पूजा की॥३८॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तामग्नयो योगिदुरापसूतिं त्रयोऽत्रयः स्वानुजतामुपेतम्।**
**शक्रानुजं चाधिधरं प्रतीताः सत्कर्तुकामाः परितः प्रसेदुः।।३९।।**

**कृपा टीका**—स्वप्नकाल में ही काम, क्रोध, लोभ इन तीनों दुर्गुणों से रहित गार्हपत्याग्नि, दक्षिणाग्नि, आहवनीयाग्नि–ये तीनों श्रौत अग्नि, पृथ्वी पर योगियों के लिए दुर्लभ लीलाओं से सम्पन्न इन्द्र के छोटे भ्राता भगवान विष्णु को ही अपने छोटे भ्राता (ब्राह्मण) के रूप में समझकर रेणुका को अपनी मातृबुद्धि से सम्मानित करने की इच्छा करते हुए उनके चारों ओर प्रसन्नतापूर्वक प्रज्ज्वलित हो उठे।।३९।।

**विशेष**—श्रुति के अनुसार अग्नि ब्राह्मण का बड़ा भाई है–अग्निज्ज्येष्ठो हि ब्राह्मणाः। जब अग्नियों को यह ज्ञान हुआ कि इन्द्र के छोटे भाई नारायण हमारे छोटे भाई अर्थात् ब्राह्मण बन गये हैं तब वे बहुत प्रसन्न हुए।

**सप्तर्षयः शप्तभृगूद्भवानां भवायलक्ष्म्या प्रजनिष्यमाणम्।**
**विज्ञाय विष्णुं कुशवारिभिस्तांगाङ्गैर्गदन्तः श्रुतिमभ्यसिञ्चन्।।४०।।**

**कृपा टीका**—विश्वामित्र, जमदग्नि, भरद्वाज, गौतम, अत्रि, वसिष्ठ और कश्यप–इन सप्तर्षियों ने लक्ष्मीजी द्वारा अभिशप्त भृगुवंशीय ब्राह्मणों का कल्याण करने के लिए स्वयं विष्णु को ही भृगुकुल में अवतार लेते हुए समझकर श्रुति का पाठ करते हुए कुशों से गंगाजल द्वारा रेणुकाजी का अभिषेक किया।।४०।।

**स्वप्ने गरुत्मान् ननु रेणुकां तां वहन् स्वपृष्ठे हरियोगनिष्ठे।**
**स्वपक्षवातेजितमेघमाला व्यालोलितालं गगनं जगाम।।४१।।**

**कृपा टीका**—स्वप्न में ही भगवान् गरुड़ श्रीमन्नारायण के संयोग में निष्ठाबद्ध अपनी पीठ पर उन रेणुकाजी को विराजमान कराकर अपने पंखों की वायु से काँपती हुई मेघमाला की चञ्चलता से व्याप्त आकाश में उड़े।।४१।।

**वक्षो लसत् कौस्तुभलक्ष्मलक्ष्म्या लक्ष्म्याशये भार्गवगेहलक्ष्मीः।**
**मणिप्रदीपावलिभव्यभासानीराजितानीरजया निशीथे।।४२।।**

**कृपा टीका**—अर्धरात्रि के स्वप्न में जमदग्नि की गृहलक्ष्मी रेणुका जी की अपने वक्ष पर विराजमान श्रीवत्सलाञ्छन नारायण की शोभा से सम्पन्न तथा क्षीरसागर से उत्पन्न लक्ष्मीजी ने शयनपर्यङ्क पर ही मणिमय दीपकों की भव्य ज्योति से नीराजना अर्थात् आरती की।।४२।।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इत्थं शुभैः सूचितगर्भसम्पत् संसेव्यमाना शकुनैरघघ्नैः।**
**निनाय मासान् ननु सप्तसाध्वी वेदान्तविद्येव च सप्तभूमीः॥४३॥**

**कृपा टीका**—इस प्रकार के शुभ संकेतों से जिनकी गर्भसम्पत्ति सूचित हो रही थी तथा पापहारी सुन्दर शकुनों द्वारा जिनकी सेवा की जा रही थी ऐसी पतिव्रता रेणुकाजी ने उसी प्रकार गर्भ के सात मास बिताए जैसे वेदान्तविद्या ज्ञान की सात भूमिकाएँ पार कर लेती है॥४३॥

**अथाष्टमेऽष्टौ प्रकृतीरतीता कलाष्टमीवामलशीतरश्मेः।**
**गर्भे परब्रह्मशिशुं वहन्ती परेव रेजे प्रकृतिः स बोधा॥४४॥**

**कृपा टीका**—इसके अनन्तर गर्भ के आठवें मास में शुक्लपक्ष के चन्द्र की अष्टमी तिथि की कला जैसी वह रेणुका अपने गर्भ में परब्रह्म परमात्मा को ही शिशु रूप में धारण करती हुई आठों भूमि आदि भिन्न प्रकृतियों से परे दिव्यज्ञान से सम्पन्न 'परा' अर्थात् जीवात्म प्रकृति के समान सुशोभित हुईं॥४४॥

**विशेष**—गीताजी के सप्तम अध्याय में भगवान् श्रीकृष्ण ने भूमि, जल, अग्नि, वायु, आकाश, मन, बुद्धि, अहंकार-इन आठ भेदों से युक्त अपराप्रकृति का तथा इससे विलक्षण जीवसंज्ञा वाली सम्बन्धदृष्ट्या अपने से अभिन्न पराप्रकृति का वर्णन किया है। इन्हीं दोनों को क्रमशः क्षर और अक्षर भी कहा गया है। यही पराप्रकृति जब ब्रह्मज्ञान सम्पन्न होती है तब साधक जीवन्मुक्त हो जाता है।

**सीमन्तमुन्नेतुमथोपनिन्युः सीमन्तिनीं सानुनयां श्रुतिज्ञान्।**
**वादित्रगीतैः श्रुतिभिः समेताः सख्यः सखीं पार्वणचन्द्रमुख्यः॥४५॥**

**कृपा टीका**—इसके अनन्तर पूर्णचन्द्र के समान मुख वाली तापसी सखियाँ निकट आकर बहुत अनुनय विनय करके बाजे बजाती, गीत गाती, स्वस्त्ययन श्रुतियों का उच्चारण करती हुईं अपनी प्रिय सखी रेणुका को सीमन्तविधि करने के लिए वेदज्ञ ब्राह्मणों के पास ले गयीं॥४५॥

**उन्नीतसीमन्तशिखाशिखेव प्रज्ञानदीपस्य मुखाब्जभासा।**
**जहार जाया जमदग्निचित्तं वल्गुस्मितापाङ्गविसर्गितेन॥४६॥**

**कृपा टीका**—सीमन्तकर्म के अनुसार जूड़े के ऊपर बाँध दिए जाने पर ज्ञानदीप

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

की शिखा की भाँति जमदग्नि पत्नी रेणुका ने अपनी मधुर मुस्कान तथा कटाक्ष भरी चितवन से अपने पति जमदग्नि के चित्त को हर लिया॥४६॥

**व्यतीत्य सानन्दमनामहर्षेः प्रियानवद्यानवधेवभक्तिः।**
**नवापि मासान् सुषुवेऽथदारं शिशुं दशायां दशमे दशम्याम्॥४७॥**

**कृपा टीका**—इस प्रकार नवधा भक्ति के समान जमदग्नि पत्नी रेणुकाजी ने अपने अनिन्द्य व्यक्तित्व से आनन्दपूर्वक नवमास बिताकर दसवें महीने एवं भक्ति की दसवीं दशा अर्थात् प्रेम की परम अवस्था में श्रीहरि के निग्रह अंश बालक परशुराम को जन्म दिया॥४७॥

**सा माधवं माधवशुक्लपक्षे मायाधवं सञ्जनयाम्बभूव।**
**या ख्यापिताक्षय्यतिथिस्तृतीया लोके जयन्ती हरिभार्गवस्य॥४८॥**

**कृपा टीका**—रेणुका जी ने माया पर नियन्त्रण करने वाले लक्ष्मीपति भगवान् विष्णु के अंश परशुराम को वैशाख शुक्ल पक्ष तृतीया तिथि में जन्म दिया। यही अक्षयतृतीया लोक में परशुराम जयन्ती के नाम से प्रसिद्ध हुईं॥४८॥

**माध्याह्निके चाभिजिते मुहूर्ते मध्याह्नभास्वानिवतेजसाढ्यः।**
**जैत्रेद्विजाम्भोरुहचित्रभानुर्नमत्कृशानुः करजुष्टजानुः॥४९॥**

**स्वयं चतुर्थो विगलच्चतुर्थश्चतुष्टयस्याब्जभृतः कलानाम्।**
**सभूतिभूतो भवभूतिपूतोऽद्भुतः सुतो रेणुकया प्रसूतः॥५०॥**

**कृपा टीका**—यहाँ दो श्लोक एकान्वयी हैं—रेणुकाजी के द्वारा मध्याह्न तथा परमेश्वर के प्रिय विजयशील अभिजित मुहूर्त में मध्याह्न सूर्य के समान तेजस्वी, ब्राह्मणवंशरूप कमल के लिए साक्षात् सूर्य स्वयं अग्नि के भी वन्दनीय, हाथ से घुटनों का स्पर्श किये हुए, मोह से अतीत, भगवान् विष्णु की चारकलाओं के संग्रहरूप एवं संसार के लिए विभूतिरूप तथा भगवान् शङ्कर की कृपाविभूति से सम्पन्न ऐसा अद्भुत चतुर्थ पुत्र उत्पन्न किया गया॥४९-५०॥

**देवाः प्रसेदुर्ननृतुश्चदेव्यो जगुश्च गन्धर्वगणाविनेदुः।**
**सुदुन्दुभीः पाणवशंखभेरीः सुरेन्द्रमुख्या ववृषुः प्रसूनैः॥५१॥**

**कृपा टीका**—श्रीमद्भार्गव केजन्मकाल में देवता प्रसन्न हो गए देवांगनाएँ नृत्य करने लगीं, गन्धर्वगण मधुर स्वर से गाने लगे। इन्द्र आदि प्रमुख देवगण, सुन्दर

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नगाड़े, पणव, शंख तथा भेरियाँ बजाने लगे एवं पुष्पों की वर्षा करने लगे॥५१॥

**पेठुः श्रुतीरष्टघनान्तपाठाः विप्राः सुमन्त्रान्नृषयः प्रजेपुः।**
**भक्ताश्च भेजुः पदपद्ममस्य साष्टाङ्गनामं मुनयः प्रणेमुः॥५२॥**

**कृपा टीका**—वेदपाठी ब्राह्मण आठों विकृतियों के साथ घनान्त श्रुतियों का पाठ करने लगे। ऋषिगण गायत्री आदि दिव्य मंत्रों का जप करने लगे। वैष्णवभक्त भगवान् भार्गव के चरणकमल का भजन करने लगे तथा मुनियों ने उन्हें साष्टांग प्रणाम किया॥५२॥

**विशेष**—जटा, माला, शिखा, रेखा, ध्वजदण्ड, रथ और घन-ये वेद की आठ पाठ विकृतियाँ होती हैं। संहिता, पद और क्रम ये तीन पाठ-प्रकृतियाँ हैं। ह्रस्व, दीर्घ, प्लुत, उदात्त, अनुदात्त, स्वरित तथा प्रचयाञ्चय ये वेद के सात स्वर होते हैं।

**वेदाः समस्ता धृतवन्दिवेषा जगुर्विभूम्नोविरुदं विनीताः।**
**त्रेसुस्समे विप्रविरोधिभूपाः पत्न्यस्तदीया विकला विलेपुः॥५३॥**

**कृपा टीका**—सम्पूर्ण वेद वन्दियों का वेष धारण करके विनीतमुद्रा में प्रभु के विमल यश का गान करने लगे। भार्गव के जन्म लेते ही सभी ब्राह्मणविरोधी राजा भयभीत हो गए तथा उन ब्रह्मद्रोही राजाओं की पत्नियाँ व्याकुल होकर विलाप करने लगीं॥५३॥

**बभूव भूयो जमदग्निगेहे महामहो जातकजातिकर्म।**
**संस्कारलीला न परात्मशुद्ध्यै शास्त्रप्रवृत्तिर्जनशिक्षणार्था॥५४॥**

**कृपा टीका**—महर्षि जमदग्नि के घर में फिर बालक के जन्म के निमित्त जातकर्म संस्कार और महाउत्सव हुए। भगवान् की संस्कारलीला उनकी पवित्रता के लिए नहीं है, वे तो स्वयं शुद्ध हैं। उनकी यह शास्त्रप्रवृत्ति जनता की शिक्षा के लिए है, अर्थात् भगवान् की ही भाँति प्रत्येक नर-नारी को वेद विहित कर्मों का अनुष्ठान करना ही चाहिए॥५४॥

**चिच्छेद धात्रीशिशुनाभिनालां यस्यां स्वयम्भूर्भगवान् बभूव।**
**संस्नाप्य मन्त्रैरधिसूतिगेहं सख्योऽनयंस्तां भगवत्प्रसूतिम्॥५५॥**

**कृपा टीका**—इसके अनन्तर धाई ने शिशु की उस नाभिनाला का छेदन किया

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

(नाल काटा) जिसमें स्वयं भगवान ब्रह्मा प्रकट हुए थे। फिर सखियाँ भगवान् की माँ रेणुका को मन्त्रपूर्वक स्नान कराकर सूतिकागृह में ले गयीं॥५५॥

**अथो षड़ैश्वर्यनिधिं निधानं सुसद्गुणानां द्विषतां कृतान्तम्।**
**षष्ठीविधानेन समर्च्यनार्यो जगुः कलं मङ्गलगीतकानि॥५६॥**

**कृपा टीका**—इसके अनन्तर मुनि पत्नियों ने ऐश्वर्य, धर्म, यश, श्री, ज्ञान, वैराग्य-इन छहों ऐश्वर्यों के निधि एवं श्रेष्ठ कल्याण गुणगणों के भाण्डागार तथा शत्रुओं के कालस्वरूप बालक जामदग्न्य की षष्ठी के लौकिक वैदिक विधान से पूजा करके प्रसंगोचित माङ्गलिक गीत गाए॥५६॥

**तं द्वादशादित्यसमंस्वसूनुं प्राप्तेऽहनिद्वादशआर्षमन्त्रैः।**
**प्रस्नाप्यतातो हतसूतकाधिर्ननन्द निर्वाणकरः करीव॥५७॥**

**कृपा टीका**—जन्म के बारहवें दिन आने पर द्वादश सूर्यों के समान तेजस्वी अपने चतुर्थ पुत्र को वैदिक मन्त्रों से स्नान कराकर स्वयं जननाशौच सूतक से मुक्त हुए पिता जमदग्नि बन्धनमुक्त होकर स्नान किए हुए हाथी की भाँति प्रसन्न हुए॥५७॥

**ददौ तदानीं श्रुतिशारदानी द्विजो द्विजेभ्यो मधुलिड्वरेभ्यः।**
**हस्तीवदानं ननुभूरिदानं धनेशसंकीर्तितकीर्तिगानम्॥५८॥**

**कृपा टीका**—जिस प्रकार हाथी श्रेष्ठ भ्रमरों को अपना मद अर्पित करता है उसी प्रकार वेदतत्व का दान करने वाले ब्राह्मण श्रेष्ठ जमदग्नि ने पुत्रजन्म के उपलक्ष्य में ब्राह्मणों को इतना अधिक दान दिया कि जिसका कुबेर ने भी यशोगान किया॥५८॥

**ततो ग्रहैर्गाहितभूरिभागं करिष्यमाणायुधयुद्धयागम्।**
**वपुर्विभाव्रीडितविष्णुरागं सुतं समासाद्य स सानुरागम्॥५९॥**

**आहूय विप्रान् श्रुतिपाठचुञ्चून् तत् स्वस्तिवाचं किल वाचयित्वा।**
**गुरुं भृगुं वंशकरं निवेद्य स पञ्चमी पाञ्चमिकं व्यधत्त॥६०॥**

**कृपा टीका**—इसके अनन्तर सूर्यादिग्रहों के द्वारा जिसे भूरिभाग समर्पित किया गया है और जिसके द्वारा शस्त्र की स्रुवा से युद्धयज्ञ किया जाने वाला है तथा जिसने अपने शरीर की कान्ति से विष्णुराग अर्थात् श्वेतकमल की शोभा को

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भी लज्जित किया है ऐसे यशस्वी पुत्र को प्राप्त कर अनुरागपूर्ण मन से पञ्चम पुरुषार्थ भगवद्भक्ति से युक्त होकर महर्षि जमदग्नि ने वेदपाठ में निपुण ब्राह्मणों को बुलाकर स्वस्तिवाचन कराकर अपने वंशप्रवर्तक महर्षि भृगुजी से आज्ञा लेकर पुत्र का पाञ्चमिक अर्थात् नामकरण संस्कार किया॥५९-६०॥

**भृगुं सुकीर्त्या पितरौ गुणौघैर्विप्रान् स्ववीर्यै रमयिष्यतेऽसौ।**
**पुत्रो विचार्येति पिता तदीयं वर्णद्वयं प्राह स रामनाम॥६१॥**

**कृपा टीका**—यह पुत्र अपनी कीर्ति से महर्षि भृगु को, गुणों से माता पिता को तथा ब्राह्मणों को अपने पराक्रम से रमाएगा अर्थात् प्रसन्न करेगा ऐसा विचार करके ही पिता जमदग्नि ने अपने चतुर्थ पुत्र का दो अक्षरवाला राम नाम रखा॥६१॥

**राष्ट्रस्य मा मेधयिता सुतोऽसौरास्यत्ययं मामपि भूसुरेभ्यः।**
**अतोऽपि रामं जगदुस्तमेते वाक्किङ्करोऽर्थो हि भवत्रिषीणाम्॥६२॥**

**कृपा टीका**—यह बालक राष्ट्र की ऐश्वर्य लक्ष्मी को वर्धित करने वाला होगा तथा कर्मनिष्ठ ब्राह्मणों को भी सौभाग्यलक्ष्मी प्रदान करेगा। इसीलिए इन ब्रह्मर्षियों ने बालक को राम कहा। क्योंकि अर्थ ऋषियों की वाणी का किङ्कर होता है॥६२॥

**सम्पाल्यमानोऽनुपलं पितृभ्यां गुहः शिवाभ्यामिव तीक्ष्णतेजाः।**
**दिने दिनेऽवर्धत शुक्लपक्षे स भार्गवाम्भोधिशशी शशीव॥६३॥**

**कृपा टीका**—भृगुवंशरूप क्षीरसागर का वह बालचन्द्र पार्वती एवं भगवान् शङ्कर के द्वारा पालित हो रहे महान् तेजस्वी कार्तिकेय की भाँति अपने माता पिता रेणुका जमदग्नि द्वारा प्रतिपल पालित होता हुआ शुक्लपक्ष के चन्द्र की भाँति दिन प्रतिदिन बढ़ने लगा अर्थात् शीघ्रता से वर्धमान हुआ॥६३॥

**ततो बहिर्निष्क्रमणक्रियार्थं निनाय तं शम्भुनिकेतमम्बा।**
**सखीजनोद्गीतपवित्रकीर्तिः क्रान्तत्रिनेत्राम्बकमासमर्भम्॥६४॥**

**कृपा टीका**—इसके अनन्तर भगवान् शङ्कर के नेत्रों की संख्या वाले अर्थात् तीन मास बीत जाने पर सखीजनों द्वारा जिनकी पवित्र कीर्ति गायी जा रही थी ऐसी रेणुका बालक राम को बहिर्निष्क्रमण संस्कार के लिए भगवान् शङ्कर के मन्दिर ले गयी॥६४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विशेष**—'क्रान्तत्रिनेत्राम्बकमासम्' बालक केतीन मास व्यतीत कर लेने पर छठे संस्कार बहिर्निष्क्रमण की विधि की जाती है। इस श्लोक में उसी का संकेत है। त्रिनेत्र अर्थात् शंकर के अम्बक यानि नेत्रों की संख्या भी तीन हैं उसके अनुसार तीन मास अतिक्रान्त करने का ही यहाँ कूट शब्दों में संग्ेत किया गया है।

**प्राणीनमत्तेन शिवं च माता भजिष्यता तत्पदकञ्जयुग्म्।**
**तं बालको बालकचन्द्रचूडं दृग्वारिधाराभिरलंसिषेच।।६५।।**

**कृपा टीका**—माता रेणुका ने भविष्य में भगवान् शंकर के श्रीचरणकमलों को भजने वाले अपने शिशु से शिवजी को नमन करवाया। प्रणाम करते ही बालक ने अपने नेत्रों की अश्रुधारा से बालचन्द्रमौलि शिवजी का अभिषेक कर दिया।।६५।।

**उत्थाप्य शर्वो दशभिर्भुजैस्तं बालं स्वसंभूतिरसारसालम्।**
**जटाटवीखेलदभङ्गगङ्गातरङ्गसङ्गप्रणयी चकार।।६६।।**

**कृपा टीका**—भगवान् शंकर ने भी अपनी संभावनारूपिणी पृथ्वी के आम्रफल रूप उस बालक को दशों भुजाओं से उठाकर अपनी जटारूप वनस्थली में खेलती हुई गंगाजी की तरल तरङ्गो का उसे प्रणयी बना दिया अर्थात् नवजात बालक को शिवजी सिर पर विराजमान गंगा की लहरों से बालकेलि कराने लगे।।६६।।

**विशेष**—शिवपुराण में शिवजी की दशभुजाएँ प्रसिद्ध हैं—**'पञ्चवक्त्रंदशभुजम्'।**

**कर्पूरगौरेण मनोहरेण स्वकाङ्गसङ्गेन सुभस्मनेशः।**
**विभूष्य तं भूषितभूमिदेवं देवोऽथदिव्योदिविजयैर्दिदेव।।६७।।**

**कृपा टीका**—इसके पश्चात् अपने शरीर में लगे हुए कपूर के समान श्वेत, अत्यंत, मनोहर श्रेष्ठ भस्म से ब्राह्मणों को विभूषित करने वाले उस बालक को विभूषित करके श्रीमहादेव देवताओं के सहित उसकी स्तुति करते हुए बहुत प्रसन्न हुए।।६७।।

**जगाद जीमूतगिरागिरित्रो दित्सन् शिशुं ब्राह्मणधर्मपत्न्यै।**
**स रेणुकापादपयोजरेणुं भक्त्या चिकीर्षंस्तरुणेन्दुभूषाम्।।६८।।**

**कृपा टीका**—भक्तिभावना के आधिक्य से रेणुकाजी की चरणकमल की धूलि को सिर पर विराज रहे बालचन्द्र का भी अलंकार बनाने की इच्छा करते हुए नवजात बालक को ब्राह्मण धर्मपत्नी रेणुका जी को प्रत्यावर्तित करते हुए

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कैलासवासी भगवान् शंकर मेघ गम्भीर वाणी में बोले॥६८॥

जयत्वसौ ब्राह्मणवृन्दशस्यबलाहको वैदिकवाहकश्च।
विपद्विरामो द्विजवंशरामो रामोऽभिरामो भृगुराम ईड्यः॥६९॥

**कृपा टीका**—ब्राह्मण वृन्दरूप सुन्दर शस्य के लिए बादल के समान वैदिक सिद्धान्तों के वाहक विपत्तियों के विश्रामस्थान, ब्राह्मणवंश को आनन्दित करने वाले अत्यन्त सुन्दर स्तुतियोग्य इन भृगुराम की जय हो॥६९॥

धन्यावमू भार्गववंशदीपौ जायापती मञ्जुमती अतीतौ।
कुवासनां शीलगुणाशनां यौ भूमानमानीय भुवं विभातः॥७०॥

**कृपा टीका**—ये सुन्दर बुद्धिवाले भृगुवंश के दीपक तथा शीलरूप गुण को समाप्त करने वाली कुवासना से बहुत दूर रहने वाले दम्पती रेणुका और जमदग्नि धन्य हैं जो परमात्मा को भी बालक रूप में पृथ्वी पर प्रकट करके सुशोभित हो रहे हैं॥७०॥

धन्यास्थलीभूतलभाग्यभूता सुभारती भारतभूमिरेषा।
यत्रैव साक्षात् भगवान् मुकुन्दः पुनः पुनश्चावतरत्युदारः॥७१॥

**कृपा टीका**—पृथ्वी की सौभाग्यरूप सात्त्विक सरस्वती से सम्पन्न यह भारत भूमि धन्य है, जहाँ साक्षात् परम उदार भगवान मुकुन्द बारम्बार अवतार लेते हैं॥७१॥

दृष्टं विधात्रापितुलां न याति जगत्समग्रं किल भारतस्य।
तद् भारतान्न्यूनममुष्यनाम नेमाक्षरेणापि जगद्व्यधायि॥७२॥

**कृपा टीका**—जब विधाता ने देखा कि सम्पूर्ण जगत् भारत की तुलना नहीं कर पा रहा है, तब उन्होंने भारत से आधा अक्षर कम संसार का नाम जगत् रख दिया॥७२॥

दिष्ट्याम्ब ते सूनुरभूत् स्वयम्भूरनन्तवीर्यो भगवान् मुरारिः।
यन्मायया जीवजगच्च दारुयोषेव नट्या परिनर्त्यतेऽदः॥७३॥

**कृपा टीका**—हे माँ! सौभाग्य से आपके पुत्र बनकर वे अनन्त पराक्रमी भगवान् मुरारि पधारे हैं जिनकी मायारूप नटी के द्वारा यह जीव जगत् कठपुतली की भाँति नचाया जा रहा है॥७३॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**एषस्स्वयं नाशितभूसुरध्रुग् राजन्यवंशो भृगुवंशहंसः।**
**वीरव्रती ख्यापितदिव्यकीर्तिर्दिक्पालकानां भविता प्रशस्यः॥७४॥**

**कृपा टीका**—हे माँ! यह बालक भविष्य में ब्राह्मणद्रोही राजवंश का विनाशक, भृगुवंशरूप कमल का सूर्य, नैष्ठिक ब्रह्मचारी, विख्यात कीर्तिसम्पन्न तथा दिक्पाल देवताओं का भी प्रशंसापात्र बनेगा॥७४॥

**सहस्रबाहूद्धतबाहुदण्ड प्रचण्डदावानलमञ्जुमेघः।**
**द्विजेन्द्रसारङ्गसमूहचित्ताकर्षी प्रवर्षी सुमुदोऽर्भकोवाम्॥७५॥**

**कृपा टीका**—आप दोनों का यह बालक सहस्रबाहु के उद्धत भुजदण्डरूप भयंकर दावाग्नि को बुझाने के लिए बांदल रूप होगा। यह श्रेष्ठ ब्राह्मणरूप चातकों के लिए आकर्षक तथा जगत् में आनन्द का वर्धक होगा॥७५॥

**निशम्य तामाशिषमिन्दुमौलेर्देवैः कृताभ्यर्हणमभ्युपेत्य।**
**पुत्रं पुतस्त्राणकरं सुखाब्धेस्तौ दम्पती तीरमिताविवान्त्यम्॥७६॥**

**कृपा टीका**—इस प्रकार भगवान् शंकर का आशीर्वाद सुनकर देवताओं द्वारा पूजित एवं नरक से रक्षा करने वाले परमेश्वरांश को पुत्र रूप में पाकर वे ब्राह्मण दम्पती रेणुका-जमदग्नि ने मानो सुख के अन्तिम तीर को प्राप्त कर लिया अर्थात् बहुत प्रसन्न हुए॥७६॥

**ततश्च रामो रमयाम्बभूव स्निग्धेक्षितैशैशवचेष्टितैश्च।**
**वपुः प्रकर्षेण महो महिम्ना मृगान् भृगून् स्वां जननीं जनित्रम्॥७७॥**

**कृपा टीका**—इसके अनन्तर भार्गव श्रीराम ने स्निग्ध चितवन से मृगों को, बाल्योचित चेष्टाओं से भृगुवंशियों को शरीर के प्रकर्ष से माता रेणुका को तथा तेज की महिमा से पिता जमदग्नि को रमाया अर्थात् आनन्दसागर में निमग्न कर दिया॥७७॥

**ततोऽन्नसम्प्राशनमाविधित्सुस्तं छन्दयामास पिता महान्नैः।**
**आनन्दकन्दोऽपि स कन्दमूले मनोऽर्पयन्मानितवन्यवृत्तिः॥७८॥**

**कृपा टीका**—इसके अनन्तर अन्नप्राशन संस्कार करने की इच्छा से पिता जमदग्नि ने अनेक पक्वान्नों एवं मिष्टान्नों से बालक राम को प्रसन्न करना चाहा परन्तु वन्यवृत्ति का सम्मान करते हुए शिशु ने स्वयं आनंदकंद होकर भी कन्दमूलफल

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

में ही अपने मन को अर्पित कर दिया अर्थात् सभी अन्न छोड़कर कन्दमूल फल ही चखा॥७८॥

**लोलालको बालकबालकोऽसौ क्रीडन् वने केसरिशावयूथैः।**
**निषिद्ध्यमानोऽपि चिरं जनन्या व्याघ्रादिभिः सख्यमथोव्यधत्त॥७९॥**

**कृपा टीका**—चञ्चल और टेढ़ी अलकों वाला यह बालक बन में सिंह शावकों के साथ खेलने लगा। माँ के बार बार मना करने पर भी उसने सिंह, बाघ, चीते आदि बलिष्ट पशुओं के साथ अपनी मित्रता कर ली॥७९॥

**परश्वधक्रीडनकेन रेमे बालो विहायान्यपरिच्छदान् स्वान्।**
**अतो द्विजेन्द्रः परशूक्तपूर्वं रामेति नाम्ना सुतमाजुहाव॥८०॥**

**कृपा टीका**—बालक भार्गव अन्य अपने खिलौनों को छोड़कर परश्वध अर्थात् परशु (फरशे) में ही रमता और उसी से खेलता था। इसीलिए महर्षि जमदग्नि ने उसके राम नाम के पहले 'परशु' शब्द जोड़ दिया अर्थात् उसे 'परशुराम' कहने लगे॥८०॥

**स जानुपद्भिः प्रचलन् पृथिव्यां माद्यन्मुखाम्भोरुहकुन्तलालिः।**
**सुधासिचाव्यक्तरसाक्तवाचा रामोऽभिरामोऽथ बभूव पित्रोः॥८१॥**

**कृपा टीका**—कमल पर मंडराते हुए मतवाले भौंरों के समान मुख पर लटकते हुए घुँघराले केशों से युक्त वे बालक परशुराम पृथ्वी पर घुटनों से चलते हुए अपनी अमृतमयी तोतली बोली से माता पिता के लिए बहुत आनन्ददायक हुए॥८१॥

**क्रीडन् क्वचित् क्रीडितबालसिंहो विष्वग्विभाव्रीडितबालभानुः।**
**पीडिष्यमाणाखिलभूमिभारः पीडाकरो भूमिरुजां बभूव॥८२॥**

**कृपा टीका**—अपनी चतुर्दिक् फैलने वाली शरीरकान्ति से बालसूर्य को भी लज्जित करते हुए भविष्य में भूमि का भार हरने वाले बालक परशुराम वन में सिंहशावकों के साथ खेलते हुए ब्राह्मणद्रोही राजाओं के लिए अत्यन्त पीड़ाप्रद हुए॥८२॥

**तेजस्फुलिंगोऽन्वयभावसर्पिः संस्थापितः प्राङ्गणवेदिकायाम्।**
**राजद्रजोधूसरधूम्रदेहो धूमध्वजोऽभूत् स पितुश्चतुर्थः॥८३॥**

**कृपा टीका**—आँगन में खेलते हुए धूल से धूसरित धूम्र अर्थात् लाल एवं श्वेत

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आभा से युक्त बालक भार्गव तेजरूप स्फुलिंग मालामण्डित तथा वंशप्रभावरूप घृत से उद्दीप्त ऐसे प्राङ्गण की वेदिका पर विराजमान पिता जमदग्नि के चतुर्थ अग्नि जैसे बन गए॥८३॥

**विशेष**—अग्निहोत्री ब्राह्मण के पास गार्हपत्य, दक्षिणाग्नि तथा आहवनीयाग्नि सदा होते ही हैं। परशुराम में अग्नि के समस्त गुण होने से कवि की कल्पना ने इन्हें जमदग्नि का चतुर्थ अग्नि बना दिया।

**रिङ्गन् गविप्रांशुपलाशपद्भ्यां धावन् धरायां धृतिधामधूर्यः।**
**परश्वधक् क्रीडन् कोत्कचेताः क्षपां क्षपाटीं क्षपयाम्बभूव॥८४॥**

**कृपा टीका**—फरसे के साथ खेलने के लिए उत्सुक चित्तवाले बालक परशुराम ने आभा मय चरणकमलों से पृथ्वी पर रेंगते हुए तथा धैर्य धारण करनेवालों की धुरी पर स्थित होकर सहसा बालोचित लीला से दौड़कर धरा भगवती को कृतार्थ करते हुए राक्षसों की आसुरी रात्रि को नष्ट कर दिया॥८४॥

**स वृत्तचूलश्चलकाकपक्षो वीर्याग्निविप्लुष्टविपक्षकक्षः।**
**स्वधर्मसंरक्षणलब्धलक्ष्योऽलक्ष्यो द्विषां हृद्विलसद्दिधक्षः॥८५॥**

**कृपा टीका**—चूड़ाकरण संस्कार से सम्पन्न, चञ्चल काकपक्ष वाले तथा अपने पराक्रम के अग्नि में विपक्षरूप सूखे तृणसमूह को भस्म करने वाले सनातन धर्म के संरक्षण में लक्ष्यबद्ध एवं धर्मद्वेषियों को भस्म करने की इच्छा से युक्त हृदय वाले शिशु परशुराम बाल्यावस्था में भी शत्रुओं के लक्ष्य नहीं बन सके अर्थात् जानते हुए भी शत्रुगण उस अद्भुत बालक का कुछ भी नहीं बिगाड़ पाए॥८५॥

**तत्कर्णवेधं विदधे विधाता समुद्गिरन्मङ्गलभद्रसूक्तम्।**
**लोकोत्तराणां चरितानि नूनं लोकोत्तराण्येव भवन्ति भूमौ॥८६॥**

**कृपा टीका**—माङ्गलिक भद्रसूक्त का पाठ करते हुए ब्रह्माजी ने स्वयं बालक परशुराम का कर्णच्छेदन संस्कार सम्पन्न किया। निश्चित ही अलौकिक महापुरुषों के चरित्र पृथ्वी पर भी अलौकिक ही होते हैं, अर्थात्'होनहार बिरवान के होत चीकने पात।'॥८६॥

**तमक्षरं राममथाक्षरज्ञाः समागताः शिक्षयितुं सशिक्षाः।**
**अनेहसाल्पेन समध्यगच्छत् स नागरो निर्जरनागरीं ताम्॥८७॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—इसके अनन्तर वर्णमाला के वेत्ता अथवा अक्षरब्रह्म के ज्ञाता एवं शिक्षाशास्त्र के विशेषज्ञ ऋषिगण परशुराम को अक्षरज्ञान कराने के लिए उपस्थित हुए। उन चतुर बालकशिरामणि ने थोड़े ही समय में समस्तदेवनागरी लिपि का ज्ञान कर लिया॥८७॥

**इत्थं ककुप्कुञ्जरसंस्क्रियाभिः स संस्कृतो वैदिकसंस्कृतीड्यः।**
**दशार्धवर्षं वयसा निनाय बालो दशार्द्धेषु सपत्ननिष्ठः॥८८॥**

**कृपा टीका**—इस प्रकार वैदिक संस्कृति के लिए स्तुतियोग्य 'दशार्द्धेषु' अर्थात् पञ्चबाणधारी काम के शत्रु भगवान् शंकर में निष्ठा रखने वाले बालक परशुराम ने ककुप्कुञ्जर अर्थात् दश दिशाओं की संख्यानुसार गर्भाधान, पुंसवन, सीमन्तोन्नयन, जातकर्म, नामकरण, बहिर्निष्क्रमण, अन्नप्राशन,कर्णच्छेदन, चूड़ाकरण एवं लिप्यारम्भ-इन दश संस्कारों से सम्पन्न होकर अपनी अवस्था के पाँच वर्ष बिताए॥८८॥

**अथोपनिन्ये नयनाभिरामं रामं रमाकान्त कलाललामम्।**
**पित्रार्पिताशेषविपद्विरामं ब्रह्मद्रुहः संयति दग्धुकामम्॥८९॥**

**कृपा टीका**—इसके अनन्तर पिता जमदग्नि ने लक्ष्मीपति भगवान् विष्णु के चार कलारत्नों के संग्रह, सर्वसमर्पण करने वालों की विपत्तियों के विरामस्थान, युद्ध में ब्रह्मद्वेषियों को भस्म करने की इच्छा रखने वाले ऐसे नयनाभिराम बालक परशुराम का उपनयन संस्कार किया॥८९॥

**तस्यारभन्त व्रतबन्धकर्म ब्रह्माण इज्यापरिपूतदेहाः।**
**वेदा यथा मूर्तिधराधृतेहाः प्रदीप्तवैश्वानररम्यगेहाः॥९०॥**

**कृपा टीका**—इसके अनन्तर चेष्टावान् मूर्तिमान् वेद जैसे यज्ञ से पवित्र शरीर वाले जाज्वल्यमान अग्निदेवता के रमणीय मन्दिरस्वरूप वेदज्ञ ब्राह्मणों ने परशुराम जी का व्रतबन्ध कर्म प्रारम्भ किया॥९०॥

**आर्चीकिरार्चन्ननुवक्रतुण्डं शुण्डासमुत्पाटितवैरिमुण्डम्।**
**तमेकदन्तं यशसालसन्तं हेरम्बमम्बाङ्कगतं हसन्तम्॥९१॥**

**कृपा टीका**—आर्चीकिः आर्चत्-आर्चीकि अर्थात् ऋचीक् के पुत्र जमदग्नि ने, अपने सूँड के द्वारा जिन्होंने अपने शत्रुओं के मुण्डों को उखाड़ लिया है ऐसे एक

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दन्त वाले परम यशस्वी माँ पार्वती की गोद में विराजमान हँसते हुए वक्रतुण्ड भगवान् गणपति की पूजा की॥९१॥

**अपूपुजत्पूरितमद्भिरद्धा प्रदीपकोद्भासिमुखं सुकुम्भम्।**
**अनन्तरं मङ्गलवेदिकायां संस्थापयामास मुनिर्हुताशम्॥९२॥**

**कृपा टीका**—महर्षि जमदग्नि ने दीपक के प्रकाश से प्रकाशित अग्रभागवाले मंगलजल से पूर्णकलश का पूजन किया। इसके अनन्तर मंगलवेदिका पर उन्होंने भगवान अग्निदेव की स्थापना की॥९२॥

**चतुर्मुखस्तत्र चतुर्भिरास्यैर्ब्रुवञ्छ्रुतिं स्वार्पितमूर्तिना तम्।**
**यज्ञोपवीतेन च यज्ञमूलं द्विजन्मलक्ष्म्या समलञ्चकार॥९३॥**

**कृपा टीका**—उस उत्सव में ब्रह्माजी ने स्वयं प्रकट होकर चारों मुखों से वेदपाठ करते हुए अपने ही स्वरूप से अलंकृत यज्ञोपवीत धारण कराकर समस्त यज्ञों के मूल परशुराम जी को ब्राह्मणोचित शोभा से अलंकृत कर दिया अर्थात् ब्रह्माजी ने परशुराम जी को स्वयं यज्ञोपवीत पहनाया॥९३॥

**ततः समाविष्कृतसौम्यमूर्तिः पूर्तिः सतां मञ्जुमनोरथानाम्।**
**गायत्रिदीक्षां प्रदिदेश तस्मै शिवः शिवायास्य भृगूद्वहाय॥९४॥**

**कृपा टीका**—इसके अनन्तर सज्जनों के सुन्दर मनोरथों की पूर्तिस्वरूप भगवान् शंकर ने जगत् के कल्याण के लिए अपनी सौम्य मूर्ति प्रकट करके भृगुवंश के उन्नायक परशुरामजी को गायत्री मंत्र की दीक्षा दी॥९४॥

**स मातृमान् वै पितृमान् महस्वानाचार्यवान् वन्दितपादपद्मः।**
**विभ्रद् विभां ब्रह्ममयीं विरेजे स रौरवीको जनरौरवघ्नः॥९५॥**

**कृपा टीका**—इस प्रकार भक्तों के रौरव नरक को नष्ट करने वाले परशुराम जी रेणुका जैसी श्रेष्ठ माता, जमदग्नि सरीखे प्रशस्त पिता तथा साक्षात् शिव को ही आचार्यरूप में प्राप्त कर रुरु मृग का चर्म पहने हुए ब्राह्मणोचित प्रकाश धारण करते हुए बहुत शोभित हुए॥९५॥

**स ब्रह्मचर्यव्रतलब्धदीक्षो गुरुपदेशार्जितशिष्यशिक्षः।**
**भिक्षां जिघृक्षुर्जननीं जगाम यथान्नपूर्णां भगवानुपेन्द्रः॥९६॥**

**कृपा टीका**—भगवान् शंकर से ब्रह्मचर्यव्रत की दीक्षा लेकर उनके उपदेश से

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शिष्योचित्त शिक्षा प्राप्त कर बटुवेषधारी परशुरामजी भिक्षा ग्रहण करने की इच्छा से माँ रेणुका के समीप उसी प्रकार गए जैसे अन्नपूर्णा से भिक्षा लेने के लिए भगवान् वामन पधारे थे।।९६।। यहाँ तक उपजाति छन्द है।

**परिधाय स रौरवीं त्वचं, धृतमौञ्जीमयमेखलो बटुः।**
**जननीनयनाश्रुभैक्ष्यवान् सुमनाः शम्भुमुपेयिवान् गुरुम्।।९७।।**

**कृपा टीका**—रौरवी त्वचा एवं मौञ्जी मेखला धारण करके ब्रह्मचारी परशुराम माता रेणुका के नयनाश्रुओं की भिक्षा लेकर प्रसन्न मन से अपने गुरुदेव शंकर भगवान् के पास आ गए।।९७।। वैतालिक।

**राजत् पलाशतरुदारुणदारुदण्डो**
**वीर्यातिरेकपविकल्पितबाहुदण्डः।**
**श्रीचन्द्रचूडचरणार्पितदेहदण्डो**
**रामो यतीव विबभौ विलसत् त्रिदण्डः।।९८।।**

**कृपा टीका**—श्रेष्ठ पलाशवृक्ष के काष्ठ से निर्मित दारुदण्ड तथा पराक्रम के अतिरेक से सुदृढ़ वज्र जैसे बाहुदण्ड एवं श्रीचन्द्रचूड़ शिवजी के पूजन से पवित्र देहदण्ड इस प्रकार इन तीन दण्डों को धारण करते हुए परशुराम जी साक्षात् त्रिदण्डी संन्यासी जैसे सुशोभित हुए।।९८।। वसन्ततिलका।

**दैवैर्नन्दनपुष्पवर्षिभिरलं सम्पूजितः पुण्यवान्**
**सानन्दं मुनिनागकिन्नरनरैस्तोष्टूय्यमानो मही।**
**आपृच्छ्यद्विजदम्पती स्वपितरौ कैलाशधामा ययौ**
**गायत्र्यं व्रतमास्थितः स भगवान् वीरव्रती भार्गवः।।९९।।**

**कृपा टीका**—अब ब्रह्मचारी बटु भार्गवश्रेष्ठ भगवान परशुराम ब्राह्मण दम्पती अपने माता पिता से आज्ञा लेकर नन्दनवन के पुष्प की वर्षा करने वाले देवताओं से पूजित होते हुए तथा आनन्दपूर्वक मुनि, नाग, किन्नर एवं मनुष्यों द्वारा बारम्बार स्तुति के विषय बनाए जाते हुए गायत्रीव्रत की मर्यादा के अनुसार गुरुकुलवास करने के लिए प्रसन्नतापूर्वक कैलासधाम आए।।९९।। शार्दूलविक्रीडित।

**जगन्मङ्गलो धर्मरक्षैकदीक्षः सवीरव्रती छात्रशिक्षाप्रतीक्षः।**
**बभौ भार्गवो देहधारीव धर्मो महोवर्मिणो वर्णिनो वर्चसाढ्यः।।१००।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—जगत् के मङ्गलस्वरूप अथवा जगत् के मङ्गलस्थान सनातनधर्म की रक्षा में एकमात्र दीक्षित, क्षत्रियों को शिक्षा देने के लिए समय की प्रतीक्षा कर रहे ब्रह्मतेजसम्पन्न, ब्रह्मवर्चस् ही जिसका कवच है ऐसे शरीरधारी ब्रह्मचारी के धर्म की भाँति भृगुनन्दन परशुराम उस समय अपनी स्वाभाविक दीप्ति से चमत्कृत हो रहे थे॥१००॥ भुजंगप्रयात।

**इत्थं शुभे भार्गवराघवीये, भव्ये महाकाव्य उदारवृत्ते।**
**सर्गो द्वितीयः कविरामभद्राचार्यप्रणीते भवताच्छ्रियै नः॥१०१॥**

**कृपा टीका**—इस प्रकार महाकवि रामभद्राचार्य द्वारा प्रणीत साहित्यगुणोंके कारण श्रेष्ठ, मनोहर छन्दों से युक्त कल्याणप्रद 'भार्गवराघवीयम्' नामक महाकाव्य में निबद्ध यह द्वितीय सर्ग हमें श्री प्रदान करे॥१०१॥ उपजाति।

**इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामिरामभद्राचार्यप्रणीते श्रीभार्गवराघवीये महाकाव्ये 'दीक्षाख्यः' द्वितीयः सर्गः।**

**॥श्रीराघवः शन्तनोतु॥**

इस प्रकार धर्मचक्रवर्ती महामहोपाध्याय, श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामी रामभद्राचार्य द्वारा प्रणीत 'श्रीभार्गवराघवीय महाकाव्य' में 'दीक्षा' नामक द्वितीय सर्ग सम्पन्न हुआ।

॥श्रीराघवः शन्तनोतु॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीमद्राघवो विजयते ॥

# अथ तृतीयः सर्गः

ततश्चिकीर्षुर्ननुलोकसंग्रहं निराचिकीर्षुः कुभुजामसद्ग्रहम्।
समुद्दिधीर्षुर्द्विजधर्मविग्रहं जगाम रामो गिरिमैश्वरं गृहम्॥१॥

(यह आठ श्लोकों का एकान्वयी महाकुलिक है, अर्थात् प्रथम श्लोक में वर्णित 'ऐश्वर्यं गिरिम्' के ही विशेषण रूप में सात श्लोक कहे गए हैं और प्रथम श्लोक में वर्णित रामः 'कर्ता' जगाम 'क्रिया' का आठवें श्लोक के अन्त में अन्वय समझना चाहिए। यह सर्ग वंशस्थ छन्द प्रधान है।

**कृपा टीका**—गायत्री व्रत दीक्षा के अनन्तर भृगुवर परशुराम निश्चर्यपूर्वक लोकसंग्रह करने की इच्छा करते हुए दुष्ट राजाओं के असद्ग्रह अर्थात् शोषण के निराकरण के इच्छुक होते हुए एवं वेदविहित ब्राह्मण धर्मविग्रह का उद्धार करने की इच्छा करते हुए भगवान् शंकर के निवासस्थान कैलास पर्वत पर गए॥१॥

**विशेष**—तात्पर्य यह है कि गुरुकुल वास से ही पूर्वोक्त तीनों उद्देश्यों की पूर्ति हो सकती है। विद्या के बिना लोकसंग्रहादि संभव नहीं हो सकेंगे।

समानसं मानसरोगहारिणं सदालसच्छैलसुताविहारिणम्।
स्वसेविनां जन्मजरापहारिणं स्वकूटकूटातपतापवारिणम्॥२॥

**कृपा टीका**—जो सदैव मानससरोवर से युक्त तथा मानस रोगों को हरण करता रहता है, जहाँ सदैव पार्वतीविहारी शिवजी का निवास रहता है, जो अपने सेवकों के जन्म, जरा (बुढ़ापा) आदि दुःखों को समाप्त करता रहता है तथा जो अपने शिखरों से मनुष्य के मोहजनित आतप अर्थात् पीड़ा एवं त्रिविध तापों का हरण करता था॥२॥

मुनीन्द्रयोगीन्द्रसुरेन्द्रसेवितं तपस्विवर्चस्विमनस्विभावितम्।
प्रफुल्लपाथोजपरागपावितं सुकोकिलामञ्जुलरावरावितम्॥३॥

**कृपा टीका**—श्रेष्ठ मुनिगण योगिवर्य तथा इन्द्रादि देवता जिसकी सेवा करते हैं, तपस्वी, तेजस्वी और मनस्वी महानुभाव जिसकी भावना करते हैं जो मानस

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सरोवर के विकसित कमलों के पराग से पवित्र रहता है और जो सुन्दर कोकिलाओं की मंगलध्वनि से सदैव झंकृत रहता था॥३॥

**पिनाकिचूडेन्दुमयूखमालिकासुधासमाकृष्टचकोरकूजितम्।**
**अनेक सिद्धेश्वरनागकिन्नरामरेन्द्रगन्धर्वपुरन्ध्रिपूजितम्॥४॥**

**कृपा टीका**—जो भगवान् शंकर के मुकुट में विराजमान चन्द्रमा की किरणों से आकृष्ट चकोरों के स्वर से कूजित रहता है तथा अनेक सिद्ध, नाग, किन्नर, श्रेष्ठ देवता एवं गन्धर्वों की बल्लभाएँ जिसकी पूजा करती थीं॥४॥

**तपः प्रभावामलमूर्तिभूसुराग्निहोत्रधूमावलि धूम्रपल्लवम्।**
**मुनीन्द्रबालोच्चरितश्रुतिस्वरप्रमुष्टपक्षीन्द्ररवं रसावहम्॥५॥**

**कृपा टीका**—जहाँ के वृक्षों के पल्लव तपस्या के प्रभाव से निर्मल मूर्ति वाले ब्राह्मणों के अग्निहोत्र के धूम से धूम्र हो चुके हैं तथा जहाँ मुनिबालकों की वेदध्वनि से पक्षियों का स्वर भी दब चुका है और जो सर्वथा रस अर्थात् परमानन्द प्रदान करता रहता था॥५॥

**क्वचिद्भवालोकविशोकमानसाप्सरः समारब्धनरत्ननर्तनम्।**
**क्वचिन्महादेवपदाम्बुजासवप्रमत्तरोलम्बकदम्बकीर्तनम्॥६॥**

**कृपा टीका**—जिसमें कहीं तो भगवान् शङ्कर के दर्शनों से शोक रहित मन वाली अप्सराओं द्वारा दिव्य नर्तन किया जा रहा है और कहीं महादेव जी के चरणकमल के प्रेमपराग से मतवाले भ्रमरों के समूह द्वारा कीर्तन हो रहा था॥६॥

**क्वचिद्भवानीभवभावितव्रतप्रक्लृप्तवैरोचनचित्रताण्डवम्।**
**क्वचिद्सहस्रार्जुनबाहुसञ्चलत्सरः पयःपूजितपार्वतीशिवम्॥७॥**

**कृपा टीका**—जहाँ कहीं पर भवानीपति भगवान् शङ्कर की प्रसन्नता रूप व्रतधारण करके बाणासुर ताण्डव नृत्य कर रहा था तो कहीं सहस्रार्जुन की बाहुओं से उछाले जाते हुए मानस सरोवर के जल से भगवान् शङ्कर की पूजा की जा रही थी॥७॥

**क्वचिन्मृडानीमृगराजचुम्बितस्मितेभ वक्त्राननमुक्तमोदकम्।**
**क्वचित् कुमारासनबर्हचन्द्रिका चकोरसम्भूषितभावभोगिकम्॥८॥**

**कृपा टीका**—जहाँ कहीं पर पार्वती जी के सिंह द्वारा प्रेम से दुलार करने पर

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गजमुख गणपति के मुख से लड्डू गिर रहा था तो कहीं कार्तिकेय के वाहन मयूर पंख की चन्द्रिका से आकृष्ट चकोरों द्वारा भगवान् शङ्कर के सर्प का अलङ्कार किया जा रहा था—ऐसे कैलास पर्वत पर भगवान् परशुराम गए॥८॥

**मरालपारावतबर्हिबल्गुवाग्रथाङ्गकारण्डवकीरसारिकाः।**
**शिवेलया यत्र खगाः सदाशिवं समीडते शान्ततनुं सनातनम्॥९॥**

**कृपा टीका**—जिस कैलास पर्वत पर हंस, कबूतर, मधुरवाणी वाले चक्रवाक् कारण्डव (हंस विशेष) तोता मैना आदि सुन्दर पक्षी कल्याणकारिणी वाणीसे सनातन सदाशिव का स्तवन कर रहे थे॥९॥

**तमालतालीदलनिम्बशालकैरशोककादम्बरसालबिल्वकैः।**
**द्रुमैर्लसत् पुष्पफलाग्रपल्लवैः कृतातपत्रं विबुधोत्तमैरिव॥१०॥**

**कृपा टीका**—तमाल, ताल, नीम, शाल, अशोक, कदम्ब, आम्र तथा बिल्व आदि पुष्प फलों से युक्त वृक्षों द्वारा श्रेष्ठ देवताओं की भाँति जिसके ऊपर अपने पल्लवों से छत्रछाया की गयी थी॥१०॥

**समस्तसौभाग्यकरं दुरासदं कुयोगिनां शम्भुजुषां प्रसाददम्।**
**निरीक्ष्यकैलासगिरिं गिरातिगं मनोऽपि रामस्य गतं रिरंसितम्॥११॥**

**कृपा टीका**—समस्त सौभाग्यों के हेतु तथा कुयोगी अर्थात् विषयीजनों के लिए अत्यन्त दुष्प्राप्य एवं शिवभक्तों के लिए प्रसन्नता के कारण स्वरूप ऐसे वाणी के वर्णन से अतीत कैलासपर्वत को देखकर परशुराम जी का मन भी रमने की इच्छा करने लगा॥११॥

**अथप्रतीतः प्रयतः पवित्रितैः पवित्रपाणिर्भृगुवंशवर्धनः।**
**गणेरितद्वा द्विजराजशेखरं ददर्श कैलासगिरौ गिरीश्वरम्॥१२॥**

**कृपा टीका**—इसके अनन्तर शास्त्राध्ययन के लिए उपयोगी आत्मविश्वास से युक्त परमसंयमी कुशानिर्मित पवित्रियों से पवित्र हाथ वाले परशुराम जी ने शिवगणों से संकेतित द्वार से प्रविष्ट होकर कैलास पर्वत पर चन्द्रमौलि गिरीश्वर भगवान् शंकर के दर्शन किए॥१२॥

**हिमालये लोध्रमिवात्तपुष्पकं यथाधिधारं शशिनं सुपाथसः।**
**मृणालशैवालमरालमण्डितं यथा सितं पङ्कजमामरे सरे॥१३॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—परशुराम जी ने भगवान् शंकर की हिमालय पर्वत पर स्थित पुष्पों से लदे हुए लोध्र वृक्ष के समान तथा भगवती गंगा की धारा में अठखेलियाँ कर रहे पूर्णचन्द्र के समान एवं मानसरोवर में विकसित मृणाल (कमल दण्ड) शैवाल तथा राजहंस से सुशोभित श्वेतकमल के समान भावनाएँ की॥१३॥

**त्रिलोचनं साधकशोकमोचनं जटाधरं जह्नुसुताधरं हरम्।**
**उमावरं दत्तवरं वरावरं वटेश्वरं भूतिकरं महेश्वरम्॥१४॥**

**कृपा टीका**—जो सूर्य चन्द्र तथा अग्निरूप तीन नेत्रों से त्रिलोचन संज्ञा प्राप्त कर रहे थे तथा साधकों के शोक नष्ट कर रहे थे, जो जटा एवं गंगाजी को धारण किए हुए थे, जो पार्वतीपति, प्रसिद्ध वरदानी एवं श्रेष्ठों के भी श्रेष्ठ ऐश्वर्यवान् वटवृक्ष के तले विराजमान भवभयहरण करने वाले तथा महेश्वर भी थे॥१४॥

**सुखं समासीनमकुण्ठवर्चसं शरीरिणं शान्तरसं रसारसम्।**
**भयङ्करं चाप्यभयङ्करं सतां शुभङ्करं शङ्करमादिशङ्करम्॥१५॥**

**कृपा टीका**—भार्गव ने सुखासन से आसीन अकुण्ठित बुद्धि वाले मूर्तिमान शान्त रसस्वरूप भूलोक को आनन्द देनेवाले दुष्टों के लिए भयङ्कर एवं संतों के लिए अभयङ्कर सभी शुभों के मूलकारण समस्तकल्याणनिधि आदिदेव शङ्कर को निहारा॥१५॥

**तुषारकर्पूरसुगौरविग्रहं ग्रहर्क्षतारादितिपुत्रनिग्रहम्।**
**समुल्लसच्छैलसुतापरिग्रहं समस्तकल्याणगुणैकसंग्रहम्॥१६॥**

**कृपा टीका**—तुषार अर्थात् बर्फ तथा कपूर के समान श्वेत विग्रहवाले मङ्गल ग्रह एवं आर्द्रा नक्षत्र, तारकामण्डल एवं दितिपुत्र त्रिपुरासुर का निग्रह करने वाले अथवा नवों ग्रहों, समस्त नक्षत्रों, सभी तारागण तथा अदितिपुत्र इन्द्र का भी निग्रह करने वाले, पार्वतीरूप श्रेष्ठ पत्नी से सुशोभित सभी कल्याणगुणों के एकमात्र संग्रह भगवान शंकर को भार्गव ने देखा॥१६॥

**विशेष**—शिवपुराण में यह कथा प्रसिद्ध है कि भगवान् शंकर की इच्छा के विरुद्ध कैलास में प्रवेश करने पर शिवजी के क्रोध से इन्द्र भस्म हो गए फिर बृहस्पति ने स्तुति से शिवजी को प्रसन्न करके उनसे इन्द्र को जीवनदान दिलाया। इसीलिए

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बृहस्पति को जीव कहा जाता है—जीवयति इति जीवः अर्थात् जो जिलवाये वह जीव है।

दधानमब्जासनमाब्जशासनं प्रपन्नकीनाशविलासनाशनम्।
गजेन्द्रकृत्यावसितं विषाशनं वृषासनं भग्नभवाब्धिवासनम्।।१७।।

**कृपा टीका**—ब्रह्मा के भी शासक शरणागतों को यमराज की मृत्युलीला से छुड़ाने वाले गजचर्म धारण किए हुए विषभक्षक, संसार-सागर की वासनाओं को नष्ट करने वाले-ऐसे वृषकेतु भगवान् शंकर को परशुराम ने पद्मासन पर आसीन देखा।।१७।।

विभूतिभासापरिभासुरंसुरं सुरेन्द्रवन्द्यं शिशुचन्द्रमेदुरम्।
मनोजमारं घनसारसुन्दरं फणीन्द्रहारं भवसिन्धुमन्दरम्।।१८।।

**कृपा टीका**—भस्म की प्रभा से चमत्कृत सुरेन्द्र द्वारा वन्दित एवं शिरस्थ चन्द्रमा की किरणों से मनोहर लग रहे, कामदेव के शत्रु कपूर के समान सुन्दर सर्प को हार रूप में धारण किए हुए संसार सागर के लिए मन्दराचल स्वरूप देवाधिदेव शंकर को परशुराम ने नेत्रों का विषय बनाया।।१८।।

त्रिभिस्स्वनेत्रैः शशिसूर्यपावकैः शुचं तमस्तोममघाटवीं नृणाम्।
हरं हरन्तं हरिहारहर्षिणं कृपासुधावर्षिणमाधिधर्षिणम्।।१९।।

**कृपा टीका**—चन्द्र, सूर्य, अग्नि रूप अपने तीन नेत्रों से क्रमशः चन्द्र से लोगों के ताप, सूर्य से अज्ञानान्धकार तथा अग्नि से भक्तों के पापवन का विध्वंस करते हुए, विष्णु एवं वैष्णवों को आनन्द देनेवाले, मनोव्यथा के नाशक, कृपासुधा के वर्षी भगवान् ही का परशुराम ने अवलोकन किया।।१९।।

जटाकलापेसितमालिकामिव स्वरापगां सङ्कुलयन्तमादरात्।
सुधामयूखं निटिले निशाकरं कृपाप्रतीकं दधतं दयापरम्।।२०।।

**कृपा टीका**—अत्यन्त आदर से भगवती गंगाजी को जटाजूट में श्वेत मौक्तिक माला की भाँति धारण करते हुए तथा कृपा के प्रतीकरूप अमृतकिरण बालचन्द्र को अपने मस्तक पर सुशोभित करते हुए ऐसे दयालु शिव को भृगुवर्य ने देखा।।२०।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**त्रिलोकशोकक्षयहेतुसुस्मितस्फुरत्प्रभारञ्जितसुद्विजावलिम्।**
**कलत्कपोलारुणपल्लवाधराहिकुण्डलालङ्कृतपञ्चवक्त्रकम्।।२१।।**

**कृपा टीका**—जिनकी दन्तावलि तीनों लोकों के शोक के क्षय के एकमात्र कारण मन्द-मन्द हास से स्फुरित होती हुई कान्ति से अभिरञ्जित हो रही थी—ऐसे सुन्दर कपोल, अरुण पल्लव के समान अधर एवं सर्पकुण्डल से मण्डित पञ्चमुख भगवान् शंकर को परशुराम ने प्रेमपूर्वक निहारा॥२१॥

**करे त्रिशूलं भवशूलमोचनं भुजङ्गराजं वलयायवासुकिम्।**
**विधायविद्याधरनागसुन्दरीप्रगीतदारं दरकुन्दसुन्दरम्।।२२।।**

**कृपा टीका**—विद्याधरो तथा नागों की सुन्दरियों द्वारा जिनकी सहचरिणी पार्वती की प्रशंसा की जाती है, ऐसे संसार के शूलमोचन त्रिशूल को हाथ में तथा भुजङ्गराज वासुकि को कङ्कण के लिए कलाई में धारण करके स्थित शंख और कुन्दपुष्प के समान सुन्दर भगवान शिव को परशुराम ने देखा॥२२॥

**लसत्परिष्वङ्गमनङ्गमर्दनं मृणालमृद्व्या गिरिराजकन्यया।**
**सुवर्णवल्यावलितं सुरद्रुमं तिरस्करिष्यन्तममोघदर्शनम्।।२३।।**

**कृपा टीका**—मृणाल के समान कोमल हिमाचल राजकन्या पार्वती द्वारा सुशोभित आलिङ्गन वाले तथा उसी शोभा से सुवर्ण की लता से आलिङ्गत कल्पवृक्ष को भी तिरस्कृत करने वाले कामशत्रु अमोघदर्शन सदाशिव का परशुराम ने साक्षात्कार किया॥२३॥

**गले गरं गर्वहरं हरिद्विषां पिनाकपाणिं प्रणतार्तिनाशनम्।**
**व्यभावयद् राजतशैलमीश्वरं सनीलकण्ठं भृगुनन्दनस्तदा।।२४।।**

**कृपा टीका**—विष्णुद्वेषियों के गर्वहरने वाले पिनाकपाणि भक्तों के क्लेशनाशक, गले में विषधारण किए हुए भगवान् शंकर को उस समय परशुराम ने नीलकण्ठ पक्षी से युक्त चाँदी का पर्वत ही समझा॥२४॥

**कुमारसंवाहितपादपङ्कजं सदम्बहेरम्बकृतप्रदक्षिणम्।**
**स दक्षिणामूर्तिममूर्तिमव्ययं व्यलोकयल्लुब्धदृशा तृषापहम्।।२५।।**

**कृपा टीका**—कार्तिकेय जी जिनके चरणकमल दबा रहे थे एवं श्रेष्ठ मातृभक्त श्रीगणपति जिनकी परिक्रमा कर रहे थे, ऐसे अनुपम मूर्ति वाले अविनाशी एवं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

संसार की तृष्णा को दूर करने वाले दक्षिणामूर्ति भगवान् शंकर को परशुराम जी ने लुब्धनयनों से निहारा॥२५॥

ललाममाधुर्यसुधाभिरामकं
ललाममाधुर्यसुधाभिरामकम्।
ललाममाधुर्यसुधाभिरामकं
ललाममाधुर्यसुधाभिरामकम्॥२६॥

**कृपा टीका**—जो त्रिपुण्ड्र की माधुरी से युक्त थे तथा जिनके श्रीराम अभीष्टदेव थे तथा जो बालचन्द्ररूप आभूषण की शोभा की धुरी को धारण कर रहे थे और उसके उत्सव से रमणीय थे जो प्रधानता की शक्ति से धर्मधुरन्धरों की रमणीयता को सुरक्षित कर रहे थे और जो धर्मस्वरूप वृषध्वज की शोभा की मधुरता के तेज से श्रीरामचन्द्र की शरणागति से संयुक्त थे, इस प्रकार के शिव़जी को परशुरामजी ने सानन्द निहारा॥२६॥

कपालमालाविकरालविग्रहं भुजङ्गहारं भुजगोपवीतिनम्।
विचित्रवेशं विधिविष्णुवन्दितं गृहीतढक्कं भवभोगिभैरवम्॥२७॥

**कृपा टीका**—गले में मुण्डमाला धारण किए हुए विकराल शरीर सर्प के हार से समलङ्कृत सर्पमय यज्ञोपवीत धारण किए हुए विचित्र वेष से सुसज्जित, ब्रह्मा एवं विष्णु से वन्दित, डमरू ग्रहण किए हुए, संसार के भोगों में आसक्त लोगों के लिए भयंकर भगवान सदाशिव के परशुरामजी ने दर्शन किए॥२७॥

अघोरमप्यासुरघोरदर्शनं सदा सकामं ह्यपि कामकर्शनम्।
अतीतभूतं ननु भूतभूधरं ह्यनाथमप्येतमनाथभीहरम्॥२८॥

**कृपा टीका**—अघोर अर्थात् कोमल स्वभाव होकर भी असु अर्थात् प्राणों में रमण करनेवाले देहाभिमानियों एवं असुरों के लिए भयंकर दर्शन देनेवाले निरन्तर सकाम अर्थात् भगवद्दर्शन की कामना से युक्त तथा निजचरणसेवा की कामना से युक्त भगवती पार्वती से युक्त होकर भी कामादि विकारों के नाशक, पञ्चभूतों से अतीत होकर भी भूतगणरूप पृथ्वी को धारण करनेवाले अनाथ अर्थात् अकार के वाच्य भगवान को ही नाथ मानते हुए भी अनाथ अर्थात् सांसारिक दृष्टि से असहायजनों की भय विडम्बना को दूर करनेवाले सकल विरुद्ध धर्माश्रय भगवान शंकर के परशुराम जी ने दर्शन किये॥२८॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**अचेतनं चापि निसृष्टचेतनं अकेतनं चापि वृषेशकेतनम्।**
**असंश्रयं चापि समग्रसंश्रयं असंशयं चापि समस्तसंशयम्॥२९॥**

**कृपा टीका**—(यहाँ प्रायशः महाकवि की प्रातिभचातुरी से श्लेषगर्भित विरोधाभास दर्शनीय है) अचेतन अर्थात् भगवान् वासुदेव से प्राप्त चेतना सम्पन्न होकर भी विशिष्ट चेतना, सर्वज्ञ शक्ति से युक्त, अकेतन अर्थात् विशेष गृह में अनासक्त होकर भी श्मशान जैसे सर्वदुर्गम गृह में रहनेवाले नन्दीश्वर की ध्वजा से युक्त, स्वयं संशयरहित होकर भी सामान्य लोगों के लिए सभी संशयशील उपकरणों से धारण किए हुए अंसश्रय अर्थात् सर्वव्यापक होने पर भी किसी निवासविशेष में न रहते हुए भी सभी प्राणियों के एकमात्र निवास स्थान भगवान् शंकर को परशुरामजी ने देखा॥२९॥

**पवर्गक्लृप्तं ह्यपवर्गदं शिवं सभोगिनं चापि विभोगवर्जितम्।**
**कलत्रिणं चापि कलत्रिमर्दनं पुरस्थितं चापि पुरार्दनं हरम्॥३०॥**

**कृपा टीका**—यह छन्द भी विरोधाभास की छटा से सुसज्जित है—पवर्ग अर्थात् प (पार्वती) फ (फणीन्द्र) ब (बालेन्दु) भ (भस्म) म (मन्दार) से युक्त होकर भी अपवर्ग अर्थात् (प=पाप-पुण्य, फ=फल, ब=बन्धन, भ=भव-भय, म=मरण) इन पवर्ग घटित पाँचों दोषों से रहित मोक्ष देनेवाले परम कल्याणमय, भोगी अर्थात् सर्प से युक्त होकर भी विश्व के भोगों से सर्वथा दूर कलत्र अर्थात् पार्वती जैसी पत्नी से युक्त होकर भी कलत्रिमर्दन अर्थात् काम, क्रोध एवं लोभ-इन त्रिदोषों को नष्ट करनेवाले संसारासक्त लोगों को दण्ड देनेवाले काशीपुरी में स्थित होकर भी त्रिपुरासुर के संहर्ता श्रीहर के भगवान् परशुराम ने दर्शन किए॥३०॥

**निरीक्ष्य दृग्स्वस्त्ययनं गुणायनं सुरायणं योगयुजां परायणम्।**
**शिवं शिवालिङ्गितवामविग्रहं निराग्रहं मोदमवाप भार्गवः॥३१॥**

**कृपा टीका**—इस प्रकार पूर्व के उन्नीस वंशस्थ वृत्तों से वर्णित नेत्रों के लिए स्वस्त्ययन स्वरूप समस्त कल्याण गुणगणों के आगार, सभी देवताओं के आश्रय तथा योगिजनों के परम्परायण वामभाग में विराजमान शिवा श्रीं पार्वती से आलिंगित ऐसे भगवान् शङ्कर को निर्निमेष नयनों से निहारकर श्री परशुराम जी ने परम प्रसन्नता प्राप्त की अर्थात् वे बहुत प्रसन्न हुए॥३१॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**जहौ बटुर्वाटपरिश्रमं भ्रमं शिवं समासाद्य गुरुं गिरीश्वरम्।**
**वनाग्नितप्तः कलभस्तृषाकुलः सुखीव सम्प्राप्यसुधासरोवरम्॥३२॥**

**कृपा टीका**—विधिवशात् अमृत सरोवर को प्राप्तकर सुखी हुए—वनाग्नि से संतप्त कलभ अर्थात् हाथी के बच्चे की भाँति वटुवेषधारी परशुराम जी ने भी गुरुरूप में गिरीश्वर भगवान् शंकर को सुगमता से प्राप्त कर मार्ग का श्रम समाप्त कर लिया अर्थात् उनकी सम्पूर्ण थकावट दूर होगयी॥३२॥

**प्रणम्य तं योगिदुरापदर्शनं सुदर्शनं प्रीणितसत्सुदर्शनम्।**
**अथोपसन्नः ससमित्करोहरं गुरुर्गरीयान् हि हरेरपि स्मृतः॥३३॥**

**कृपा टीका**—इस दर्शन के अनन्तर योगियों के लिए भी जिनका दर्शन बहुत ही कठिन है ऐसे सुन्दर आकृति वाले तथा सुदर्शन चक्रधारी भगवान् नारायण को संतुष्ट करने वाले भूतभावन शङ्कर को प्रेमपूर्वक प्रणाम करके श्री परशुराम जी ने समिधा हाथ में लेकर गुरूपसत्ति की अर्थात् शिवाजी को गुरु रूप में वरण करके उनके समीप बैठ गए क्योंकि—सद्गुरु भगवान् श्रीहरि की अपेक्षा भी श्रेष्ठ कहे गए हैं॥३३॥

**विशेष— तद्विज्ञानार्थं सद्गुरुमेवाभिगच्छेत्**
**समित्पाणिं श्रोत्रियं ब्रह्मनिष्ठम्** —मुण्डकोनिषद् २/१२

भगवती श्रुति के अनुसार ब्रह्मविज्ञान के लिए वटु हाथ में समिधा लेकर श्रोत्रिय ब्रह्मनिष्ठ सद्गुरु की शरण लेता है। संयोग से परशुराम जी को भगवान शिव जैसे सर्वश्रेष्ठ सद्गुरु की प्राप्ति हुई है।

**सनीलकण्ठस्तमपूर्वदर्शनं द्विजात्मजं ब्राह्मणशत्रुकर्शनम्।**
**सभाजयामास वटुं वटेश्वरो विनम्रता हि प्रकृतिर्महात्मनाम्॥३४॥**

**कृपा टीका**—अनन्तर उन नीलकण्ठ बटेश्वर भगवान् शिव ने उन अपूर्व आकृति वाले, ब्राह्मण-शत्रुओं के नाशकर्ता ब्राह्मणजमदग्नि के सुयोग्य पुत्र श्रीपरशुराम का अपूर्व स्वागत किया क्योंकि विनम्रता ही महात्माओं की प्रकृति होती है॥३४॥

**विनीतवेशं विमलं विधुप्रभं प्रलम्बबाहुं दृढपीनवक्षसम्।**
**मृगेन्द्रसत्वं वृषभेन्द्रकन्धरं शरीरवन्तं प्रथमं यथाश्रमम्॥३५॥**

अब छः श्लोकों में महाकवि द्वारा परशुराम जी की वटुवेश की छवि प्रस्तुत

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

की जा रही है—

**कृपा टीका**—विनम्र वेश धारण किए हुए निर्मल विधु अर्थात् श्रीवत्सलाञ्छन भगवान् नारायण की कान्ति से सुशोभित, आजानुबाहु दृढ़ एवं विशाल वक्ष से युक्त, सिंह के समान पराक्रम वाले वृषभ जैसे मांसल स्कन्ध से युक्त शरीरधारी प्रथम अर्थात् ब्रह्मचर्याश्रम जैसे श्रीपरशुराम को शशांकशेखर शिव ने शिष्यरूप में स्वीकारा॥३५॥

**लसल्लाटे भसितं भवार्चितं प्रविभ्रतं तं ननु संशितव्रतम्।**
**महानुभावं वरवर्णवर्णिनं प्रदीप्तवैश्वानरदेहमद्भुतम्॥३६॥**

**कृपा टीका**—ललाट पर भगवान् शंकर की पूजा में उपयुक्त सुन्दर भस्म धारण करते हुए ब्रह्मचर्योचित कठोर व्रत से सम्पन्न, महान प्रभाव वाले जाज्वल्यमान अग्नि जैसे शरीर की शोभा से युक्त ऐसे उस अद्भुत गौर ब्रह्मचारी को शिवजी ने शिष्यरूप में स्वीकारा॥३६॥

**नवीनराजीवसमानलोचने कदाप्यविद्धे युवतीकटाक्षतः।**
**कपोलदृग्कोणसमारुणी प्रभामखण्डवीरव्रतसंशिनीमिव॥३७॥**

**कृपा टीका**—कभी भी युवतियों के कटाक्षों से न बिंधे हुए नवीन लाल कमल जैसे नेत्रयुगल एवं अखण्ड ब्रह्मचर्यव्रत को सूचित करती हुई सी सुन्दर कपोलों तथा दोनों नेत्रों के अग्र भाग के कोण में कुछ अरुणाप्रभा को धारण करते हुए उस ब्रह्मचारी बालक को शिवजी ने स्वीकारा॥३७॥

**क्षणप्रभाकोटिशितच्छटाजटाः समुद्वहन्तं श्रुति चारुकुण्डलम्।**
**रतं श्रुतौ शास्त्रकृतौ सुसंभृतं वरीयसा ब्रह्ममयेन वर्चसा॥३८॥**

**कृपा टीका**—कोटि-कोटि विद्युत की शोभा से सम्पन्न पीली पड़ी हुयी जटाओं को धारण करते हुए, कानों में सुन्दर कुण्डल से समलंकृत समस्त शास्त्रों की जननी, श्रुति की प्राप्ति में निष्ठा रखने वाले एवं श्रेष्ठ ब्रह्मवर्चस्व से सम्पन्न वटु परशुराम को भगवान् शिव ने स्वीकारा॥३८॥

**मुखेन बिम्बाधरपल्लवत्विषा विमोदयन्तं हि विधुं नवोदयम्।**
**द्विजावली श्वेतरुचा कुमुद्वतः करान् करिष्यन्तमिवाह्निकानहो॥३९॥**

**कृपा टीका**—अहो! अपने बिम्ब जैसे अधर पल्लव की कान्ति से युक्त श्रीमुख

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

द्वारा नवोदित चन्द्रमा को भी तिरस्कृत करते हुए तथा दन्तावली की श्वेत कान्ति से चन्द्रमा की किरणों को भी दिवसीय जैसे तेजोहीन बनाते हुए परशुराम जी को स्वीकारा॥३९॥

**वसानमम्लानरुरुत्वचं कटौ दधानमाषाढपलाशदण्डकम्।**
**धृतोपवीतं स्वकरेकमण्डलुं वहन्तमव्यग्रमतिं सुवर्णिनम्॥४०॥**

**कृपा टीका**—कटि में मृगचर्म धारण किए हुए एवं आषाढ़ में उत्पन्न हुए नवीन-पलाशदण्ड को धारण किए हुए उपवीतधारी तथा अपने करकमल में कमण्डलु लिए हुए अव्यग्र बुद्धिवाले सुन्दर ब्रह्मचारी परशुराम जी को शिवजी ने स्वीकारा॥४०॥

**तमङ्गमङ्गीकृतवान् कृतान्तकृत् कृतप्रणामं सुकृतार्थमानिनम्।**
**स्वशिष्यमीशो भृगुवंशवर्धनं गुरुं हि विद्यार्थिगुणोऽनुकर्षति॥४१॥**

**कृपा टीका**—इस प्रकार गुरूप सत्यपूर्वक प्रणाम करते हुए अपने को पूर्ण कृतार्थ माननेवाले, परमप्रिय उन वटुवेषधारी मृगश्रेष्ठ परशुराम को महाकाल के भी काल भगवान शंकर ने शिष्य के रूप में स्वीकार किया क्योंकि विद्यार्थी का गुण सद्गुण को स्वयं आकृष्ट कर लेता है॥४१॥

**निवेद्य नन्दीश्वरविष्टविष्टरं हरो हरन् मौलिनवोडुपांशुभिः।**
**शुचं शुचेः सौम्यरुचेः समब्रवीद् गिरा गिरित्रो वटवे शुभाशिषः॥४२॥**

**कृपा टीका**—तदनन्तर नन्दीश्वर के द्वारा उपविष्ट आसन पर परशुराम जी का आसन पर बैठने का संकेत करके अपने मस्तक पर विराजमान बाल चन्द्रकिरणों से सौम्य कान्ति वाले परशुराम जी की उष्णता को दूर करते हुए कैलास के रक्षक भगवान शंकर ने वटु परशुरामजी को सुव्यक्त वाणी में शुभाशीर्वाद दिए॥४२॥

**वटो विवर्धस्व विशिष्टवर्चसा समेधितायुर्मखहव्यवाडिव।**
**समुन्नयन् भार्गवमन्वयंन्वयं शशीवसिन्धुं प्रथितः पयोमयम्॥४३॥**

**कृपा टीका**—हे वटो! विशिष्ट तेज से युक्त होकर दीर्घ आयु से सम्पन्न तुम यज्ञ क अग्नि की भाँति तेजस्वी बनो तथा भृगुवंशरूप महासागर को अपनी यशः किरणों से समृद्ध करते हुए निरन्तर वृद्धिमान बनो॥४३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**लभस्व दीर्घायुरपूर्वपौरुषं भजस्व भव्यं भवभूमिभूषणम्।**
**घटस्व घोरो द्विजवैरिवृन्दहा रमस्व रामे ननु राम राम हे॥४४॥**

**कृपा टीका**—हे श्रीराम में रमने वाले परशुराम! तुम दीर्घ आयु तथा अपूर्व पराक्रम प्राप्त करो संसार तथा पृथ्वी के आभूषण कल्याणनिधि श्रीराम का निरन्तर भजन करो। शत्रुवृन्द का नाश करने वाले भार्गव तुम शत्रुओं के लिए भयंकर बनो तथा सदैव भगवान् श्रीराम में ही रमते रहो॥४४॥

**भवाय भूयाः श्रुतिपारदृश्वनां द्विजन्मनां संयमशास्त्रशर्मणाम्।**
**सुकर्मणामक्षतधर्मवर्मणां वनस्पतीनां द्विजराडिवामलः॥४५॥**

**कृपा टीका**—हे भार्गव! समस्त वेदों के पारंगत, संयम तथा शास्त्र में आनन्दानुभव करनेवाले अक्षत चरित्रवान तथा शीलरूप अभेद्य कवच धारण करनेवाले ऐसे सत्कर्मनिष्ठ ब्राह्मणों के कल्याणार्थ सतत सन्नद्ध रहो॥४५॥

**निधत्स्व निष्ठां निगमे निरत्ययां विधत्स्व वेद्ये विशदं विवित्सितम्।**
**मनः समाधत्स्व समे निजांशिनि प्रधत्स्व पाण्डित्यपरम्परामहो॥४६॥**

**कृपा टीका**—हे वत्स! वेद में निर्विघ्न निष्ठा धारण करो तथा अपने जिज्ञासित विषय में निर्मल मन को सुस्थिर रखो तथा अपने अंशी सर्वत्र समवर्ती भगवान् श्रीराम में अपने मन का समाधान करो तथा पाण्डित्य परम्परा को सर्वदा सुदृढ़ बनाओ॥४६॥

**अवैमि भूभारसमाजिहीर्षयावतीर्णमंशं त्रिशिरो द्विषो हरेः।**
**भृगोः कुले ब्रह्मसमाजसंकुले भवन्तमेणाङ्कमुदन्वतीव भोः॥४७॥**

**कृपा टीका**—हे परशुराम! क्षीरसागर में चन्द्रमा की भाँति ब्राह्मण समाज से युक्त भृगुवंश में त्रिशिरारि भगवान् श्रीराम के अंशरूप में पृथ्वीका भार हरने की इच्छा से अवतार लिए हुए आपको मैं भलीभाँति जानता हूँ॥४७॥

**स्वयं हि सर्वज्ञशिखामणिर्भवांस्तथापि मां शिष्यधियोपसर्पति।**
**ननूदधिर्वारिनिषिक्तभोगिराडहो मुदा पूजयतीह पल्वलम्॥४८॥**

**कृपा टीका**—स्वयं आप सर्वज्ञ शिरोमणि हैं, फिर भी अपने को मेरा शिष्य मानकर विद्याध्ययन हेतु मेरे पास पधार रहे हैं। अहो! आश्चर्य है, अपने जल से पातालवासी शेषनाग को भी स्नान करानेवाला सागर अल्पजलवाली छोटी तलैया की पूजा कर रहा है॥४८॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परं प्रसीदामि निरीक्ष्य तेऽनघ
त्रिलोकगेयं हि गुरूपसर्पणम्।
समस्तशास्त्रार्थनिधेर्विधेर्विधे-
र्विनम्रता शाश्वतसाधुभूषणम्।।४९।।

**कृपा टीका**—हे निष्पाप परशुराम! तुम्हारे तीनों लोक में गाये जानेवाले यह गुरूपसर्पण (गुरुभक्ति) देखकर मैं अत्यन्त प्रसन्न हूँ। अरे! तुम स्वयं समस्त शास्त्रों के निधान तथा ब्रह्मा के भी ब्रह्मा हो फिर भी मेरा गुरुरूप में वरण किया। वस्तुतः विनम्रता ही संतों का शाश्वत आभूषण है।।४९।।

ममेह भूमन् यदुपैषि शिष्यतां तदस्ति ते मानवशिक्षणं हरे।
प्रदित्सुकामो गुरुगौरवं हि मे बिभर्षि विद्यार्थिविडम्बनं विभो।।५०।।

**कृपा टीका**—हे सर्वव्यापक भूमा! आप जो मेरी शिष्यता स्वीकार कर रहे हैं यह तो आपका मानवमात्र के लिए शिक्षण है। हे परमेश्वर मुझे गुरु का गौरव देने के लिए ही आप विद्यार्थिभाव का अनुकरण कर रहे हैं।।५०।।

अधीष्व मत्तो मदमुक्तमानसः षडङ्गवेदान् सरहस्यकं धनुः।
समस्तविद्यासु कृतश्रमोऽचिरात् समेधितासे द्विजशस्यनीरदः।।५१।।

**कृपा टीका**—हे ब्राह्मणरूप फसल को हरितक्रान्ति देने के लिए बादल, अब आप मुझसे शिक्षा, कल्प, निरुक्त, ज्यौतिष, छन्द, व्याकरणसहित ऋक्, यजु, साम, अथर्व-इन चारों वेदों को तथा सरहस्य धनुर्वेद भी पढ़ो। समस्त शास्त्रों में निष्ठापूर्वक श्रम करके तुम शीघ्र ही विद्या से समृद्ध हो जाओगे।।५१।।

भवाय भूत्यै महसे महात्विषे कृतप्रयत्नस्य पुमर्थमिच्छतः।
श्रमं कठोरं ननु सम्बलं विदुः सतां सुसङ्कल्पवशा हि सिद्धयः।।५२।।

**कृपा टीका**—कल्याण ऐश्वर्य तेज एवं महनीय कान्ति के लिए प्रयासरत पुरुषार्थवादी मनुष्य के लिए कठोर श्रम ही पाथेय हुआ करता है, क्योंकि सिद्धियाँ संतों के सात्विक संकल्प के वश में ही रहा करती हैं।।५२।।

तमूचिवानेवमुदारदर्शनं जगद्गुरुर्भूसुरशत्रुकर्षनम्।
नियोजयामास निजानुशासने त्रिलोचनो भृत्यभवार्तिमोचनः।।५३।।

**कृपा टीका**—समस्त संसार के गुरु, भक्तों की भवबाधा नष्ट करने वाले भगवान

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शंकर ने ब्राह्मणों के शत्रुओं के नाशक, उदारदर्शन परशुराम को इस प्रकार निर्दिष्ट किया तथा उन्हें अपने अनुशासन में वटु रूप से नियुक्त कर लिया॥५३॥

**सरौरवं राविततघोररौरवं सगौरवं गात्रगिरीन्द्रगौरवम्।**
**उपेत्य रामं निजशासनानुगं गवागवीशो मुमुदेऽनुलालयन्॥५४॥**

**कृपा टीका**—भक्तों की रौरवनरक यातना को भी हिला देने वाले, रौरवं मृगचर्म धारण किए हुए गुरुदेव के प्रति समर्पित भावना से युक्त तथा शरीर में पर्वतराज हिमालय की गरिमा स्वीकार किए हुए अपने आदेश के अनुगामी परशुराम जैसा सुयोग्य शिष्य पाकर उन्हें अपने वाणी से दुलारते हुए भगवान शंकर बहुत प्रसन्न हुए॥५४॥

**वटोः समस्तानुपयोगिनो गुणान् शरीरिणस्त्वय्यवलोकये यथा।**
**मुदा ददामीव पयोनिधिः श्रियं समस्तविद्या भवते मधुद्विषे॥५५॥**

**कृपा टीका**—शिवजी बोले! हे भार्गव! आज ब्रह्मचारी के समस्त उपयोगी गुणों को मैं तुममें मूर्तिमान जैसे देख रहा हूँ। अतएव क्षीरसागर में जिस प्रकार भगवान नारायण को श्रीलक्ष्मीजी को समर्पित किया था उसी प्रकार मैं अपनी समस्त विद्याएँ अर्पित कर रहा हूँ॥५५॥

**ततस्तु रामं रमयन् रमेशको गिरां गरिम्णा गुरुगौरवेण च।**
**शिवस्तमध्यापयितुं प्रचक्रमे क्रमेण कानिष्ठमिवाम्बुजो हरेः॥५६॥**

**कृपा टीका**—इसके अनन्तर रमेशक अर्थात् रमा के ईश्वर भगवान् नारायण को जिनसे क अर्थात् सुख मिला है अथवा रमेश भगवान् नारायण से जिन्हें सुख प्राप्त हुआ है ऐसे भगवान् शिव ने परशुरामजी को आनन्दित करते हुए क्रम से उसी प्रकार शास्त्राभ्यास कराना प्रारम्भ किया जैसे इन्द्र के छोटे भाई उपेन्द्र को ब्रह्माजी ने शास्त्राध्ययन कराया था॥५६॥

**स पञ्चभिः पञ्चितपञ्चभीर्मुखैर्मुखप्रसूतात्मभुवो भुवं स्वरम्।**
**विवोधयन् नो बुबुधे भवःक्लवं बुधो बुभूत्सा हि वटोः श्रमापहा॥५७॥**

**कृपा टीका**—संसार के काम-क्रोध-लोभ-मोह-मद- इन पाँचों विकारों को नष्ट करने वाले अपने पाँचों मुखों से विराट पुरुष के मुख से उत्पन्न महर्षि भृगु की पाणिगृहीत पत्नी में लब्धजन्मा महर्षि जमदग्नि के सुयोग्य पुत्र परशुराम को श्रुतियों के स्वर-रहस्य के समझाने में किंचिन्मात्र श्रम का अनुभव नहीं किया

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्योंकि सुयोग्य वटु की शास्त्रजिज्ञासा ही विद्वान् आचार्य के श्रम को समाप्त कर देती है।।५७।।

**यदा यदा क्लान्तिमियाय भार्गवो गवेश गाम्भीर्य गवीर्गवेषयन्।**
**तदा तदापीडनवेन्दुनिर्गलत् सुधाम्बुभिश्शीतलयन् बभौ भवः।।५८।।**

**कृपा टीका**—जब-जब भगवान् शिव की गम्भीर वाणी का अर्थानुसन्धान करते हुए परशुराम जी श्रान्त हो जाते थे तब तब भगवान् शंकर अपने मुकुट में विराजमान बालचन्द्र से निर्गलित अमृतबिन्दुओं से शीतल करते हुए अधिक शोभायमान होते थे।।५८।।

**यथा शरच्चन्द्रमरीचिमाधुरी सुधां पिबंस्तृप्यति नो चकोरकः।**
**तथा न रामः शिशुचन्द्रशेखरश्रुतं जुषाणोऽपि ततर्प कर्हिचित्।।५९।।**

**कृपा टीका**—जिस प्रकार शरदकालीन चन्द्रमा के किरणों से निर्झरित मधुर सुधा का पान करता हुआ भी चकोरशावक तृप्त नहीं होता उसी प्रकार श्रीपरशुराम जी भी भगवान् चन्द्रशेखर शिव के मुखचन्द्र से निर्गलित शास्त्रसुधा का सेवन करते हुए भी किसी भी समय तृप्त नहीं होते थे। अर्थात् उनकी जिज्ञासा कभी शान्त नहीं होती थी।।५९।।

**सकृत् समाकर्ण्य शिवेरिताः श्रुतीः समध्यगच्छत् प्रतिभाधनी वटुः।**
**अधीतपूर्वं ननु तेन वाङ्मयं गुरौ निवासस्त्विह मर्त्यशिक्षणम्।।६०।।**

**कृपा टीका**—प्रतिभा के धनी वटु परशुराम जी शिवजी द्वारा एक ही बार सस्वर पाठ सुनकर ही श्रुतियों को यथावत ग्रहण कर लेते थे क्योंकि भगवदंश होने के कारण सम्पूर्ण वैदिक वाङ्मय उनके द्वारा पूर्व ही पढ़ा जा चुका था। उनका गुरुकुल निवास तो मनुष्यों की मात्र शिक्षा के लिए था।।६०।।

**प्रभात उत्थाय सदा सदातनं कृताह्निकःकारणमाणवो मुहुः।**
**शिवं सिषेवे शिषिरांशुशेखरं वटुर्हि सेवैकधनोऽधिगण्यते।।६१।।**

**कृपा टीका**—कारणमाणव अर्थात् स्वयं परमेश्वर होकर ब्रह्मचारी बने हुए श्री परशुराम प्रतिदिन शिवजी से पहले प्रातःकाल उठकर अति संक्षेप सन्ध्यादि नित्य नियमों का निर्वहण कर चन्द्रशेखर भगवान् शंकर की प्रतिपूर्वक सेवा

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

करते थे। क्योंकि आचार्यसेवा को ही अपना धन माननेवाला वटु सर्वश्रेष्ठ गिना जाता है॥६१॥

**क्वचित्समाधिस्थमुमामनोहरं हरं हरिर्हारिगुणेन हर्षयन्।**
**सपर्यचारीच्चमराङ्गसम्भवैर्भुजङ्गभूषं ननु दंशवारणैः॥६२॥**

**कृपा टीका**—कभी-कभी शिव-पार्वती के मन को हरण करने वाले सर्पभूषण भगवान् शंकर को अपने उदात्तगुणों से प्रसन्न करते हुए श्रीहरि परशुराम उनकी समाधि अवस्था में चँवर डुलाकर मशकदंशादि का वारण करते हुए शिवजी की अद्भुत परिचर्या करते थे॥६२॥

**क्वचिच्छरच्चन्द्रमरीचिरोचिषो जटाजगज्जन्मजरापहारिणीः।**
**स मण्डयन् नन्दनमल्लिकादिभिर्बभूवभूतेश्वरभूतिभूषणः॥६३॥**

**कृपा टीका**—किसी समय संसार के जन्म मरण को दूर करने वाली शरदकालीन चन्द्रमा की किरणों के समान सुन्दर भगवान शिव की जटाओं को नन्दन वन में चमेली एवं अन्य दिव्य पुष्पों से अलंकृत करते हुए परशुराम जी भगवान् शंकर की विभूति को ही अपने अंग का आभूषण बना लेते थे, अर्थात् गुरुदेव के प्रति अधिक आदर के कारण उनकी जटाओं की भस्म अपने ही श्रीअंग में लगा लेते थे जिससे वह पृथ्वी पर पड़कर लोगों के चरणों से कुचली न जा सके॥६३॥

**क्वचिद्भवं भावमयेन वारिणा दृगुद्भवेनस्नपयांबभूव सः।**
**क्वचिद् तदङ्घ्र्यम्बुजयुग्मरुक्मभू सुलिप्सया लिप्त इव व्यरोचत॥६४॥**

**कृपा टीका**—कभी कभी परशुराम जी अपने नेत्र से निर्गलित स्नेहमयी अश्रुधारा से भगवान् शंकर को नहला देते थे और कभी कभी भगवान शंकर के श्रीचरणकमलों की सेवा की उन्हें उसी प्रकार लिप्सा हो जाती थी जैसे निर्धन को स्वर्ण की। इससे परशुराम जी की शोभा और भी बढ़ जाती थी॥६४॥

**क्वचिद् भवानीपतिपादपङ्कजं स पीडयन् पीडितकुव्यथोऽभवत्।**
**मनो भवारेरपि निश्चलं मनो जहार सुश्रूषण शक्रजालतः॥६५॥**

**कृपा टीका**—कभी कभी पार्वतीपति भगवान् शंकर के श्रीचरणकमल को पलोटते हुए परशुराम संसार के व्यथा को नष्ट करने में समर्थ हो जाते थे एवं अपनी सेवारूप इन्द्रजाल से कामारि भगवान् शंकर के भी निश्चल मन को अपने वश में कर लेते थे॥६५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तुरीययामे यमिनां वरो वटुः सदा निशायाः स निशेष शेखरात्।**
**श्रुतं श्रुतं चिन्तयते स्म चिन्मयं प्रभातबोधो हि वटोर्विभूतये।।६६।।**

**कृपा टीका**—संयमियों में श्रेष्ठ वटु परशुराम जी प्रतिदिन रात्रि के चतुर्थ प्रहर में उठकर भगवान् चन्द्रशेखर से सुने हुए शास्त्र का चिन्तन करते थे क्योंकि प्रभातकाल का जागरण श्रेष्ठ विद्यार्थी के कल्याण के लिए ही होता है।।६६।।

**उषस्यथाप्लुत्य समानसाम्भसि स्मरन् परब्रह्म जपन् युगायनम्।**
**सुवर्णकिञ्जल्कसहस्रपङ्कजस्रजा जगद्देशिकमभ्यपूपुजत्।।६७।।**

**कृपा टीका**—श्री परशुराम प्रातःकाल मानसरोवर में स्नान करके परब्रह्म का स्मरण करते हुए एवं "युगायन" अर्थात् चारों युगों में एक रस परब्रह्म को प्राप्त कराने वाली ब्रह्म गायत्री का जप करते हुए सुवर्ण परागों से युक्तसहस्र कमलों की माला से जगद्गुरु भगवान् शंकर की पूजा करते थे।।६७।।

**पुनः शुभैः श्रीफलपत्रकोटिभिर्मनोज्ञवर्णैस्त्रिदलैर्मनोहरैः।**
**समाहृतैर्देववनात् प्रयत्नतः समन्त्रवत् तोषयति स्म शङ्करम्।।६८।।**

**कृपा टीका**—अनन्तर परशुराम जी प्रयत्नपूर्वक नन्दनवन से लाए हुए सुन्दर हरित वर्ण वाले तीन दलों से युक्त एक करोड़ बिल्वपत्रों से मन्त्रपूर्वक भगवान् शंकर की समर्चा करके उन्हें सन्तुष्ट करते थे।।६८।।

**हरोहरिद्रत्नक कामनीयकैरमुष्यकाये ननु विल्वकेश्वरः।**
**शशीवसौम्यप्रतिरूपकोटिभिः समावृतः शारदशर्वरी भवः।।६९।।**

**कृपा टीका**—हरित मणि के समान सुन्दर उन बिल्वपत्रों से बिल्वकेश्वर भगवान् शंकर ऐसे सुशोभित हो रहे थे जैसे करोड़ों बुध देवता के प्रतिबिम्बोंसे घिरे हुए शारदी पूर्णिमा के चन्द्रमा हों।६९।।

**पुनश्च मन्दारसुमैः सुगन्धिभिः स्वभक्तमन्दारममण्डयन् मुदा।**
**निरस्तकामस्य सपर्यया हि किं समर्हणं छात्रविभूषणं गुरोः।७०।।**

**कृपा टीका**—अपने भक्तों के लिए मन्दार कल्पवृक्ष के समान वाञ्छित फल देने वाले भगवान् शंकर को परशुरामजी सुगन्धित मन्दार पुष्पों से श्रृंगारित करते थे। वास्तव में तो समस्त कामनाओं से रहित भगवान शंकर का इस पूजा से

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्या लेना देना, परन्तु गुरुजनों की पूजा छात्र का स्वयं अलंकार है इसीलिये भगवान् शंकर की पूजा स्वयं परशुराम जी करते थे॥७०॥

**निवेद्य नैवेद्यममोघविक्रमे क्रमेण कन्दादिसमाहृतं स्वयम्।**
**चकार नीराजनमभ्युमावरं पुरैव नीराजितमर्भकेन्दुना॥७१॥**

**कृपा टीका**—अनन्तर परशुरामजी अपने द्वारा लाया हुआ कन्द, मूल, फल अमोघपराक्रमवाले भगवान शंकर जी को नैवेद्य समर्पित करते थे और फिर उमापति भगवान् शंकर की आरती करते थे जबकि इसके पूर्व बालचन्द्र द्वारा उनकी नीराजना की जा चुकी होती थी॥७१॥

**दधौ तदम्भोजपदावनेजनीरपः पवित्रीकृतविश्वमण्डलाः।**
**भवो यथा पूर्वभवेत्रिविक्रमे दधारमूर्ध्नातदपः सरिन्मयीः॥७२॥**

**कृपा टीका**—इसके पश्चात् परशुराम जी समस्त विश्व को पवित्र करने वाले भगवान् शिव के श्रीचरणकमल के जल को अपने शिर पर निर्माल्य रूप में धारण करते थे जिस प्रकार उन्हीं के पूर्व वामनावतार में भगवान वामन के श्रीचरणोदक को गंगाजी के रूप में भगवान् शंकर ने अपनी जटा में धारण किया था॥७२॥

**प्रपूज्य तं षोडशभिः प्रकारकैः सनन्दयामास गिरीशनन्दनम्।**
**पपात साष्टांगममुष्यपादयोः प्रणामएवैशकृपाप्तिसाधनम्॥७३॥**

**कृपा टीका**—इस प्रकार परशुरामजी ने गिरीश अर्थात् कैलाश को आनन्दित करने वाले भगवान् शंकर की षोडश प्रकार से पूजा करके उन्हें प्रसन्न किया तथा उनके श्रीचरणों में सांष्टांग प्रणाम किया। क्योंकि श्रद्धापूर्वक प्रणाम ही भगवत् कृपा प्राप्ति का साधन है॥७३॥

**कृताञ्जलिं पूजितपादपङ्कजं शिवः प्रियं छात्रमकुण्ठमेधसम्।**
**मुदा समाहूय करैः परामृशन् जहार देवो दशमीं दशां वटोः॥७४॥**

**कृपा टीका**—इस प्रकार अपने श्रीचरणों की पूजा सम्पन्न किये हुए बद्धाञ्जलि परशुरामजी को निकट बुलाकर अपने दशों हाथों से सहलाते हुए भगवान् शिव ने विद्यार्थी परशुराम की दशम दशा अर्थात् मृत्युविभीषका हर ली और उनको अमर बना दिया॥७४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुनस्तमध्यापितवान् महेश्वरः षडङ्गवेदं सरहस्यमन्त्रवत्।
समं धनुर्वेदममोघविक्रमो व्यये हि विद्या विशदा विराजते॥७५॥

**कृपा टीका**—फिर तो अमोघ पराक्रमी भगवान् शिव ने परशुराम जी को शिक्षा, कल्प, निरुक्त, ज्यौतिष, छन्द तथा व्याकरण सहित ऋक्, यजु, साम, अथर्वण इन चारों वेदों का रहस्य एवं मन्त्रसहित धनुर्वेद का अध्यापन किया क्योंकि व्यय अर्थात् प्रदान करने से ही विद्या निर्मल होकर सुशोभित होती है॥७५॥

इति त्रिलोकैकगुरुर्द्विजर्षये प्रदाय विद्याद्विगुणानवामलाः।
स्पृशन् कराम्भोजमदो मुखाम्बुजे बभाष ईड्याक्षरमिन्दुशेखरः॥७६॥

**कृपा टीका**—इस प्रकार तीनों लोकों के एकमात्र गुरु भगवान् चन्द्रशेखर शिव ब्रह्मर्षि परशुराम जी को अठारह विद्याएँ प्रदान कर उनके मुखकमल पर अपने करकमल का स्पर्श करते हुए पवित्र अक्षरों वाला वाक्य बोले॥७६॥

असेवथा भार्गव मां दिवानिशं कुबुद्धिरात्मानमिवाक्षतव्रतः।
समग्रशास्त्रार्णवपारमञ्जसा प्रजग्मिमान् मत्परितोषपोतवान्॥७७॥

**कृपा टीका**—शिव जी ने कहा-हे भार्गव! अविवेकी पुरुष जिस प्रकार अपने शरीर की सेवा करता है उसी प्रकार तुमने मेरी दिन रात सेवा की है और मेरे संतोषरूप जहाज का आश्रय लेकर तुमने सम्पूर्ण शास्त्रों के महासागर को भी पार कर लिया॥७७॥

विधाय शास्त्रेषु महापरिश्रमं विनिद्रमभ्यस्य विमोहवर्जितः।
प्रसाद्य विद्यां स्ववशीचकर्थ भोः स्वमातरं सूनुरिवात्मतत्परः॥७८॥

**कृपा टीका**—हे बटो! तुमने मोह रहित होकर अत्यन्त सावधानीपूर्वक शास्त्रों में महान परिश्रम करके भगवती विद्या को उसी प्रकार प्रसन्न कर लिया है जैसे सेवा परायण पुत्र अपनी माँ को प्रसन्न कर लेता है॥७८॥

विवेकविश्रम्भविनम्रसेवया विरिञ्चभूनन्दनमामनन्दयः।
परं प्रसीदामि महात्मनि त्वयि प्रगल्भपाण्डित्यपरम्परापरे॥७९॥

**कृपा टीका**—हे ब्रह्मपुत्र भृगु को प्रसन्न करने वाले परशुराम! तुमने विवेक तथा विश्वासपूर्वक विनम्र सेवा से मुझे बहुत आनन्दित किया है। प्रगल्भ पाण्डित्य की परम्परा में तत्पर तुम जैसे महात्मा पर आज मैं बहुत प्रसन्न हो रहा हूँ॥७९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**गुरौ प्रसन्ने परमः प्रसीदति गुरौ विषण्णे वृषणो विषीदति।**
**गुरौ च तुष्टे ननु लोकसम्पदो गुरौ हि रुष्टे विपदः पदे पदे॥८०॥**

**कृपा टीका**—गुरुदेव के प्रसन्न होने पर परमेश्वर प्रसन्न होते हैं। गुरुदेव के दुःखी होने पर भगवान् विष्णु दुःखी हो जाते हैं। सद्गुरु के सन्तुष्ट होने पर संसार की सारी सम्पत्तियाँ आ जाती हैं और गुरुदेव भगवान् के रुष्ट होने पर पग पग पर विपत्तियों के दर्शन होते हैं॥८०॥

**तदद्य सन्तुष्टमना विसर्जये भवन्तमीड्यं भृगुवंशवर्धनम्।**
**सुखाय भूयासुरिमाविभूतयः शिवोऽस्तु पन्थास्तव सत्यसंगर॥८१॥**

**कृपा टीका**—हे सत्य प्रतिज्ञ ब्रह्मचारिन्। इसीलिये आज मैं सन्तुष्ट मन से आप जैसे श्रेष्ठ भृगुवंश के बढ़ानेवाले छात्र को समावर्तन संस्कार करके गुरुकुल से भेज रहा हूँ, मेरी ये विद्या विभूतियाँ तुम्हारे कल्याण के लिए हों और तुम्हारा अगला मार्ग आनन्दमय हो॥८१॥

**अयातयामाः श्रुतयो भवन्तु ते स्वधीतमप्यस्तु फलाय नित्यशः।**
**यथोर्वरायां भुवि सुप्तशालयः सुपात्रदत्तं द्रविणं यथाक्षयम्॥८२॥**

**कृपा टीका**—हे वत्स! जिस प्रकार उर्वरा भूमि में बोए हुए धान के बीज फलीभूत होते हैं तथा जैसे सुपात्र को दिया हुआ दान पुण्यप्रद होता है उसी प्रकार मेरे द्वारा पढ़ाई हुई श्रुतियाँ तुम्हारे जीवन में अयातयाम अर्थात् नित्य ही उपस्थित रहें एवं तुम्हारा अध्ययन किया हुआ शास्त्र तुम्हारे लिये निरन्तर गुणकारी रहे॥८२॥

**भजस्व वीरव्रतमेव नैष्ठिकं लभस्व दीर्घायुरमोघविक्रमः।**
**मनागपि स्कन्दय नो बहिर्मनः शिशुर्युवत्यामिवरुद्धसौरतः॥८३॥**

**कृपा टीका**—हे ब्रह्मचारिन्! जिस प्रकार नवजात शिशु किसी युवती के प्रति अनासक्त तथा उसके हाव भाव से प्रभावित नहीं होता ठीक उसी प्रकार तुम नैष्ठिक ब्रह्मचर्यव्रत का पालन करो। हे अमोघ पराक्रमशाली! तुम दीर्घायुष्य प्राप्त करो तथा अपना मन कभी भी बाह्य विषयों की ओर मत भटकाओ॥८३॥

**त्वमूर्ध्वरिता भव सत्यसंगर सदैव मातापितरौ प्रमोदय।**
**द्विजोडुमालार्चितपादपंकजश्चिराय शोभस्व शशीव शारदः॥८४॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे सत्यप्रतिज्ञ! तुम ऊर्ध्वरिता अर्थात् अखण्ड ब्रह्मचारी बनो निरन्तर अपने माता-पिता को प्रसन्न करते रहो ब्राह्मणवृन्द रूप नक्षत्रमाला से सेवित चरणकमल वाले तुम शरद्पूर्णिमा के चन्द्रमा की भाँति सुदीर्घकाल पर्यन्त शोभायमान रहो॥८४॥

**ददामि ते शात्रवसैन्यशातनं द्विजारिभूपालमहाब्धिवाडवम्।**
**कुठारमत्युग्रमुदग्रविक्रमं यथाशनिं शैलजिते जनार्दनः॥८५॥**

**कृपा टीका**—हे ब्रह्मचारी! जिस प्रकार पर्वतों के विजेता इन्द्र को भगवान् विष्णु ने वज्र प्रदान किया था उसी प्रकार मैं तुमको शत्रुसेना को नष्ट करनेवाला ब्राह्मणद्वेषी राजवंश महासमुद्र को सोखने के लिए वाडवाग्निस्वरूप प्रचण्ड पराक्रमसम्पन्न अत्यन्त कठोर फरसा (परशु) प्रदान करता हूँ॥८५॥

**इदं धनुर्वैष्णवमज्यमुत्तमं सुदुर्वहं विष्णुविरुद्धतेजसाम्।**
**गृहाण वेदान्तमिवात्मदर्शकं प्रतीक्षतामागमनं निजांशिनः॥८६॥**

**कृपा टीका**—यह देखो वैष्णव धनुष जिस पर अभी प्रत्यंचा नहीं चढ़ी है। ज़िसे विष्णु से विरुद्ध तेजवाले व्यक्ति कभी नहीं उठा सकते इसे तुम आत्मतत्त्व का दर्शन कराने वाले वेदान्त की भाँति ग्रहण करो तथा अपने अंशी भगवान् श्रीराम के आगमन की प्रतीक्षा करो॥८६॥

**सहस्रबाहूद्धतसैंहिकेयकाद्विमोचयाशु द्विजराड्द्विजावलीः।**
**यशस्सुधाप्रीणितमित्रकैरवः स गौरवं रावय घोररौरवम्॥८७॥**

**कृपा टीका**—हे भृगुवर्य! सहस्रबाहुरूप उद्धतराहु के अत्याचार से ब्राह्मणवंश रूप चन्द्रमा को मुक्त करो। अपनी कीर्तिसुधा से सुहृद कैरवों (कुमुदों) को प्रसन्न करो एवं अपने कुल के गौरव की रक्षा करते हुए भक्तों पर आने वाली रौरव नरक यातना को रुला दो। अर्थात् अपने गुणगायकों को नरकयातना से मुक्त कर दो॥८७॥

**अहंकृतध्वान्तमिवात्मबोधिना जडीकृतं प्राक्किल चक्रपाणिना।**
**पिनाकमास्ते प्रहितं पुरैव मे समर्चमानं मिथिलासु मैथिलैः॥८८॥**

**कृपा टीका**—आत्मतत्त्ववेत्ता द्वारा निष्क्रिय किये हुए अहंकार की भाँति भगवान् विष्णु द्वारा पूर्वकाल में जड़ किया हुआ मेरा पिनाक (धनुष) मेरे द्वारा मिथिला के महाराजा देवरात को दे दिया गया था जो इस समय भी मिथिला नगरी में

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स्थापित है और उसी समय से अद्यावधि मैथिल राजाओं द्वारा श्रद्धा से पूजा जा रहा है॥८८॥

तदर्दनं भूमिसुतास्वयंवरे स्वशुल्कभूतं जनकेन धास्यते।
तदेव रामः सहजं विभंक्ष्यति द्युमांस्तमस्तोममिवात्तविक्रमः॥८९॥

**कृपा टीका**—महाराज सीरध्वज जनक के द्वारा भूमिनन्दिनी सीताजी के स्वयंवर में उसी मेरे पिनाक का भंग ही कन्यादान शुल्क के रूप में धारण किया जायेगा। वह पिनाक, पराक्रमी भगवान् श्रीराम उसी प्रकार तोड़ देंगे जिस प्रकार सूर्य नारायण घोर अन्धकार राशि को तोड़ देते हैं॥८९॥

ततो भवांस्तत्र समागमिष्यति त्रिलोकभर्त्रा रघुनन्दनेन वै।
निसर्गनीलोत्पलदाम कान्तिना यदा ततश्शान्तिमुपैष्यति क्षणात्॥९०॥

**कृपा टीका**—इसके अनन्तर स्वभावशील नीलकमल की कान्ति धारण करने वाले त्रिलोक नायक भगवान् श्रीराम का जब तुम्हारे साथ समागम होगा तब तुम एक क्षण में शान्ति को प्राप्त कर लोगे॥९०॥

समर्प्य चापं रघुवंशकेतवे पराजयस्ते न भवेत् प्रलम्बनम्।
विशालकीलाललसत्पयोनिधेः समक्षमृध्यै सरसः समर्पणम्॥९१॥

**कृपा टीका**—हे परशुराम! श्रीराम को अपना धनुषबाण सौंपकर भी तुम्हें पराजय का अनुभव नहीं होना चाहिये यह लीला तो तुम्हारे लिये एक आलम्बन सिद्ध होगी अरे भाई! अगाध जल से परिपूर्ण विशाल सागर के समक्ष छोटी सी तलैया का आत्मसमर्पण तो उसके कल्याण के लिए ही होता है॥९१॥

विदन्नपि त्वं ह्यविदन्निवाचरेः समोऽपि रामे विषमेर्मृषारुचा।
समं शरासेन समाप्तविग्रहो नभो नभस्वानिव राघवं विशेः॥९२॥

**कृपा टीका**—हे परशुराम! तुम जानते हुए भी श्रीराम के समक्ष अज्ञानी जैसा आचरण करना। श्रीराम के प्रति अनुकूल होते हुए भी असत्य क्रोध का आशय लेकर उनके साथ विषम अर्थात् शत्रुवत् आचरण करना। राजवध से संन्यास लेकर शार्ङ्ग धनुष के साथ ही तुम अपने अंशी श्रीराम में उसी प्रकार प्रवेश कर जाना जैसे प्रलयकाल में वायु आकाश में प्रविष्ट हो जाता है॥९२॥

विरम्य रामानुजजिह्ममन्युतो निजावतारं विरमय्य राघवे।
गिरौ महेन्द्रेऽथ महेन्द्रवन्दितः प्रभो! प्रवर्तस्व महर्षि वर्त्मनि॥९३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे प्रभो! श्रीलक्ष्मण पर प्रदर्शित क्रोध के अभिनय से विश्राम लेकर अपना अवतार श्रीराम में समर्पित करके महेन्द्र पर्वत पर निवास करते हुए इन्द्र के द्वारा सेवित आप महर्षियों के मार्ग से अपने शेष जीवन का यापन करेंगे॥९३॥

**निरस्तदण्डोऽथनिरुद्धसौरतोरतोव्रतोब्राह्मणधर्मकर्मणि।**
**खगात्मजे जाग्रतिचाष्टमे मनौ भवे ऋषीणां स्वपितेव सप्तमः॥९४॥**

**कृपा टीका**—इस प्रकार महर्षिसम्मत मतों से युक्त आप राजाओं के दण्डदान से विराम लेकर अखण्ड ब्रह्मचर्यपूर्वक ब्राह्मणोचित धर्म एवं कर्म में तत्पर रहकर आने वाले सूर्यनारायण के पुत्र सावर्णि मनु द्वारा प्रवर्तित अष्टम मन्वन्तर में आप सप्तम मन्वन्तर के सप्तर्षिमण्डल में स्थित अपने पिता जमदग्नि की भाँति ही अष्टम मन्वन्तर के सप्तर्षिमण्डल में विराजेंगे॥९४॥ यहाँ तक वंशस्थ छन्द है।

**इत्थं निगद्य गदिताखिलशास्त्रसारो**
**रोमाञ्च रोचिततनुर्निरुरोध रुद्रः।**
**वीचीविलासमुदधिर्द्विजराजमीप्सुं**
**प्रेमप्रकर्षमभिशिष्यमिवेत्यवेलाम्॥९५॥**

**कृपा टीका**—इस प्रकार परशुरामजी को समस्त शास्त्रों के अध्यापन के पश्चात् भावी जीवन पद्धति का निर्देश करके उनको विदा करते समय भावातिरेक में रोमाञ्चित शरीर हुए भगवान् शिव ने सुयोग्य शिष्य के प्रति उमड़ते हुए प्रेम प्रवाह को उसी प्रकार रोक लिया जिस प्रकार पूर्णिमा के दिन चन्द्रमा को चूमने के लिए उमड़ती हुई तरंगमाला के तट को प्राप्त करके समुद्र अपना प्रवाह रोक लेता है॥९५॥ वसन्ततिलका।

**लब्ध्वा परश्वधमरातिविघातचुञ्चुं**
**चापं चलारुचिशिखां विशिखान्निषङ्गम्।**
**विद्यावटुर्वसुनभः प्रमितामितार्णां**
**वाणीं ववाण वनजाननम्रमुद्रः॥९६॥**

**कृपा टीका**—परशुराम जी शत्रुवध में निपुण फरसा, वैष्णव धनुष बिजली के समान चमकते हुए बाण एवं असंख्य अक्षरोंवाली अठारह विद्याएँ भगवान् शंकर से प्राप्त करके कमलमुख की नम्र मुद्रा से युक्त होकर यह वाणी बोले॥९६॥ वसन्ततिलका।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**लब्ध्वा दीक्षां नैष्ठिकीं मन्मथारे–**
**र्यावज्जीवं ब्रह्मचर्यं चरिष्यन्।**
**मारासारं मारयिष्ये कुमारो**
**दाराधारं त्वद्‌बलेनेवदैत्यान्।।९७।।**

**कृपा टीका**—हे भगवन्! आपसे नैष्ठिक ब्रह्मचर्य की दीक्षा प्राप्त करके आजीवन अविवाहित रहकर ब्रह्मचर्य का आचरण करते हुए दैत्यों को कुमार कार्तिकेय की भाँति आपके ही बल से गार्हस्थ्यमूलक कामवेग को समाप्त कर लूँगा॥९७॥ शालिनीछन्द।

**पूर्णोऽहं पशुपतिना त्वयानुशिष्टो**
**धन्यो वा वनजभुवानुजो मघोनः।**
**आपृच्छे निखिलगुरुं गुरुं प्रणन्तुं**
**बिभ्रद्‌गां त्वमिव तव स्वमूर्ध्नि गंगाम्।।९८।।**

**कृपा टीका**—हे पशुपते! आपके द्वारा शिक्षित एवं दीक्षित होकर मैं उसी प्रकार पूर्ण और धन्य हो गया हूँ जैसे इन्द्र के छोटे भाई भगवान् वामन ब्रह्मा के द्वारा शिक्षित होकर पूर्ण हुए थे। अब मैं आपके आदेश को मस्तक पर गंगाजी को आपकी भाँति धारण करते हुए हे जगद्‌गुरो! आपको प्रणाम करने की अनुमति चाह रहा हूँ॥९८॥ प्रहर्षिणी।

**उमोमाधवौ धारयन् धर्ममूलौ**
**मनोमन्दिरे मन्दरौ शोकसिन्धोः।**
**वरं ब्रह्मचर्याश्रमं मन्यमानो**
**गृहं नो यथा चम्पकं चञ्चरीकः।।९९।।**

**कृपा टीका**—शोक सागर को मथने के लिये मन्दराचल के समान धर्म के आश्रय पार्वती एवं शिव को मन मन्दिर में विराजमान किये हुए ब्रह्मचर्याश्रम को श्रेष्ठ मानते हुए चम्पा को भ्रमर की भाँति गार्हस्थ को तुच्छ समझते हुए परशुराम जी ने शिवजी से अनुमति माँगी॥९९॥ भुजंगप्रयात।

**पश्यंस्तात पदाब्जमुज्झितसुखं गार्हस्थ्यधर्मं विदन्**
**निर्विण्णो द्विरदो नवोऽनलमिव त्रस्तो जिहासन् द्रुतम्।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**दुर्वारं शिशुमारमार्यविषदं मारं धिया धर्षयन्**
**रामः प्रीतिमयो विनम्रशिरसा वन्द्यं ववन्दे शिवम्।।१००।।**

**कृपा टीका**—अपने पिता जमदग्नि के श्रीचरणों का दर्शन करने के लिये वन की अग्नि को देखकर भयभीत द्रुतगति से भागते हुए हस्तिशावक की भाँति गृहस्थाश्रम को सुखरहित मानकर वैराग्यपूर्वक उसे छोड़ने की इच्छा करते हुए आर्यजनों के लिये विषदायक बालक जैसे असंयमियों को मार डालनेवाले अशास्त्रीय काम को कुचलते हुए प्रसन्न मनवाले परशुराम जी ने जाते समय वन्दनीय शिवजी को वन्दन किया॥१००॥ शार्दूलविक्रीड़ित।

**इत्थं शुभे भार्गवराघवीये भव्ये महाकाव्यउदारवृत्ते।**
**सर्गस्तृतीयः कविरामभद्राचार्यप्रणीते सुधियां श्रियैस्तात्।।१०१।।**

**कृपा टीका**—इस प्रकार महाकवि रामभद्राचार्य द्वारा प्रणीत श्रेष्ठ छन्दोंवाले कल्याणकारी भार्गवराघवीय नामक भव्य महाकाव्य में वर्णित यह तृतीय सर्ग सुधीजनों की शास्त्र श्रीवृद्धि करता रहे॥१०१॥ उपजाति।

**इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामिरामभद्राचार्यप्रणीते श्रीभार्गवराघवीये महाकाव्ये "गुरूपसत्तिर्नाम" तृतीयः सर्गः।**

**।।श्रीराघवः शन्तनोतु।।**

इस प्रकार धर्मचक्रवर्ती महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामी रामभद्राचार्य द्वारा प्रणीत 'गुरूपसत्ति' नामक तृतीय सर्ग पूर्ण हुआ॥

॥श्रीराघवः शन्तनोतु॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीमद्राघवो विजयते ॥

# अथ चतुर्थः सर्गः

अथानुजज्ञेऽजकुलावतंसो जगन्निवासं जगती हिताय।
वनाय वन्द्यं वनतामनिन्द्यं कनिष्ठमादित्यमिवाब्जजन्मा॥१॥

**कृपा टीका**—इसके अनन्तर ब्रह्माजी के कुल के आभूषण भगवान् शंकर ने मुनियों में श्रेष्ठ वन्दनीय तथा निन्दा से रहित जगत के निवास स्वरूप श्री परशुराम जी को जगत् के कल्याण के लिये जमदग्नि के वनाश्रम में प्रस्थान करने की उसी प्रकार अनुमति दी जिस प्रकार से ब्रह्माजी ने बारहवें आदित्य भगवान् वामन जी को बलि की यज्ञशाला में जाने की अनुमति दी थी॥१॥

उवाच वाचं वदनद्विजेश द्विजावलीमञ्जुमयूखकान्त्या।
द्विजात्मजध्वान्तमयं निरस्यन् द्विजाग्र्यपूज्यो द्विजचक्रवर्ती॥२॥

**कृपा टीका**—श्रेष्ठ ब्राह्मणों द्वारा पूज्य, ब्राह्मणों के चक्रवर्ती, भगवान् शंकर अपने मुखचन्द्र की दन्तपंक्तियों से बिखरते हुए किरणों की कोमल कान्ति द्वारा ब्राह्मणपुत्र परशुराम के मोहान्धकार को दूर करते हुए मधुर वाणी में बोले॥२॥

कुटीरमद्येहि पितुर्द्विजन्मन्
न विस्मरन् मां गिरिजां गणांश्च।
गुरावुषित्वा शुचिसंस्कृताढ्यः
परिष्कृतोऽग्नाविव हेमदण्डः॥३॥

**कृपा टीका**—हे ब्राह्मणश्रेष्ठ! अग्नि में परिष्कृत हुए सुवर्ण दण्ड की भाँति गुरुकुल में नियमपूर्वक वास करके श्रेष्ठ संस्कारों से सम्पन्न हुए तुम मुझे पार्वती एवं गणों को न भूलते हुए आज अपने पिताश्री की कुटिया के लिए प्रस्थान करो॥३॥

तवैव निःश्वासमयान् हि वेदान् जगाद मां वेदनिधिर्विधाता।
तथापि मच्छात्रमुपेयिवांस्त्वं समं समर्थे घटते गुणाय॥४॥

**कृपा टीका**—हे भगवन्! यद्यपि आपके ही श्वास रूप वेदों को वेदज्ञ विधाता ने मुझे पढ़ाया था फिर भी उसी वैदिक वाङ्मय को आपने मुझसे पढ़ा। वास्तव

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

में समर्थ व्यक्तित्व के लिये सब कुछ गुणावह ही होता है वहाँ कुछ भी विरुद्ध नहीं होता॥४॥

**अजानता त्वन्महिमानमीश प्रमादतो वा गुरुकर्मतो वा।**
**विमानितश्चेन् महनीयधामन् क्षमस्व चैषा गुरुदक्षिणा मे॥५॥**

**कृपा टीका**—हे परमेश्वर! आपकी महिमा न जानते हुए मेरे द्वारा प्रमाद से अथवा गुरु के उत्तरदायित्व से यदि कभी भी किसी प्रकार आपका अपमान किया गया हो तो आप क्षमा कर दें यही मेरी गुरुदक्षिणा है॥५॥

**स बाष्पनेत्रो गिरिशं प्रणम्य प्रदक्षिणीकृत्य निपीड्य पादौ।**
**शिवां तथापृच्छगुहेभवक्त्रौ जगाम गां भार्गववंशकेतुः॥६॥**

**कृपा टीका**—शिवजी के वचन सुनकर परशुरामजी के आँखों में आँसू आ गये फिर भगवान् शिव एवं पार्वती को प्रणाम करके उनके श्रीचरणों की सेवा करके श्रद्धापूर्वक परिक्रमा करके कार्तिकेय तथा गणेश जी से अनुमति लेकर भृगुवंश श्रेष्ठ परशुराम कैलाश पर से पृथ्वी पर उतर आये॥६॥

**तमातिथेयीवतमालनीला हरिं हरिच्छस्य नमस्यशीला।**
**पयोदसंगर्जनहृद्यवाद्यैर्वर्षासहर्षावटुमभ्यनन्दत्॥७॥**

(अब महाकाव्य परम्परा के अनुसार अन्तर्द्रष्टा महाकवि ने अपनी कल्पना तूलिका पर वर्षाशरद् का चित्रण प्रारम्भ किया है।)

**कृपा टीका**—कैलास पर्वतसे अवतरण के अनन्तर तमाल के समान नीली, हरी हरी फसलों से स्वभावतः प्रणाम करने योग्य ऋतुओं की रानी वर्षा ने आतिथ्य करने वाली कुशल गृहस्वामिनी की भाँति ही प्रसन्न होकर मेघगर्जन रूप मधुर वाद्यों से विद्या पढ़कर आते हुए श्रेष्ठ वटु भगवान् परशुरामजी का अभिनन्दन किया॥७॥

**सा ब्रह्मचर्यव्रतलब्धदीक्षं शर्वात्समासादितशास्त्रशिक्षम्।**
**घनाम्बराच्छन्नमुखी समर्चयद् विलज्जिता कापि कुलाङ्गनेव॥८॥**

**कृपा टीका**—उस वर्षा ने लज्जा से श्रेष्ठ कुलाङ्गना महिला की भाँति बादल रूप घूँघट से अपना मुख ढककर ब्रह्मचर्यव्रत में दीक्षित एवं भगवान् शंकर से समस्त शास्त्रों की शिक्षा प्राप्त किये हुए वटुवर परशुराम जी का पूजन किया॥८॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तमर्घ्यपाद्याचमनाभिषेकैः पयःप्रधानैः शिशिरैः पयोभिः।
वृष्ट्वाथ वर्षा वरवर्णिनं वै श्रान्तं महान्तं मृडयाम्बभूव॥९॥

**कृपा टीका**—इसके पश्चात् वर्षा ने यात्रा करके थके हुए उन महान् ब्रह्मचारी परशुराम जी को दुग्ध जल से धवल अपने शीतल जलबिन्दुओं से अर्घ्य, पाद्य, आचमन तथा अभिषेक द्वारा वर्षण करके शुचि कर दिया अर्थात् कभी चरणों पर कभी हाथ में कभी मुख में नन्हीं नन्हीं बूँदें गिराकर और फिर धाराप्रवाह जल से स्नान कराकर परशुराम जी को शीतल कर दिया॥९॥

उत्पाद्य भूमौ भुवनैकधाम्ने मुञ्जं कुशां कर्मसु कौशलाय।
मौञ्जीमयीं मङ्गलमेखलां वै तद्यज्ञसूत्रं सपवित्रमार्क्षत्॥१०॥

**कृपा टीका**—वर्षा ऋतु ने सम्पूर्ण भुवन में निवास करने वाले परमात्म स्वरूप परशुरामजी के लिए पृथ्वी में उत्पन्न करके मूँज, उसी से बनी हुई मेखला ब्राह्मणोचित कर्म के लिए कुशा एवं अँगुलियों में धारण करने के लिये पवित्री तथा मूँज का ही यज्ञोपवीत प्रदान किया॥१०॥

सा मृत्तिकायां किल भारतस्य पयोमुचामागमनच्छलेन।
संस्थाप्य गन्धं ननु नन्दनीयं नवार्चिषोऽदान्नवमीं सपर्याम्॥११॥

**कृपा टीका**—वर्षा रानी ने बादलों के आगमन के बहाने से भारत की मिट्टी में नन्दनवन का कुसुमगन्ध स्थापित करके नवीन कान्तिवाले परशुराम जी का नवाँ पूजन किया अर्थात् गंध अर्पित किया॥११॥

समीरकारङ्कजुषां लघूनां सुशीतलानां पृषतां छलेन।
पुष्पैः किरन्तीव मुनीन्द्रसूनुं प्रावृड् जगामर्तुमचर्चिकात्वम्॥१२॥

**कृपा टीका**—वर्षा ऋतु ने वायुरूप पिटारे में भरे हुए छोटे छोटे शीतल जलबिन्दुओं से मुनिराज पुत्र परशुराम पर मानो पुष्पों का वर्षण करती हुई ऋतुओं की रानी का विरुद प्राप्त कर लिया॥१२॥

सान्द्रैः पयोदैर्ननु धूमवर्णैर्ब्रह्मद्विडालातकधूमकेतुम्।
विप्रर्षिदेवर्षिमहर्षिमान्यं सा धूपयामास च जामदग्न्यम्॥१३॥

**कृपा टीका**—फिर ऋतुओं की रानी वर्षा ने ब्राह्मणद्रोही राजवंशरूप शुष्क तृणराशि के लिये अग्नि के समान ब्रह्मर्षि, देवर्षि एवं महर्षियों के भी पूजनीय परशुराम

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जी की धूम के समान बादलों से धूप समर्चा की अर्थात् बादलों की धूम सदृश छटा के माध्यम से परशुरामजी को धूप अर्पित की॥१३॥

**प्रावृट्पयोदापगमे कदाचित् समुद्यदादित्यकरैर्मनोज्ञैः।**
**सा दीपयत् तं भृगुवंशदीपं स्वयञ्च दीप्त्या द्युमतो दिदीपे॥१४॥**

**कृपा टीका**—किसी समय बादलों के छट जाने पर उदित हुए सूर्यनारायण की सुन्दर किरणों से वर्षारानी ने परशुरामजी की दीपमाला से पूजा की और स्वयं भी सूर्यनारायण के प्रकाश से प्रकाशित हुई॥१४॥

**क्वचित्तरुच्छायनिषण्णमेनं समाहृतं काननदेवताभिः।**
**आनन्दकन्दं फलमूलकन्दं सा भोजयामास मुदेव रामम्॥१५॥**

**कृपा टीका**—किसी स्थान पर वृक्ष की छाया में विराजमान परशुराम जी को आनन्दकन्द भगवान् की भावना से वर्षा ने वनदेवियों द्वारा लाया हुआ कन्द, मूल, फल, प्रसन्नतापूर्वक मानो नैवेद्य कराया॥१५॥

**स स्वर्ग्यगन्धैः शिशिरैः सुमन्दैस्त्रिभिः समीरैर्धृतगाङ्गनीरैः।**
**गुरोः कुले श्रान्तमनन्तसत्वं सा वीजयच्चामरकल्पकैश्च॥१६॥**

**कृपा टीका**—उस समय चलते हुए शीतल मन्द सुगन्ध समीर के प्रति उत्प्रेक्षा करके महाकवि ने कहा कि नैवेद्य के अनन्तर वर्षा ने गुरुकुल में निवास करके श्रान्त हुए महान पराक्रमी परशुरामजी को गंगाजी के जल से शीतल, स्वर्गीय पुष्पों की सुगन्ध से युक्त मन्द मन्द वायु के झकोरों से चामर डुला कर सुयोग्य सेविका की भूमिका निभाते हुए सुखी किया॥१६॥

**क्षणप्रभाकल्पितवर्तिकाभिः कादम्बिनीभाजनसंभृताभिः।**
**तं दीपिकाभिर्द्विजवंशदीपं नीराजयामास रजोविमुक्ता॥१७॥**

**कृपा टीका**—वर्षा ने स्वयं धूलि से मुक्त होकर रजोगुण से रहित गृहिणी की भाँति बिजलियों से युक्त मेघमालारूप पात्र में बिराजमान सुन्दर दीपमाला से ब्राह्मणवंश के ध्वज स्वरूप परशुरामजी की आरती की॥१७॥

**निदाघ सन्तापितलोकतापं जहार वर्षा पयसां प्रवाहैः।**
**संसारतापत्रयतापितस्य सा ब्रह्मविद्येव सतो मुमुक्षोः॥१८॥**

**कृपा टीका**—ग्रीष्म के ताप से तप्त प्राणियों की गर्मी को वर्षा ने अपने जल के

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रवाह से उसी प्रकार हर लिया जैसे संसार के तीनों तापों से तप्त मुमुक्षु महानुभाव के ताप को वेदान्तविद्या हर लेती है॥१८॥

**वेगेन वारां सरितस्सरांसि समुद्रमेवास्मजवाद् द्रवन्ति।**
**त्यक्त्वा प्रबोधे निजनामरूपे बुधा यथा राममिहाविशन्ति॥१९॥**

**कृपा टीका**—वर्षाकाल में जल प्रवाह के वेग से नदी और तालाब उसी प्रकार द्रुतगति से समुद्र में प्रवेश कर रहे थे जैसे स्वस्वरूप, परस्वरूप, उपायस्वरूप, फलस्वरूप एवं विरोधिस्वरूप ऐसे अर्थपंचक का ज्ञान होने पर ब्रह्मवेत्ता श्रीवैष्णव जन सांसारिक नामरूप का त्याग करके शुद्ध आत्मस्वरूप से परब्रह्म भगवान् श्रीराम में प्रवेश कर लेते हैं॥१९॥

**जगर्जुरुच्चैरभिभूमिमेघा वारानताः श्यामलकान्तयस्ते।**
**सारुप्यमाप्ता इव रामभक्तास्तत्पादपाथोरुहनम्रचेष्टाः॥२०॥**

**कृपा टीका**—श्यामल शोभा वाले, जल के भार से पृथ्वी की ओर झुके हुए बादल उसी प्रकार ऊँची गर्जना कर रहे थे जैसे सारुप्य मुक्ति प्राप्त किये हुए प्रभु के श्रीचरणकमलों में विनम्र चेष्टावाले श्रीरामभक्तजन उच्च स्वर में कीर्तन करते हैं॥२०॥

**विनम्रशाखाजलबिन्दुभाराद् धीरं समीरेण विकम्प्यमानाः।**
**पत्रैस्स्पृशन्तिस्म वटुं तमाला विद्याविनीतं ननु मानयन्तः॥२१॥**

**कृपा टीका**—वर्षाकाल में जलबिन्दुओं के भार से झुकी हुई शाखा वाले, मन्द-मन्द वायु से धीरे-धीरे हिलते हुए तमालवृक्ष विद्या से विनम्र परशुरामजी का सम्मान करते हुए उन्हें अपने पत्रों से स्पर्श करके मानो प्रणाम कर रहे थे॥२१॥

**सारङ्गवर्याः कृषकामयूराः प्रमोदिताः प्रावृषिभूरिभागाः।**
**बद्धाश्च मुक्ता ननु नित्यसंज्ञा जीवा इवैते रघुनाथभक्तौ॥२२॥**

**कृपा टीका**—वर्षाकाल में श्रेष्ठ चातक, किसान तथा मयूर अपने को भाग्यशाली मानकर बहुत प्रसन्न हो रहे थे जैसे श्रीरामभक्ति के वातावरण में बद्ध, मुक्त एवं नित्य ये तीनों प्रकार के जीवात्मा आनन्द का अनुभव करते हैं॥२२॥

**रुरोध वर्षानिखिलोद्यमानि वणिक् परिव्राण्नृपभिक्षुकाणाम्।**
**चतसृणामाश्रमवर्तिनीनां यथा प्रजानां भगवत्प्रपत्तिः॥२३॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—वर्षा ने वणिक्, वानप्रस्थ, राजा एवं भिक्षुकों की सभी चेष्टाओं को उसी प्रकार रोक दिया जिस प्रकार भगवान् की शरणागति चारों आश्रमों की प्रजाओं की सभी भगवद्विरुद्ध प्रवृत्तियाँ रोक देती है॥२३॥

**वर्षाञ्च वर्षाभ्वउदारशोभां सान्द्रैर्विरावैः कलमभ्यनन्दन्।**
**श्रौतीं प्रपत्तिं प्रकटां खरारेरुद्गीथगानैरिव सामविज्ञाः॥२४॥**

**कृपा टीका**—अपनी सुन्दर और मधुर टर्रटर्र ध्वनि से मेढ़क उदार शोभावाली वर्षा का अभिनन्दन कर रहे थे जैसे वेदसम्मत भगवान् श्रीराम की शरणागति का सामवेद पाठी महानुभाव सामवेद के उद्गीथ गान से सम्मान करते हैं॥२४॥

**कादम्बिनीं वीक्ष्य कलं कदम्बाः केकां गृणानाः कृतपक्षपाताः।**
**मत्ताः ह्यनृत्यंश्छिरिवनामिवैत्य श्रीवैष्णवा राघवभक्तमालाम्॥२५॥**

**कृपा टीका**—आकाश में छायी हुई मेघमाला को देखकर प्रेमोन्मत्त हुये मयूरों के समूह अपने पंख गिराकर बोलते हुए उसी प्रकार नाच रहे थे जैसे श्रीवैष्णव जन श्रीराघव भक्तों के समूह को प्राप्त कर प्रेमविभोर होकर कीर्तन करते हुए नृत्य करते हैं॥२५॥

**पर्यक्रमीद् बर्हिवरं मयूरी नृत्यन्तमानन्दनिधौ निलीनम्।**
**साध्वीवकान्तागृहिणीगृहस्थं रामं श्रयन्तं विरताभवाधेः॥२६॥**

**कृपा टीका**—मेघ को देखकर नाचते हुए आनन्द सागर में डूबे हुए मतवाले श्रेष्ठ मयूर के चारों ओर उसकी पत्नी मयूरी उसी प्रकार घूम रही थी जैसे संसार की वासना से विरत हुई साध्वी गृहलक्ष्मी, भगवान् श्रीराम की सेवा में लगे हुए अपने गृहस्थ प्राणपति की परिक्रमा लगाती हुई उसका संरक्षण करती रहती है॥२६॥

**क्वचिद्घटाटोपमयातिसान्द्रा मिथ्याम्भसः श्यामघना जगर्जुः।**
**मोघक्रियाडम्बरदर्शितिहा वाचाट लोका इव हीनसाराः॥२७॥**

**कृपा टीका**—कहीं-कहीं विशाल घटाटोप से घने-घने परन्तु जल से हीन काले-काले बादल उसी प्रकार गरजते थे जैसे साधना के तत्व से हीन होकर भी झूठी क्रिया का प्रदर्शन करते हुए ढोंगी लोग व्यर्थ का अपलाप करते हैं॥२७॥

**सम्प्लाव्यमाना विपुलैर्जलौघैर्भग्नाः क्वचित् क्वापि पयोनिमग्नाः।**
**स्पष्टा न मार्गाः कलिकालमध्ये पाखण्डवादैरिव वैदिकार्थाः॥२८॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—असंख्य जलप्रवाहों के कारण वर्षा काल में कहीं मार्ग टूट गये थे और कहीं जल में डूब गये थे जैसे कलिकाल में पाखण्डवाद वालों के कारण वेदों के अर्थ सामान्य लोगों के समक्ष स्पष्ट नहीं किये जाते॥२८॥

**खद्योतमालाथ विदिद्युते खे क्वचिद्घनध्वान्तवितानतम्याम्।**
**कुतर्किणां बालिशसंसदीव प्रावेदिता वेदविरुद्धवार्ता॥२९॥**

**कृपा टीका**—कहीं कहीं बर्षाऋतु में बादल से घिरी हुई अँधेरी काली रात में जुगनू चमक जाते थे जैसे मूर्खों की सभा में कुतर्कियों द्वारा प्रस्तुत की हुई वेद से विरुद्ध चर्चा कभी कभी प्रभावी हो जाती है॥२९॥

**प्रावृड्भवादंशमुखाकुकीटाग्राम्यान् प्रकामं तुतुदुर्मलेष्टाः।**
**वैदेहिभर्तुर्विमुखं विषण्णं संसाररोगा इव भीमभोगाः॥३०॥**

**कृपा टीका**—वर्षाकाल में उत्पन्न हुये मच्छर, मक्खी, दंश आदि छोटे छोटे मलिन कीड़े देहाती लोगों को डँसकर बहुत पीड़ित करते थे जैसे श्रीराम से विमुख दुःखी प्राणी को भयंकर भोगवाले संसार के रोग कष्ट दिया करते हैं॥३०॥

**माहेन्द्रमुच्चैर्धनुरब्दवर्णं मध्ये नभो नूनमदश्चकासत्।**
**स्वरास्यमाणेषु वृषाभिरामरामच्छविं सूचयति स्म रामम्॥३१॥**

**कृपा टीका**—वर्षाकाल में आकाश के बीच बादलों को रंग बिरंगा बनाता हुआ अत्यन्त शोभायमान इन्द्रधनुष निश्चित ही परशुराम जी को अपने द्वारा समर्पित किये जाने वाले धनुष से सुन्दर भगवान् श्रीराम की श्यामछवि की सूचना दे रहा था॥३१॥

**झञ्झाविनिर्धूतपयोदवृन्दे कदाचिदर्को वियति व्यलोकि।**
**स्वरूपबोधो मनसीव शान्ते वेदान्तविद्या विहता विवेके॥३२॥**

**कृपा टीका**—कभी कभी झंझावात से झकझोरे हुए बादलों के समूह से मुक्त आकाश में सूर्यनारायण उसी प्रकार दर्शन दे देते थे जैसे वेदान्त विद्या के द्वारा जिसका अविवेक नष्ट कर दिया गया है ऐसे शान्त मन में स्वरूप का ज्ञान प्रकट हो जाता है॥३२॥

**मेघाजगर्जुर्नभसि प्रघोरं सौदामिनीमण्डितचारुवक्षाः।**
**नवीचिकीर्षन्त इवात्तशल्या दूरप्रियाणां विरहव्रणानि॥३३॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**यदि चेद्धरिरात्महेतिना परिकृन्तेत् किल रेणुकाशिरः।**
**वृजिनार्णवमुत्तरेदियं श्रितनौकेव निराश्रयाबला।।७०।।**

**कृपा टीका**—यदि भगवान श्रीहरि अपने शस्त्र से रेणुका का शिर काट दें तो वह नौका का आश्रय प्राप्त की हुई निराश्रय अबला की भाँति इस पाप सागर को पार कर सकती है।।७०।।

**हरिरेव समस्तदेहिनां स्मृतमात्रोऽघ विनाशने प्रभुः।**
**क्षपणे रविरेव वै क्षमस्तमसो नेन्दुशतानि निड्भुवः।।७१।।**

**कृपा टीका**—स्मरण करने मात्र से समस्त प्राणियों के पाप नष्ट करने में भगवान श्रीहरि ही समर्थ हैं क्योंकि रात्रि में उत्पन्न हुए अन्धकार के विनाश में अकेले सूर्य समर्थ हैं.जबकि सैंकड़ों चन्द्रमा अंधकार को नहीं नष्ट कर सकते।।७१।।

**हरिहेतिविधूतकल्मषा विरजा मां समुपैतु रेणुका।**
**गलिताघशिलेव गौतमं रघुनाथांघ्रिरजोभिरेष्यति।।७२।।**

**कृपा टीका**—जिस प्रकार भविष्यत् काल में श्री रामजी की चरण रज से अपनी पापशिला को नष्ट करके अहिल्या गौतम को प्राप्त करेगी उसी प्रकार आज श्रीहरि अंशावतार परशुराम जी के फरसे से अपने समस्त पापों को नष्ट होकर विशुद्ध शरीर के साथ सात्विक वृत्ति से रेणुका फिर मुझे प्राप्त कर ले।।७२।।

**तदिमां हरिणैव घातये पितृभावेण निदिश्य साम्प्रतम्।**
**तदनन्तरमस्य शासनं शिरसा विभ्रदहं निराग्रहः।।७३।।**

**कृपा टीका**—इसलिये इस समय मैं प्रभु पर वात्सल्य भाव के कारण उन्हें आदेश देकर उन्हीं श्रीहरि से इस रेणुका का वध करा रहा हूँ इसके पश्चात् प्रभु का आदेश शिरोधार्य करके मैं अपना हठ छोड़कर रेणुका को जीवनदान देकर स्वीकार कर.लूँगा।।७३

**मुनिवर्य इति व्यवस्य वै निजपुत्रत्रितयं समादिशत्।**
**जननीमसितुं न ते पितुः सनकाद्या इव मेनिरे वचः।।७४।।**

**कृपा टीका**—इस प्रकार निश्चित करके जमदग्नि ने परशुराम जी से बड़े अपने तीनों पुत्रों को उनकी माँ का वध करने का आदेश दिया परन्तु सनकादिकों की ही भाँति तीनों पुत्रों ने पिता की बात नहीं मानी।।७४।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**अथ वीक्ष्य तुरीयमौरसं स तुरीयां शकलं कलापिनम्।**
**ज़मदग्निरभाषतादराज्जितजीमूतगभीरया गिरा।।७५।।**

**कृपा टीका**—इसके पश्चात् तुरीय अर्थात् परमेश्वर के अंश कलावतार मोरपिच्छ धारण किये हुए अपने चतुर्थ पुत्र परशुराम जी को आदरपूर्वक निहार कर जमदग्नि जी ने बादल के गर्जन को जीतने वाली गंभीर वाणी से आदेश देते हुए कहा।।७५।।

**जहि पुत्र निजाञ्च मातरं सह बन्धुत्रितयेन गर्हिताम्।**
**स्वकुठारकठोरनेमिना गजशावो नलिनीमिवालिनीम्।।७६।।**

**कृपा टीका**—हे पुत्र जिस प्रकार हाथी का बच्चा भौंरों से युक्त कमलिनी को मसल देता है उसी प्रकार कठोर धारा वाले अपने फरसे से अपने तीनों भाइयों के सहित अपनी व्यभिचारिणी माता को मार डालो।।७६।।

**जननी जननी न तेऽजन जननीयं समभून्महैनसाम्।**
**जननीरजलेशवर्जिता जननीरागकरीव भीसरित्।।७७।।**

**कृपा टीका**—हे अजन्मा परशुराम तुम्हें जन्म देने वाली यह रेणुका तुम्हारी माता नहीं है यह तो महापापों की माता है यह उस कर्मनाशा नदी के समान है जहाँ न तो स्नान करने के लिए लोग, न ही कमलों का इससे कोई संबंध है यह तो लोगों में असंतोष फैलाने वाली भयंकर वैतरणी नदी ही है।७७।।

**क्व वयं भृगवो वशीश्वराः क्वनु चैषा विवशा मनोभुवः।**
**विषवल्लिकया सुरद्रुमो विषमं सङ्गमितोऽब्जयोनिना।।७८।।**

**कृपा टीका**—अरे बेटे! कहाँ हम संयमियों में श्रेष्ठ भृगुवंशी ब्राह्मण कहाँ काम के वशीभूत यह चञ्चल रेणुका, वास्तव में विधाता ने कल्पवृक्ष से विषलता का समागम कराकर महान अनर्थ किया है।।७८।।

**क्व नु मे जननीहकौशिकी क्व पुनर्भोगपरा हि रेणुका।**
**विमलामथ जाह्नवीं कथं प्रसभं भूषयतां च कासरित्।।७९।।**

**कृपा टीका**—अरे इस घर में आई हुई कहाँ मेरी माता सती शिरोमणि कौशिकी और कहाँ भोगपरायणा यह रेणुका? अहो निर्मलगंगा जी को कर्मनाशा नदी कैसे सुशोभित कर सकती हैं।।७६।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तदलं दयया दयानिधे मम वाक्यादथ हन्यतामियम्।
इदमेव हि तद्भवं भवेन्नहि धर्मस्य तव व्यतिक्रमः॥८०॥

**कृपा टीका**—इसलिये हे दयानिधे! इस पर दया करना व्यर्थ है मेरे आदेश से इसे मार डालो। इसी में सबका कल्याण है और तुम्हारे धर्म का व्यतिक्रम भी नहीं होगा॥८०॥

पितृवाचमसौ विशुश्रुवान् स बभूवाम्बुसमाप्लुताम्बकः।
प्रममज्ज शुगंबुधौ बुधो विललापाक्षरगद्गदं सुतः॥८१॥

**कृपा टीका**—इस प्रकार परशुराम जी ने जब मातृवधरूप पिता का आदेश सुना तब उनकीआँखों में आँसू भर आये वे विद्वान होकर भी शोकसागर में डूब गये और गद्गद् अक्षरों वाले वाक्यों से विलान करने लगे॥८१॥

भगवन् किमिदं विधाप्यते स्वकलांशेन मयाद्य दारुणम्।
मनुजो मनुजादवत्स्वयं जननीं स्वां प्रणिहन्तुमुद्यतः॥८२॥

**कृपा टीका**—हे भगवन्! आज आपके द्वारा अपने कलांश मुझ परशुराम से क्या कराया जा रहा है। आज मनुष्य राक्षस की भाँति स्वयं अपनी माँ को ही मारने के लिए उद्यत है॥८२॥

तदिदं मम कर्मकुत्सितं जगदेतद्ध्यपकीर्तयेद्यदि।
तदलं भृगुरामसंज्ञिना ह्यवतारेण निरर्थकेन मे॥८३॥

**कृपा टीका**—यदि मेरे इस कुत्सित कर्म की यह संसार निन्दा ही करे तो मेरे इस निरर्थक परशुरामावतार से क्या लाभ॥८३॥

अवतारफलं जगुर्बुधा जगतीमानवमात्रशिक्षणम्।
तदहं हतमात्तृकः खलः किमु लोकं परिशिक्षये विधे॥८४॥

**कृपा टीका**—हे भगवन्! विद्वानों ने संसार के मानवमात्र को शिक्षित करना ही ईश्वर के अवतार का फल कहा है परन्तु मैं अपनी माँ को ही मार कर खल प्रकृति से संसार को क्या शिक्षा दूँगा॥८४॥

जठरेऽजनमेतमर्भकं जननी या नवमासमत्यगात्।
दधती सहते स्म वेदनां किमु हन्यां कुकृतज्ञपाशवः॥८५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—जिस माँ ने इस अजन्मा बालक को नव महिने पर्यन्त अपने गर्भ में धारण करते हुए प्रसव पीड़ा सहन की उसी माँ को कृतघ्न पशु की भाँति मैं मार डालूँ॥८५॥

**तदिमां नहि हन्तुमुत्सहे श्रुतिसिद्धां प्रथमां स्वदेवताम्।**
**निजमातरमाविलामपि पितरं चानुनयामि यत्नतः॥८६**

**कृपा टीका**—इसलिये अपवित्र होती हुई भी श्रुति से सिद्ध प्रथम देवता रूप इस अपनी माँ को मारने में मुझे उत्साह नहीं हो रहा है। मैं पिताश्री को ही समझाने का प्रयत्न करता हूँ॥८६॥

**अथवा मम नास्ति दूषणं पितुराज्ञा परमा मता मम।**
**न हि तस्य वचोऽतिलङ्घितुं निजवेलामिव वारिधिः क्षमे॥८७॥**

**कृपा टीका**—अथवा मेरा कोई दोष नहीं है मेरी दृष्टि में पिता की आज्ञा श्रेष्ठ है जैसे समुद्र अपने तट का उल्लंघन नहीं कर सकता उसी प्रकार मैं भी पिताश्री के आदेश का उल्लंघन नहीं कर सकता॥८७॥

**अथ पंक्तिगुणाधिका स्मृता जननी चेत् पितृतो महर्षिभिः॥**
**तदिमां प्रसभं हि मां कथं जनको ज्यासयितुं नियुक्तवान्॥८८॥**

**कृपा टीका**—अच्छा, यदि महर्षियों ने पिता से माता को दस गुना अधिक बताया है तो फिर धर्मज्ञ मेरे पिता ने मुझे माँ का वध करने के लिए क्यों नियुक्त किया॥८८॥

**तदिमां कृतशास्त्रनिश्चयो न हनिष्यामि निजां हि मातरम्।**
**ननु वेदविरुद्धकर्मकृत् द्विशिराः कः सुखमावसेज्जगत्॥८९॥**

**कृपा टीका**—इसलिये शास्त्र का निश्चय करने के कारण पिता से दस गुनी श्रेष्ठ अपनी माँ को अब मैं नहीं मारूँगा क्योंकि कौन दो शिरों वाला है जो वेद विरुद्ध कर्म करके इस जगत् में सुख से निवास कर सकता है॥८९॥

**अथवा मम तर्कितं वृथा पितुराज्ञा परिपाल्यतां मया।**
**स तु वेत्ति रहस्यमव्ययं न हि मे स्यादथ धर्मविक्लवः॥९०॥**

**कृपा टीका**—अथवा यहाँ (इस संबंध में) मेरा तर्क करना व्यर्थ है मुझे पिताश्री

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

की आज्ञा का पालन करना चाहिए पिताश्री स्वयं वेद के गूढ़ रहस्य को जानते हैं इस कार्य में मेरे धर्म की हानि नहीं होगी क्योंकि धर्मज्ञ पिताश्री मुझे अधर्म में नहीं नियुक्त करेंगे॥९०॥

**इति निश्चितधीरथात्मवान् भृगुरामः स्वकुठारनेमिना।**
**चतुरश्चतुरोऽपिमूर्धतो विकलान् विश्वकलोऽकलोऽकरोत्॥९१॥**

**कृपा टीका**—इस प्रकार बुद्धि में निश्चय करके सम्पूर्णकलाओं से युक्त प्राकृत लोगों के लिए अव्यक्त कला वाले चतुर शिरोमणि भृगुवंशियों को रमाने वाले परशुराम जी ने तीनों भाइयों सहित अपनी माताश्री को अपने कुठार की तीव्र धारा से काटकर सिर से अलग कर दिया॥९१॥

**तदपूर्वममुष्यकर्म वै प्रशशंसुर्मुनयश्च देवताः।**
**ववृषुः कुसुमानि चादृता भृगुरामो विमना इवाभवत्॥९२॥**

**कृपा टीका**—परशुराम के इस अपूर्व कर्म की मुनियों एवं देवताओं ने प्रशंसा की आदरपूर्वक पुष्पों की वर्षा की परन्तु परशुराम जी अन्यमनस्क जैसे हो गये॥९२॥

**अथ वीक्ष्य पितापि विस्मितः पुलकाङ्गः प्रशशंस पुत्रकम्।**
**परिषष्वज एनमादरात् नयनाद्भिश्च सिषेच भाववित्॥९३॥**

**कृपा टीका**—इसके अनन्तर भाववेत्ता पिताश्री भी इस कर्म से विस्मित हो गये और पुलकित होकर योग्य पुत्र की प्रशंसा करने लगे। आदरपूर्वक उनका आलिंगन किया और भार्गव जी को अपने नेत्र के आँसुओं से सींच दिया॥९३॥

**वरैश्छन्दयामास तं भार्गवेन्दुं पिता प्रीतिमान् कर्मणा तेन सूनोः।**
**स वव्रे हतानां पुनर्जीवदानं वधस्यास्मृतिं हीश्वरः कौतुकाढ्यः॥९४॥**

**कृपा टीका**—पुत्र के उस कर्म से संतुष्ट होकर पिता जमदग्नि ने भृगुकुल के चन्द्रमा परशुराम जी को वरदानों से प्रसन्न करते हुए यथेष्ट वर माँगने के लिए कहा परशुरामजी ने जमदग्नि से दो वरदान माँगे। तीनों भाइयों सहित माताश्री का जीवनदान और वध की विस्मृति। यह सब करने में समर्थ होकर भी पिताश्री से माँगने में एक ही अभिप्राय था कि परमेश्वर इसी प्रकार कौतुक किया करते हैं॥९४॥ भुजङ्गप्रयात छन्द।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तथास्त्वित्यवोचत् पिता प्रीतचित्तः**
**प्रसुप्तोत्थितास्ते यथालब्धसंज्ञाः।**
**पुनः पूर्ववत् स्वप्रवृत्तौ प्रवृत्ता**
**विचित्रं चरित्रं हि लोकोत्तराणाम्।।९५।।**

**कृपा टीका**—प्रसन्न चित्त वाले पिता जमदग्नि ने तथास्तु ऐसा ही हो इस प्रकार कहा फिर परशुराम जी के तीनों भ्राता एवं माताश्री सोकर उठे हुये जैसे संज्ञा प्राप्त कर स्वस्थ शरीर से पहले की भाँति अपनी अपनी प्रवृत्ति में लग गये अर्थात् तीनों भ्राता संध्या आदि करने लगे एवं रेणुका माता अग्निहोत्र की तैयारी में जुट गयीं उन्हें अपने बध का स्मरण भी नहीं रहा यही परशुराम जी का कौतुक था क्योंकि लोकोत्तर महापुरुषों का चरित्र भी विचित्र होता है॥९५॥ भुजङ्गप्रयात।

**एतच्चित्रं चित्रकीर्तेश्चरित्रं**
**मायामूर्तेः सौख्यमाङ्गल्यसीम्नः।**
**गायं गायं निर्जराणां वधूट्यः**
**सौमङ्गल्यं सौमनस्यं च चेरुः।।९६।।**

**कृपा टीका**—इस प्रकार माया मनुष्य सुख एवं आनंद की सीमा आश्चर्यमय यशवाले परशुराम जी के इस परमविस्मयकारी चरित्र को बारबार गाकर देवताओं की पत्नियाँ सौमंगल्य और सौमनस्य विद्या का आचरण करने लगीं अर्थात् उन्होंने परशुराम जी के लिए मंगलकामनाएँ कीं और पुष्पवर्षण किया॥९६॥ शालिनी छन्द।

**सा रेणुका परशुराम परश्वधास्त्र**
**दग्धाखिलाशुभनिरस्त शरीररेणुः।**
**रेजे रजो रहित राजत श्रृङ्गशोभा**
**स्नातेव गाङ्गसलिले ससुताकरेणुः।।९७।।**

**कृपा टीका**—परशुरामजी के परशुशस्त्र के प्रयोग से जिनके समस्त अशुभ जल गये थे एवं शरीर का रजोगुण समाप्त हो गया था ऐसी रेणुका माता पुत्र परशुराम के साथ उसी प्रकार सुशोभित हो रही थीं जैसे धूलि से रहित श्वेतसूंड वाली गंगा जी में स्नान करती हुई एक श्रेष्ठ हथिनी॥९७॥ वसन्ततिलका।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तां ताम्रतामरसपादतलां तरस्वी
प्रीत्या ननाम नमनीय शुभाङ्गकान्तिम्।
भ्रातॄन् मुदा प्रणतिवल्गुवचोऽभिरामैः
रामो विनीतचरितै रमयाम्बभूव॥९८॥

कृपा टीका—अति वेगशाली परशुराम जी ने वंदनीय शोभा वाली लाल कमल के समान श्रीचरण वाली उन माता रेणुका को प्रणाम किया एवं तीनों भ्राताओं को प्रणाम एवं मधुर वचनों से सुन्दर लगने वाले विनीत आचरणों से आनन्दित कर दिया॥९८॥ वसन्ततिलका।

पितुश्च परितोषणं जननि जीवदानं तथा
विरुद्धमुभयं मिथो मिहिरात्रिसंगं यथा।
विधाय परमेश्वरो विबुधवृन्दवन्दीगणाभिगीत
विरुदावलिर्विजयते भृगूणां वरः॥९९॥

कृपा टीका—जिस प्रकार सूर्य के साथ रात्रि का संगम अत्यन्त विरुद्ध है उसी प्रकार पिता को संतुष्ट करना तथा माता को जीवनदान देना इन दोनों परस्पर विरुद्ध कर्मों को सफलता से संपन्न करके देवता समूहरूप वंदीजनों द्वारा गायी जाती हुई दिव्य विरुदावली से युक्त भृगुश्रेष्ठ परमेश्वर परशुराम जी महाराज वस्तुतः आज भी सर्वश्रेष्ठ विजयी हैं उनकी जय हो॥९९॥ पृथिवी छन्द।

पिता तुष्टः पुष्टा पुनरपि च माता शुचितया
लसत् प्राणत्राणा विरजवपुषो भ्रातर इमे।
विरुद्धं यत् सर्वं युगपदविरुद्धं तदभवत्
प्रभोरेषोऽनन्तो भृगुकुलपतेर्भाति महिमा॥१००॥

कृपा टीका—पिताजी सन्तुष्ट हुए और फिर माता जी पवित्रता से सम्पुष्ट हुईं तथा प्राण की रक्षा से युक्त होकर तीनों भाई भी दिव्य शरीर वाले हुए। अन्य जो कुछ विरुद्ध था वह एब एक साथ परशुराम जी में अविरुद्ध हो गया। इस प्रकार भृगुकुल शिरोमणि परशुराम जी की अनंत महिमा आज भी चमत्कृत हो रही है॥१००॥ शिखरिणी।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इत्थं शुभे भार्गवराघवीयेभव्ये महाकाव्य उदारवृत्ते।**
**बाणोऽस्तु सर्गः कवि रामभद्राचार्यप्रणीते जगतां श्रियै नः॥१०१॥**

**कृपा टीका**—इस प्रकार परम कल्याणकारी भव्य, श्रेष्ठ वृत्तों वाले महाकवि रामभद्राचार्य प्रणीत 'भार्गवराघवीय' नामक महाकाव्य में वर्णित यह पाँचवाँ सर्ग समस्त संसार की और हमारी भी भक्ति, संपत्ति एवं श्री का वर्धन करता रहे॥१०१॥ उपजाति।

**इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामिरामभद्राचार्यप्रणीते श्रीभार्गवराघवीये महाकाव्ये 'पित्राज्ञापालनं' नाम पञ्चमः सर्गः॥**

**॥श्रीराघवः शन्तनोतु॥**

इस प्रकार धर्मचक्रवर्ती महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामी रामभद्राचार्य द्वारा विरचित श्रीभार्गवराघवीयम् नामक महाकाव्य में 'पित्राज्ञापालन' नामक पाँचवाँ सर्ग सम्पन्न हुआ।

॥श्री राघवः शन्तनोतु॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥श्रीमद्राघवो विजयते॥

# षष्ठः सर्गः

**इत्थं पितुः प्रीतिकरश्चरित्रैर्मातुः परित्राणकरश्च पापात्।**
**स देहलीदीप इवोद्दिदीपे बाह्यान्तरश्रीर्भृगुवंशदीपः॥१॥**

**कृपा टीका**—इस प्रकार अपने चरित्रों से पिताश्री को संतुष्ट करने वाले तथा भयंकर पाप से माँ का रक्षण करने वाले भृगुकुल के दीपक परशुराम जी बाहर एवं भीतर प्रकाश फैलाने वाले दरवाजे पर रखे हुये दीपक की भाँति सुशोभित हुए॥१॥ इस सर्ग में प्रायशः उपजाति छन्द है।

**गुरोः पितुर्मातुरसौ स्वभक्त्या वाक्यानुरक्त्या चरणप्रसक्त्या।**
**आर्यस्त्रयीं त्रीनिव तोषयित्वा जिगाय जैत्रश्चरितैस्त्रिलोकीम्॥२॥**

**कृपा टीका**—आर्य श्रेष्ठ विजयी परशुराम जी ने गुरुदेव को भक्ति से पिताश्री को वाक्यपालन की प्रीति से माताश्री को चरण कमलों की सेवा से इन तीनों को वेदत्रयी की भाँति संतुष्ट करके क्रमशः पृथ्वी, स्वर्ग एवं वैकुण्ठ इन तीनों लोकों को अपने चरित्रों से जीत लिया॥२॥

**विशेष**—मनुस्मृति के अनुसार माँ की सेवा करके पृथ्वी पर पिता की सेवा करके स्वर्ग पर एवं सद्गुरु कीसेवा करके वैकुण्ठ पर विजय प्राप्त की जा सकती है-

मातृ सुश्रुषया पृथ्वीं पितृ शुश्रुषया दिवम्।
गुरु सेवया तु वैकुण्ठं प्रेत्य मर्त्यो महीयते॥

**स ब्रह्मचारी निजधर्मचारी स्वकर्मचारी च न चाभिचारी।**
**चारी सतां चेतसि नातिचारी स चापचारी स न चापचारी॥३॥**

**कृपा टीका**—परशुराम जी ब्रह्मचारी एवं अपने धर्म का आचरण करने वाले अपने कर्म का आचरण करते हुए वे अभिचारी नहीं थे। वे सज्जनों के चित्त में विचरण करने वाले होकर भी मर्यादा का अतिचरण नहीं करते थे, वे चापचारी अर्थात् धनुष के साथ विचरण करते हुए भी अपचारी किसी का भी अपचार अर्थात् अपकार नहीं करते थे॥३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**निरन्तरायोऽप्यसदन्तरायो धनुःसहायो महितोरुगायः।**
**सदा निरस्ताष्टविधव्यवायो निष्प्रत्यवायो लसितोऽनपायः।।४।।**

**कृपा टीका**—श्री परशुराम जी के जीवन में कोई भी अन्तराय अर्थात् विघ्न नहीं था प्रत्युत वे स्वयं ही दुष्टों के लिये अन्तराय स्वरूप थे। धनुष ही उनका सहायक था वे उरुगाय अर्थात् भगवान की ही पूजा करते थे। परशुराम जी आठ प्रकार के व्यवाय अर्थात् नारिविषयक श्रवण, कीर्तन, केलि, (क्रीड़ा), स्पर्श, एकान्त भाषण, संकल्प अध्यवसाय क्रियानिवृत्ति इन आठों प्रकार के मैथुनों से बहुत दूर थे। उनके जीवन में किसी प्रकार के विधि कर्म के व्यतिक्रम से उत्पन्न कोई भी पाप या प्रत्यवाय नहीं था वे स्वयं भी निर्विघ्न रूप से सुशोभित हो रहे थे।।४।।

**त्रिकालसन्ध्योविहिताग्निहोत्रः शिखोपवीती नितरामधीती।**
**श्रुतौ श्रुतौ वैदिककर्णपूरो मायाविदूरो रुरुचे रुचाढ्यः।।५।।**

**कृपा टीका**—परशुराम जी त्रिकाल संध्या और अग्निहोत्र करते थे वे शिखा सूत्र धारण करने वाले तथा श्रुति के अध्ययन में रुचि रखते थे उनके कानों में वैदिक वाङ्मय रूप कुंडल था एवं माया से दूर तथा अलौकिक कान्ति से अत्यन्त देदीप्यमान थे।।५।।

**वने वसन् ब्राह्मणवासवोऽयं षडङ्गवेदाम्बुधिपारदृश्वा।**
**स्वकर्मणां क्रौञ्चभिदास्यसंख्यां सानन्दचित्तः सुमनाश्चकार।।६।।**

**कृपा टीका**—शिक्षा, कल्प, निरुक्त, ज्यौतिष, छन्द, व्याकरण, रूप छहों अंगों से संयुक्त ऋक्, यजुष् साम अथर्व वेद रूप महासागरों के पारगामी ब्राह्मणश्रेष्ठ ये परशुराम जी आनन्दयुक्त चित्त तथा वासनारहित सुन्दर मन से अपने कर्मों की क्रौञ्चभिद् अर्थात् क्रोंच पर्वत को नष्ट करने वाले श्री कार्तिकेय जी के मुखों की समान संख्या अर्थात् बारह संख्या पूर्ण कर ली।।६।।

**विशेष**—यजन, याजन, दान परिग्रह, अध्ययन, अध्यापन, इन छः कर्मों को स्वयं किया और दूसरों से कराया इस प्रकार इनकी संख्या बारह हो गई।

**यज्वा सदा श्रौतमहामखानां महाक्रतूनायजताजविष्ठः।**
**स्वयं वषट्कार मखात्मकोऽपि स्म वर्तते लौकिक संग्रहार्थम्।।७।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—सांसारिक वेगों से रहित परशुराम जी महाराज स्वयं वषट्कार यज्ञमय होकर भी श्रौत यज्ञ एवं महाक्रतुओं का अनुष्ठान करते थे वस्तुतः उनकी यह प्रवृत्ति लोकसंग्रहार्थ थी॥७॥

**स्वाध्यायतः क्वापि स न प्रमत्तः प्रातः समाराधितजातवेदाः।**
**घनान्तपाठञ्च घनस्वरेण स संहितां संगमयाम्बभूव॥८॥**

**कृपा टीका**—परशुराम जी कभी भी स्वाध्याय अर्थात् अपनी शाखा के लिये विहित वेदपाठ से प्रमाद नहीं करते थे वे प्रातःकाल अग्निदेव की आराधना करके अपने मेघ के समान गंभीर स्वर से वैदिक संहिता का घनान्त पाठ करते थे॥८॥

**अध्यापिपत् पीतपदारविन्दपरागमारन्दमिलिन्दभूतान्।**
**मुनीन्द्रबालान् नितरां कृपालुः साङ्गांश्च वेदांश्चतुरश्चतुर्थः॥९॥**

**कृपा टीका**—जमदग्नि जी के चतुर्थ पुत्र परमकृपालु परशुराम जी अपने श्रीचरण कमल के पराग मकरन्द का पान करने में कुशल भ्रमर के समान गुरुभक्त मुनि बालकों को षडङ्ग चारों वेदों का अध्ययन कराते थे॥९॥

**दिदेश सद्भ्याश्चिदचिद्विशिष्टाद्वैतं गतद्वैतमखण्डबोधम्।**
**तद् ब्राह्मणः सेवकसेव्यभावं प्लवं भवाब्धेर्विगतप्लवानाम्॥१०॥**

**कृपा टीका**—बिना नौका के निराधार संसार सागर में डूबते हुये प्राणियोंके लिए नौका के समान परमेश्वर के सेवकसेव्यभावमूलक भेद बुद्धि से रहित अखंड ज्ञान से युक्त चिदचिद् विशिष्टाद्वैतरूपवेदान्त सम्प्रदाय का सन्त महापुरुषों को अध्ययन कराते थे॥१०॥

**जहार सर्वेभ्य उदारभावो दोषानदोषो धृतशान्तिपोषः।**
**इत्थं श्रुताराधनतत्परोऽसौ ब्राह्मीं विभां संजनयाम्बभूव॥११॥**

**कृपा टीका**—परम निर्दोष एवं शान्ति के पोषक उदारभाव वाले परशुराम जी ने सभी लोगों से दोषों को समाप्त कर दिया। इस प्रकार शास्त्र के आराधन में संलग्न भृगुवर्य ने अपूर्व ब्राह्मण शोभा को प्रकट किया॥११॥

**अनेकराजन्यसुताननिन्द्यान् निरागसो ब्राह्मणपादनिष्ठान्।**
**स पाठयामास धनूरहस्यं विद्या हि विप्रैकवशा प्रशस्ता॥१२॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कृपा टीका—परशुराम जी ने अनेक ब्राह्मण भक्त निंदा रहित निरपराध राजकुमारों को धनुर्विद्या रहस्य का अध्ययन कराया क्योंकि वेदज्ञ ब्राह्मण के ही अधीन विद्या प्रशस्त मानी जाती है॥१२॥

ब्रह्मद्विषो नैव नृपान् स सेहे सपौरुषेयानपि भार्गवेन्द्रः।
एकोऽप्यसंख्यान् मदमत्तनागान् हिनस्ति सिंहः कुतुकात्क्षणेन॥१३॥

कृपा टीका—अनेक सैनिकों से युक्त होने पर भी ब्राह्मण द्वेषी राजाओं को परशुराम जी ने कभी क्षमा नहीं किया। क्योंकि अकेला सिंह खेल खेल में असंख्य मतवाले हाथियों को मार डालता है॥१३॥

अथैकदाहूय मुनीन् यतीन्द्रान् वटून् गृहस्थानपि वानप्रस्थान्।
स ब्राह्मणान् ब्राह्मणवंशवार्धेर्विधुर्वितन्वन् परितः प्रमोदम्॥१४॥

सम्पूज्य पूज्यान् सयथोपचारैः प्रसाद्य चासाद्य निजानुकूलान्।
द्विजावलीध्वस्तमस्तमोऽसौ सुधामिवेन्दुर्गिरमुज्जगार॥१५॥

कृपा टीका—इसके अनंतर एक बार ब्राह्मणवंशरूप महाक्षीरसागर के चन्द्रमा परशुराम जी मुनियों संन्यासियों ब्रह्मचारियों गृहस्थों तथा वानप्रस्थ ब्राह्मणों को समीप बुलाकर चारों ओर आनंद का वितरण करते हुए पूजनीयों को विधिवत् पूजित प्रसन्न एवं अपने अनुकूल बनाकर अपनी दन्तावलि से घोर अन्धकार नष्ट करके उसी प्रकार मधुर वचन बोले जैसे चन्द्रमा अमृत उगल रहे हों॥१४-१५॥

शृणुध्वमेते मुनयो यतीन्द्रा वैखानसार्या बटवो गृहस्थाः।
वचो मम श्रोत्रमनोऽभिरामं विपद्विरामं परिणामरामम्॥१६॥

कृपा टीका—हे मुनियो, संन्यासियो, ब्रह्मचारियो, वानप्रस्थो तथा गृहस्थो तुम सब श्रवण एवं मन को आनन्द देने वाले विपत्तियों को नष्ट करने वाले परिणाम में रमणीय मेरा यह वचन सुनो॥१६॥

वयं विराजो मुखतःस्म सृष्टा जगद्विभूत्यै विधिना विसृष्टाः।
भूयश्च वेदैर्विहिताविशिष्टाः पुनः समाजेन नताः सुशिष्टाः॥१७॥

कृपा टीका—हम ब्राह्मणगण विराट भगवान के मुख से उत्पन्न हुये तथा जगत् कल्याण के लिये ब्रह्मा जी द्वारा इस संसार में भेजे गये फिर वेदों द्वारा विशिष्ट कहे गये पुनः समाज द्वारा अत्यन्त शिष्ट भाव से वंदित हुए॥१७॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तदद्य दायित्वमथोत्तराणाम् महत्प्रबृद्धं शृणुत द्विजेन्द्राः।**
**वोढुं कथं शक्ष्यथ भूरिभारं हंसा इवांसेषु च मन्दरस्य॥१८॥**

**कृपा टीका**—इसलिये हे ब्राह्मणो! सुनो आज हम लोगों पर बहुत बड़ा उत्तरदायित्व आ पड़ा है, तुम लोग इस विशाल मन्दराचल के विशाल भार को हंस के समान कोमल कंधों पर कैसे वहन कर सकोगे॥१८॥

**न जन्ममात्राद् द्विजधर्मपत्न्यां भवेम तुष्टाः क्रियताम् प्रयत्नः।**
**न सिंहपुत्रोऽपि शृगालसत्वो गजेन्द्रगण्डं प्रसभं भिनत्ति॥१९॥**

**कृपा टीका**—ब्राह्मण पत्नी में जन्म लेने मात्र से हमें संतुष्ट नहीं हो जाना चाहिए अब प्रयत्न करना होगा। गीदड़ के समान पराक्रम वाला सिंह का पुत्र गजराज के गण्डस्थल को नहीं भेद पाता सिंह कुल में जन्म के साथ साथ सिंहोचित पराक्रम भी चाहिए॥१९॥

**न जन्ममात्रेण हि कार्यसिद्धिरपेक्ष्यते कर्मसमुच्चयोऽपि।**
**सुबीजमालापि मृदम्बुमुक्ता प्रभुः प्ररोहाय किमङ्कुरस्य॥२०॥**

**कृपा टीका**—जन्म मात्र से ही कार्य की सिद्धि नहीं होती, उसके लिए कर्म के समन्वय की भी अपेक्षा होती है। मिट्टी और जल से रहित सुन्दर बीजों की राशि क्या अंकुर को उत्पन्न करने में समर्थ हो सकती है॥२०॥

**पूजार्हतां यद्यपि विप्रपत्न्यां द्विजात्प्रसूतो लभतेऽनवद्याम्।**
**तपःश्रुताभ्यां रहितस्तथापि व्यस्तः कराभ्यामिव ना न भाति॥२१॥**

**कृपा टीका**—यद्यपि ब्राह्मणपत्नी में उत्पन्न हुआ ब्राह्मण पूजा की योग्यता प्राप्त कर लेता है फिर भी तपस्या एवं शास्त्र से रहित मूर्ख ब्राह्मण दोनों हाथों से रहित लूले पुरुष की भाँति बिल्कुल शोभित नहीं होता॥२१॥

**तपःश्रुतं योनिरिति त्रयं वै द्विजत्वहेतुं प्रवदन्ति सन्तः।**
**नाभ्यां ऋते भाति जनुर्द्विजस्य प्राणात्ममुक्तस्य तनूरिवास्यम्॥२२॥**

**कृपा टीका**—संत लोग तपस्या, शास्त्र एवं ब्राह्माण योनि तीनों को ब्राह्मणत्व का समुचित कारण कहते हैं। तपस्या एवं शास्त्र से रहित केवल ब्राह्मण कुल में जन्म मात्र उसी प्रकार नहीं शोभित होता जैसे प्राण एवं आत्मा से रहित शरीर का मुख ॥२२॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एतावतालं नहि वैभवेन द्विजत्वसिद्ध्यै क्रियतां प्रयासः।
न वह्निजातोऽपि हि धूमराशिर्हविर्भुजो वै समतामुपैति॥२३॥

**कृपा टीका**—हे ब्राह्मणो ब्राह्मणकुल में जन्म रूप वैभव ही हमारे लिये पर्याप्त नहीं है। ब्राह्मणत्व की सिद्धि के लिए प्रयास किया जाये। अरे अग्नि में उत्पन्न हुआ धुएँ का समूह कभी भी अग्नि की तुलना नहीं प्राप्त कर सकता इसलिये ब्राह्मणकुल में जन्म के साथ साथ तपस्या और शास्त्र का ज्ञान भी ब्राह्मण के लिए अनिवार्य है॥२३॥

न वारिजातोऽपि जडो जलौका धत्ते विभां कामपि वारिजस्य।
न सिन्धुजातापि च शुक्तिरीयात् पदं हरेर्वक्षसि सिन्धुजेव॥२४॥

**कृपा टीका**—ब्राह्मणो! समुद्र में उत्पन्न हुआ भी जोंक कमल की शोभा नहीं प्राप्त कर पाता। समुद्र में उत्पन्न होकर भी सीपी समुद्र में प्रकट हुई लक्ष्मी जी की भाँति भगवान नारायण के वक्ष पर कभी भी स्थान नहीं प्राप्त कर सकती॥२४॥

परोपकारः सुसमाजसेवा निःस्वार्थवृत्त्या विकलांगपोषः।
ततस्तपस्तप्तशरीरयष्टिर्विप्रो विपश्चिद्भगवन्तमेति॥२५॥

**कृपा टीका**—परोपकार समाज सेवा, निःस्वार्थ भाव से विकलांगों का पालन पोषण इस प्रकार शास्त्रोक्त विविध तपस्याओं से अपने शरीर लकुटि को तपाकर विद्वान ब्राह्मण साक्षात् भगवान् को प्राप्त कर लेता है॥२५॥

विप्रं प्रशंसन्ति तपःप्रधानं तपोविहीनञ्च विगर्हयन्ति।
राकेशमीट्टे किल जीवलोकः कूहूगतं नार्चति चन्द्रबिम्बम्॥२६॥

**कृपा टीका**—तपस्या से ओतप्रोत ब्राह्मण की सभी प्रशंसा करते हैं और तपोविहीन ब्राह्मण की लोग निन्दा करते हैं। अरे पूर्णिमा के चन्द्रमा की संसार स्तुति करता है और अमावस्या को दिन में प्राप्त हुए चन्द्रमा की कोई भी चर्चा नहीं करता॥२६॥

अनाशकेन व्रतचर्यया वा यज्ञैस्तपोभिर्मनसि द्विजस्य।
जागर्ति वै ब्रह्मविवित्सुभावस्त्रिभिः समीरैरिव ना विभाते॥२७॥

**कृपा टीका**—जिस प्रकार प्रभात काल में प्राणी शीतल मंद सुगन्ध वायु के स्पर्श

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

से स्वयं जग जाता है उसी प्रकार ब्राह्मण के मन में उपवास व्रतानुष्ठान तथा यज्ञ सहित तपस्या से ब्रह्म जिज्ञासा का भाव स्वयं जग जाता है॥२७॥

**श्रुतं धनं ब्राह्मणपुंगवानां श्रुताद्विहीनाः पशुवद्विभान्ति।**
**श्रुतं न हातव्यमहो द्विजेन्द्राः प्राणैःपरं प्रार्थ्यमिदं सदैव॥२८॥**

**कृपा टीका**—शास्त्र ही श्रेष्ठ ब्राह्मणों का धन है। शास्त्र से विहीन ब्राह्मण पशु के जैसे विकृत दीख पड़ते हैं। अरे ब्राह्मणो! शास्त्र कभी नहीं छोड़ना चाहिए इसको तो अपने प्राणों को देकर भी सँभालकर रखो॥२८॥

**किं कामरूपेण मनोहरेण प्रमाथिना वा चलयौवनेन।**
**विद्याविहीनो न विभाति विप्रः सहस्ररश्मिरिव कान्तिहीनः॥२९॥**

**कृपा टीका**—उत्पन्न मनोहारी काम जैसे रूप से क्या लाभ मन को प्रमत्त करने वाले चंचल यौवन से क्या प्रयोजन, विद्या से विहीन ब्राह्मण ग्रहण के समय कान्ति से विहीन सूर्य नारायण की भाँति शोभायमान नहीं होता॥२९॥

**वर्णव्यवस्था विगतानवस्था वेदात्मना सा नु मयैव सृष्टा।**
**एतां जिहासन् नहि शान्तिमेति दन्दह्यते मे किल कोपवह्नौ॥३०॥**

**कृपा टीका**—वर्णाश्रम व्यवस्था में किसी प्रकार का अनवस्था दोष नहीं है यह वेदस्वरूप मेरे ही द्वारा बनाई गई है इसे छोड़कर मनुष्य कभी शान्ति नहीं प्राप्त कर सकता, वह मेरी क्रोधाग्नि में भस्म हो जाता है॥३०॥

**न कर्मणा सा किल जन्मनैव तथा हि यायात् विपुलानवस्थाम्।**
**जन्मापि तत्पूर्वशरीरकर्म फलानुगं राजति जीवलोके॥३१॥**

**कृपा टीका**—वर्ण व्यवस्था कर्म से नहीं जन्म से ही माननी चाहिये। कर्म से मानने पर अनवस्था दोष आ जायेगा क्योंकि यह जन्म पूर्वजन्म के कर्म का ही अनुगमन करता है। यही तो जीवलोक है॥३१॥

**लाभाय जातिर्नतु जातिवादो वर्णाभिमानोऽपि लसद्विषादः।**
**सुनिर्विवादो विलसत्प्रसादः सनातनो वैदिक धर्म एकः॥३२॥**

**कृपा टीका**—जाति लाभ के लिए है जातिवाद उचित नहीं है। वर्णाभिमान भी विषाद से युक्त ही है। एकमात्र वैदिक धर्म ही सनातन निर्विवाद एवं परमेश्वर की प्रसन्नता से युक्त है॥३२॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**को नाम जीवेदनपेक्ष्य धर्मं जीवंस्त्रिलोक्यां धृतधर्मवर्मा।**
**धर्मः प्रजा धारयति प्रसन्नः क्ष्मेव पापक्षपणे क्षमोऽयम्।।३३।।**

**कृपा टीका**—धर्म की अपेक्षा किये बिना कौन जी सकता है। धर्म का कवच पहनकर ही व्यक्ति तीनों लोकों में जी सकता है। प्रसन्न हुआ धर्म प्रजा को धारण करता है और पृथ्वी की भाँति यह प्राणियों के पाप नष्ट करने में समर्थ हैं।।३३।।

**लोके न चेत् स्याद् यदि धर्म एष भार्याभगिन्योरथकाभिदा स्यात्।**
**त्रायेत कः कल्पलतामिवाद्यां पापात्पशोर्मानवताममोघः।।३४।।**

**कृपा टीका**—यदि लोक में सनातनधर्म न होता तो पत्नी और बहिन में क्या भेद रहता और कल्पलता की भाँति सृष्टि आदि में ही प्रतिष्ठित इस मानवता की पापरूप पशु से कौन रक्षा करता।।३४।।

**तस्माद्वयं धर्मविदां वरिष्ठा विप्रादिशेमाभयमेव नित्यम्।**
**भूतेभ्य आर्तेभ्य उदारसत्वा एतद्द्विजानां हि महद्द्विजत्वम्।।३५।।**

**कृपा टीका**—इसलिये उदार चिन्तन वाले धर्मज्ञों में श्रेष्ठ हम वेदपाठी ब्राह्मण निरंतर आर्तप्राणियों को अभयदान देते रहें अर्थात् समाज को भयमुक्त करने की चेष्टा करें। यही हम ब्राह्मणों का वास्तविक ब्राह्मणत्व है।।३५।।

**एवं समाश्वास्य समान् मुनीन्द्रानामन्त्र्य रामः पितरावनिन्द्यौ।**
**जगच्छरण्योऽपि सतां शरण्यमरण्यमागात् प्रविविक्तवासम्।।३६।।**

**कृपा टीका**—इस प्रकार समस्त मुनियों को आश्वासन देकर निर्दोष माता पिता से आज्ञा लेकर संसार को शरण देने में समर्थ होते हुए भी परशुराम जी एकान्तवास के लिए संतों के शरणदायक निर्जन वन में चले गये।।३६।।

**विविक्तमास्थाय महानुभावो रामो रमानाथसमप्रभावः।**
**स्वभावसिद्धं श्रितसर्वसिद्धं विचिन्तयामास निजं स्वरूपम्।।३७।।**

**कृपा टीका**—नारायण के समान प्रभाव वाले महान तेजस्वी परशुराम जी एकान्त में स्थित होकर सभी सिद्धों के द्वारा सेवित स्वभाव से सिद्ध अपने चिन्मय स्वरूप का चिन्तन करने लगे।।३७।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कैलासनीकाशनिसर्गगौरं गौरीपतिप्रार्थितपादपद्मम्।**
**पद्मार्चितं साभरणं प्रसन्नं प्रसन्नमाकाशमिवर्क्ष्यजुष्टम्।।३८।।**

**कृपा टीका**—जो कैलास पर्वत के समान स्वभावतः गौर वर्ण हैं तथा भगवान शंकर द्वारा जिनके चरण कमल को अपनी याचना का विषय बनाया जाता है लक्ष्मी जिसकी निरंतर पूजा करती है जो दिव्य आभूषणों से सुसज्जित है तथा जो नक्षत्रों से युक्त, निर्मल आकाश की भाँति शोभायमान एवं आनन्दलिप्त है।।३८।।

**विशेष**—वैकुण्ठविहारी भगवान नारायण को भी शास्त्रों ने शुक्लवर्ण कहा है यथा-तत्रनारायणं देवं शुक्लवर्णं चतुर्भुजम्।

**वैकुण्ठवासं धृतचन्द्रहासं लक्ष्मीनिवासं श्रितकोटिदासम्।**
**अनन्तचण्डांशुसमप्रकाशं विभग्नभक्तामित याम्यपाशम्।।३९।।**

**कृपा टीका**—परशुराम जी स्वरूपभूत उन भगवान नारायण का स्मरण कर रहे थे जो वैकुण्ठ में निवास करते हैं जिनका हास चन्द्रमा के समान है जिनके हृदय में लक्ष्मीजी निवास करती हैं करोड़ों दास जन जिनका श्रयण करते हैं जिनमें अनेक सूर्यों जैसा प्रकाश है तथा जिन्होंने अपने भक्तों के अनेक यमपाश नष्ट किये हैं।३९।।

**कौमोदिकीकम्बुरथाङ्गकञ्जलसच्चतुर्बाधकबाधिबाहुम्।**
**किरीटकेयूरविभूषणाढ्यं श्रीवत्सलक्ष्मं दनुजेन्दुराहुम्।।४०।।**

**कृपा टीका**—चारों पुरुषार्थों के बाधक काम, क्रोध, लोभ, मोह को नष्ट करने वाले, जिनके श्रेष्ठ चार बाहु, कौमोदकी गदा, पाञ्चजन्य शंख, सुदर्शन चक्र तथा पुष्कर कमल से सुशोभित हैं, जो मुकुट केयूर (बाजूबंद) आदि विभूषणों से सम्पन्न हैं तथा जो श्रीवत्स लांछन से अलंकृत एवं दैत्य रूप चन्द्रमा के लिए राहु के समान हैं, ऐसे नारायण जी का परशुराम जी ने चिन्तन किया।।४०।।

**विचारयामास पुनर्मनस्वी कालो मया व्यर्थमियानयापि।**
**साकेतनाथेन यदर्थमुर्व्यां संप्रेषितः कार्यमकारि तन्नो।।४१।।**

**कृपा टीका**—फिर मनस्वी परशुरामजी ने विचार किया कि मैंने इतना समय व्यर्थ ही बिता दिया। साकेत के स्वामी श्रीराम जी के द्वारा जिस कार्य के लिए

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मैं पृथ्वी पर भेजा गया था वह कार्य मेरे द्वारा नहीं किया गया॥४१॥

**वीर्यातिरेकात् प्रतुदंस्त्रिलोकीं बर्भर्ति सम्प्रत्यपि कार्तवीर्यः।**
**फणीव संपादित दुग्धपानो दानीव दत्तेन करीप्रमत्तः॥४२॥**

**कृपा टीका**—इस समय भी दूध पिलाये हुये सर्प की भाँति तथा दत्तात्रेय द्वारा मतवाले हाथी की भाँति प्रोत्साहित किया हुआ अपने पराक्रम के अतिरेक से तीनों लोकों को कष्ट देता हुआ कृतवीर्य का पुत्र सहस्रबाहु अर्जुन उत्तरोत्तर इस समय भी बढ़ रहा है॥४२॥

**कथं निहन्यां तमसन्महीपं न पूर्वमेवाक्रमणं वरं मे।**
**मृतेऽपि सर्पे त्रुटिता न यष्टिर्यदा तदा स्याद्विबुधैः प्रशस्ता॥४३॥**

**कृपा टीका**—उस दुष्ट राजा को मैं कैसे मारूँ, मेरा प्रथम आक्रमण भी उचित नहीं है। साँप के मरने पर भी लाठी न टूटे तो ही विद्वान् उसकी प्रशंसा करते हैं॥४३॥

**यद्वा मया नात्रविचारणीयं विधास्यते सर्वमसौ खरारिः।**
**अहं तदंशः स ममास्ति चांशी ह्यहं लघीयान् स ममावतारी॥४४॥**

**कृपा टीका**—अथवा इस विषय में मुझे कुछ भी विचार नहीं करना चाहिये। सब कुछ खर के शत्रु भगवान श्रीराम करेंगे। मैं उनका छोटा सा अंश हूँ ये मेरे अंशी हैं। मैं अवतार हूँ वे मेरे अवतारी हैं॥४४॥

**इति व्यवस्यामितवीर्यशाली मालीपटुर्ब्राह्मणवाटिकानाम्।**
**रामे समभ्यर्पितचित्तवृत्ती रामाश्रयोऽयं विचचार रामः॥४५॥**

**कृपा टीका**—इस प्रकार निश्चय करके श्रीराम में अपनी चित्तवृत्ति समर्पित करके भगवान श्रीराम का आश्रय लेकर अमित पराक्रमशाली ब्राह्मण वाटिका के मालीस्वरूप श्रीपरशुराम निश्चिन्त भ्रमण करने लगे॥४५॥

**गते विविक्तं भृगुवंशकेतौ हरीच्छया प्रेरितकालचक्रः।**
**रामाशरण्यं जमदग्न्यरण्यं राजा सहस्रार्जुन आजगाम॥४६॥**

**कृपा टीका**—भृगुपति परशुराम जी के एकान्त में चले जाने पर परमेश्वर की इच्छा से कालचक्र से प्रेरित होकर राजा सहस्रार्जुन परशुराम जी के सहित जमदग्नि के आश्रम में आया॥४६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

माहिष्मतीनायकमात्तसैन्यं ज्ञात्वागतं तं सबलं सभार्यम्।
मुदा महर्षिर्व्यदधात् सुरभ्या सुस्वागतं सिद्धिबला हि सन्तः॥४७॥

**कृपा टीका**—महर्षि जमदग्नि ने सेना सहित सपत्नीक बलवान माहिष्मती के राजा सहस्रार्जुन का कामधेनु द्वारा दिव्य स्वागत किया क्योंकि संतों के पास सिद्धियों का बल होता ही है॥४७॥

तां वीक्ष्य राजाखिलकामधेनुं सुरासुरप्रार्थितपादरेणुम्।
तस्यै स भूपः स्पृहयाम्बभूव लुनाति लोभो हि सतोऽपि धैर्यम्॥४८॥

**कृपा टीका**—देवताओं एवं असुरों द्वारा जिसके चरण की धूलि चाही जाती है ऐसी सम्पूर्ण कामनाओं को देने वाली उस कामधेनु सुरभि को देखकर राजा सहस्रार्जुन ने उसको प्राप्त करनेकी इच्छा कर ली क्योंकि लोभ संतों का भी धैर्य नष्ट कर देता है॥४८॥

उवाच राजा जमदग्निमीड्यं सप्रश्रयं वाक्यममन्दवीर्यः।
प्रदीयतां मे किल कामधेनुः स्मृतो महीपो हि सुरत्नभोगी॥४९॥

**कृपा टीका**—अब राजा सहस्रार्जुन ने, जो अतुलनीय पराक्रमी था स्तुति योग्य जमदग्नि से विनम्रतापूर्वक यह वाक्य कहा, हे महर्षे कामधेनु मुझे दे दी जाए क्योंकि स्मृतियों ने राजा को ही श्रेष्ठ रत्नों का उपभोक्ता कहा है॥४९॥

तपस्विनो धैर्यधना भवन्तो वसन्तु कामं विपिने प्रशान्ताः।
वयं नृपाः वः परिपालयेम भोगैः किमेभिर्भवतां सतां भोः॥५०॥

**कृपा टीका**—महर्षे! आज लोग तपस्वी हैं धैर्य ही आपका धन है आप शान्तिपूर्वक् वन में निवास करें हम राजागण आप सब का परिपालन करें। आप जैसे सन्तों का इन स्वर्गीय भोगों से क्या लेना देना॥५०॥

इति ब्रुवन्तं नृपमाह विप्रो नेत्थं त्वया हैहयराज वाच्यम्।
गां नैव दास्यामि महीपते ते वेदान्तविद्यामिव नास्तिकाय॥५१॥

**कृपा टीका**—इस प्रकार कहते हुए राजा सहस्रार्जुन से जमदग्नि जी ने कहा हे हैहयराज! इस प्रकार तुम्हें नहीं बोलना चाहिए जिस प्रकार वेदान्त विद्या नास्तिक को नहीं दी जाती उसी प्रकार मैं तुझे कामधेनु नहीं दूँगा॥५१॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**न चोत्सहे हातुमिमामनिन्द्यां हविर्दुहं कामदुहं स्वकीयाम्।**
**कदापि गां गामिव गोपते त्वं कीर्तिं यशस्वीव सुधां शशीव॥५२॥**

**कृपा टीका**—हे राजन! जिस प्रकार तुम पृथ्वी को नहीं छोड़ सकते जैसे यशस्वी अपना यश नहीं छोड़ पाता, जैसे चन्द्रमा अपनी सुधा का त्याग नहीं कर सकता उसी प्रकार इस निर्दोष हव्य एवं कामनाओं को प्रदान करने वाली अपनी इस काय को नहीं छोड़ सकता॥५२॥

**माहिष्मतीं गच्छ समं महिष्या विषीद मा भूप मयि प्रसीद।**
**मा कामधेन्वै स्पृहयस्व मोघं ब्रह्माप्तये ग्राम्यइवाल्पपुण्यः॥५३॥**

**कृपा टीका**—हे राजन् अपनी महारानी के साथ महिष्मती नगरी को लौट जाओ। दुःखी मत होओ मुझ पर प्रसन्न रहो। जिस प्रकार थोड़े पुण्य वाला ग्रामीण भोगों में फँसा हुआ विषयी व्यक्ति निरर्थक ही ब्रह्म की प्राप्ति के लिए अभिलाषा करता है उसी प्रकार तुम कामधेनु के लिए व्यर्थ की स्पृहा मत करो क्योंकि यह तुम्हें मिलने वाली नहीं है॥५३॥

**उवाच तं हैहयवंशवह्निर्मुने नमस्यामि भव प्रसन्नः।**
**प्रदेहि मे सम्प्रति कामधेनुं षष्ठांशभोगी भवतीह राजा॥५४॥**

**कृपा टीका**—इसके अनंतर हैध्यवंश रूप बाँस की अग्नि के समान ही अपने कुल का नाशक सहस्राज्रुन जमदग्नि से बोला हे मुने! मैं आपको प्रणाम करता हूँ आप मुझपर प्रसन्न हो जाइये। मुझे कामधेनु दे दीजिए क्योंकि राजा प्रजा की संपत्ति के छठे अंश का उपभोक्ता होता है॥५४॥

**धनाद्धिरण्यान्ननु रत्नकोटेर्माणिक्यमुक्तागजमौक्तिकेभ्यः।**
**भूमेस्त्रिलोक्या अपि चाधिपत्यान्मुने प्रसन्नः प्रतियच्छ धेनुम्।५५॥**

**कृपा टीका**—हे मुने! आप प्रसन्न होकर मेरे सम्पूर्ण धन से, समग्र सुवर्ण राशि से करोड़ों रत्नों से माणिक्य मोती, गजमुक्ताओं से, अधिक क्या कहूँ तीनों लोकों के साम्राज्य से भी इस कामधेनु को बदल लीजिए अर्थात् कामधेनु के बदले में धन, सोना, करोड़ों रत्न, माणिक्य, मोती, गजमुक्ता और तीनों लोकों का साम्राज्य भी आपको दे सकता हूँ॥५५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इत्थं ब्रुवाणं जमदग्निराह गोविक्रयं नो नृपते प्रकुर्मः।**
**तथाकृते स्वौरसकन्यकानां पापं स्पृशेन्मामपि विक्रयस्य॥५६॥**

**कृपा टीका**—इस प्रकार कहते हुये राजा से जमदग्नि ने कहा हे नृपते! हम गाय नहीं बेचते ऐसा करने से हम को अपनी कन्या बेचने का पाप लगेगा॥५६॥

**इत्युक्तवत्येव स कार्तवीर्यः साक्षान्महाकालमयीं च धेनुम्।**
**बलाज्जहारामरराजलोकगवीं गवाशो रुदतीमिवाज्ञः॥५७॥**

**कृपा टीका**—जमदग्नि के इस प्रकार कहते हुए उनका अनादर करके अज्ञानी राजा सहस्रार्जुन ने साक्षात् महाकाल स्वरूपिणी स्वर्गलोक की रोती हुई कामधेनु को कसाई की भाँति बलपूर्वक हरण कर लिया॥५७॥

**अथागतस्तत्र कुठारपाणिर्वीक्ष्याश्रमं शोकसमुद्रमग्नम्।**
**शून्यं सुरभ्या सुधयाविहीनं गतश्रियं चन्द्रमिवातिदीनम्॥५८॥**
**निशम्य तद्बालमुखाद्दुरन्तमुदन्तमुग्रं विषषाद रामः।**
**सनेत्रनीरं पितरं निरीक्ष्य क्रोधात्प्रतीकारवशो बभूव॥५९॥**

**कृपा टीका**—इसके अनन्तर वहाँ आये हुए परशुराम जी कामधेनु से रहित, शोक सागर में डूबे हुए आश्रम को अमृत से हीन, शोभा रहित, अत्यन्त दीन चन्द्रमा की भाँति निहारकर, आश्रमवासी बालकों से अत्यन्त दारुण वृतान्त सुनकर बहुत ही दुखी हुए और पिताश्री को अश्रुपूरित नेत्र देखकर हाथ में फरसा लेकर क्रोध के कारण शत्रु के प्रति प्रतिक्रिया के लिए विवश हो गये॥५८-५९॥

**अहो इयं ब्राह्मणवंशपीडा व्रीडां ममोत्पादयति प्रकामम्।**
**यच्छ्रीमदान्धा गतलोकलज्जा सारस्वतान् विप्रवरांस्तुदन्ति॥६०॥**

**कृपा टीका**—अरे यह ब्राह्मण वंश की पीड़ा मेरे मन में बहुत लज्जा उत्पन्न कर रही है क्योंकि लोक लज्जा से रहित श्रीमद में अन्धे ये कुशासक सरस्वती उपासक ब्राह्मणों को बहुत कष्ट दे रहे हैं॥६०॥

**तं दण्डयिष्यामि प्रचण्डदण्डो मुनेरवज्ञोथितचण्डचण्डः।**
**निर्वापयाम्यद्य चलत्कुठारधाराम्बुना हैहयधूमकेतुम्॥६१॥**

**कृपा टीका**—महर्षि जमदग्नि के उपमान से उत्पन्न प्रखर क्रोध वाला मैं अपने

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रचण्डतम दण्ड से उस सहस्रार्जुन राजा को दंडित करूँगा। आज अपने चंचल कुठार की धारारूप जल के प्रवाह से इस हैहयरूप अग्नि को मैं बुझा दूँगा॥६१॥

**यावन्न पास्यन्ति मदीयबाणाः कदुष्णरक्तं युधि हैहयस्य।**
**तावज्जलं नो न च भोगनिद्रा रामस्य चैषा परमा प्रतिज्ञा॥६२॥**

**कृपा टीका**—जब तक मेरे बाण युद्ध में हैहयराज का गर्म रक्त नहीं पी लेंगे तब तक मैं जल भोजन और निद्रा नहीं स्वीकार करूँगा यह परशुराम की परम प्रतिज्ञा है॥६२॥

**निहन्तुकामो युधि कार्तवीर्यं कृतप्रणामो जननीपितृभ्याम्।**
**गृहीतशस्त्रो धृतवल्कवस्त्रो माहिष्मतीमेव जगाम रामः॥६३॥**

**कृपा टीका**—माता पिता को प्रणाम करके वल्कल वस्त्रधारी अस्त्रशस्त्रों से सुसज्जित परशुराम जी महाराज युद्ध में सहस्रार्जुन का वध करने की इच्छा से माहिष्मती नगरी को गये॥६३॥

**इति व्यवस्यत्यथ भार्गवेन्द्रे साङ्गत्रयोवीररसः प्रबुद्धः।**
**जाग्रन्नवोत्साहमहामहाब्धितरङ्गभङ्गाञ्चितदेहयष्टिः॥६४॥**

**कृपा टीका**—इस प्रकार परशुराम जी के सहस्रार्जुन वध का निश्चय करते ही तुरन्त जागृत हुए नवोत्साह (वीर रस का स्थायी भाव) रूप विशालतम महासागर की लहरों के संस्फुरण से रोमांचित शरीरवाला वीर रस अपने तीनों अंग–विभाव अनुभाव एवं संचारी भावों के साथ प्रबुद्ध हो गया॥६४॥

**सव्येतरस्तस्य महाभुजस्य भुजःप्रपुस्फोर भुजगनवर्यः।**
**भुजङ्गभोगोपमसत्त्वसारो भुजङ्गपर्यङ्कबलप्रचारः॥६५॥**

**कृपा टीका**—उन महाबाहु परशुराम जी का अनेक दुष्ट राजाओं के भुजदंडों को काटने के कारण श्रेष्ठ सर्पराज के फणों के समान बल एवं पराक्रम वाला शेषशायी भगवान नारायण की ही शक्ति से सम्पन्न दक्षिणबाहु फड़क उठा॥६५॥

**रुरोध रोचिष्णुशिलीमुखानां सपञ्जरे निर्जरलोभनीयाम्।**
**माहिष्मतीं तां महिषीमिवाज्ञां पलायमानां जरसा जरन्तीम्॥६६॥**

**कृपा टीका**—अब परशुराम जी ने वृद्धावस्था से पीड़ित होती हुई, भय से भागती हुई, मूर्ख बूढी भैंस के समान ही देवताओं को भी लुब्ध करने वाली माहिष्मती

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

नगरी को अपने चमकते हुए बाणों के पिंजरे में अवरुद्ध कर दिया॥६६॥

विदारयिष्यन्निव हैहयानां हृत्कर्णमस्तिष्कसमस्तशक्तिम्।
सशक्रशस्त्रामितकोटिघोरं टङ्कारयामास धनुः कठोरम्॥६७॥

**कृपा टीका**—परशुराम जी ने हैहयवंशज वीरों के हृदय, कर्ण एवं मस्तिष्क तथा समस्त शक्ति को विदीर्ण करते हुये से इन्द्र के अनेक कोटि वज्रों के समान भयावह अपने कठोर धनुष की टंकार की॥६७॥

शरेण संदेशमिहाददिदीक्षन् राज्ञे प्रचिक्षेप विविक्तवर्णाम्।
पत्री स पत्रीमिव कालदूतीं सहस्रबाहोः करयोः करङ्के॥६८॥

**कृपा टीका**—इस समय सहस्रबाहु को संदेश देने की इच्छा से परशुराम जी ने सहस्रबाहु के लिए कालदूती के समान गरुड़देव की प्रकृति वाली एकपत्रिका अपने बाण से हैहयराज के हाथों के पिटारे में फेंक दी॥६८॥

रे राजमानिन् क्षितिभुक्कलङ्क यत् कामधेनुं विजनादरण्यात्।
विमान्य वृद्धं पितरं मदीयं ध्वाङ्क्षःपुरोडाशमिवाजहर्थ॥६९॥

**कृपा टीका**—अरे राजकुल के कलंक स्वयं को सत्ताधीश माननेवाले सहस्रबाहु! जो तुम निर्जन बन से मेरे वृद्ध पिता का अपमान करके पुरोडाश (यज्ञीय द्रव्य) को कौवे की भाँति, कामधेनु को चुरा ले आये॥६९॥

किं ते कृतं तत्सदृशं कुलस्य ब्रह्मस्वमेवापहरन्ति भूपाः।
ब्रह्मण्यदेवः किल कार्तवीर्यो मिथ्याप्रवादं त्वमिमं बिभर्षि॥७०॥

**कृपा टीका**—क्या तुमने यह अपने कुल के अनुरूप किया? क्या राजागण ब्राह्मणों का धन ही हड़पते हैं? राजा सहस्रार्जुन बहुत बड़ा ब्राह्मण भक्त है इस प्रवाद को तुम झूठे ही धारण कर रहे हो॥७०॥

धिक् धिक् तव ब्राह्मणभक्तिमेतां धर्मध्वजिन्ब्रह्मकुलावमानिन्।
विकत्थसे त्वं निजवीर्यमेव राजन्यवंशापसदः स मिथ्या॥७१॥

**कृपा टीका**—हे धर्म को ध्वज बनाकर उसका मिथ्या प्रदर्शन करने वाले, हे ब्राह्मण कुल के अपमानकर्ता, तुम्हारी इस ब्राह्मण भक्ति को धिक्कार है धिक्कार है। तुम निरर्थक अपने पराक्रम की प्रशंसा करते रहते हो वह सब झूठ है। वास्तव में तुम अत्यन्त नीच क्षत्रिय कुमार हो॥७१॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**त्वां दण्डयिष्यन् समुपागतोऽहं करालकीनाश इवोग्रदण्डः।**
**द्वन्द्वाहवं देहि महिष्मतीश नान्यो द्विजोऽहं किल दक्षिणार्थी।।७२।।**

**कृपा टीका**—आज कराल यमराज की भाँति उग्रदण्ड वाला मैं तुझे दंडित करने के लिए ही यहाँ आया हूँ। हे महिष्मती के सम्राट मुझे द्वन्दयुद्ध दो। मुझे सामान्य दक्षिणा लेनेवाला जैसा तैसा ब्राह्मण मत समझो।।७२।।

**निशम्य चैतद् भृगुरामपत्रं राजा लसद्वाजिगजो युयुत्सुः।**
**दोषां सहस्रेण विवृद्धदोषो दोषाकरो राहुमिवाभ्यगच्छत्।।७३।।**

**कृपा टीका**—इस प्रकार बाण द्वारा लाये हुए परशुराम जी का पत्र मंत्री से सुनकर हाथी, घोड़ों से युक्त चतुरंगिणी सेना के साथ राहु के पास चन्द्रमा की भाँति बढ़े हुए दोषों से प्रेरित एक हजार बाहुओं से उपलक्षित सहस्रबाहु परशुराम जी पर युद्ध की इच्छा से टूट पड़ा।।७३।।

**ददर्श रामं रणरङ्गमध्ये कालं करालं स्वमिवाह्वयन्तम्।**
**विना पदत्राणशिरस्त्रमारादलातचक्रं तमिवोत्पतन्तम्।।७४।।**

**कृपा टीका**—सहस्रार्जुन ने स्वयं को ललकारते हुए कराल काल की भाँति अपने ऊपर टूट पड़ते हुये धूमरहित अग्निचक्र की भाँति पदत्राण एवं शिरस्त्राण के बिना ही समर भूमि के मध्य व्यवस्थित परशुराम जी को दूर से देखा।।७४।।

**कुठारपाणिं मृगराजसत्त्वं क्रोधोज्ज्वलद्रक्तविशालनेत्रम्।**
**रथादवातीर्य सहस्रबाहुस्तमर्जुनश्छद्मधिया ववन्दे।।७५।।**

**कृपा टीका**—परशुराम जी के हाथ में फरसा था। उनका पराक्रम सिंह के समान था। उनके विशाल नेत्र पिता के अपमान से उद्दीप्त क्रोध के कारण लाल हो रहे थे। इसके अनंतर रथ से उतरकर राजा सहस्रार्जुन ने कपट भाव से परशुरामजी को प्रणाम किया।।७५।।

**धन्योऽसि भो युद्धरसैकगृध्नो संवर्धितं विप्रकुलं त्वयैव।**
**सुस्वागतं ते भृगुवंशकेतो दत्तं मया द्वन्द्वरणं घटस्व।।७६।।**

**कृपा टीका**—युद्धरस के एक मात्र लुब्ध भोक्ता तुम धन्य हो। मुनिकुमार तुमने ही ब्राह्मणकुल को अपने तेज से बढ़ाया है। हे भृगुवंश की पताका तुम्हारा स्वागत है। मैंने तुम्हें द्वन्द्वयुद्ध दे दिया अब पराक्रम दिखाओ।।७६।। यहाँ तक उपजाति छन्द है।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ततः प्रवृत्तमात्तरोषकोषयोः सतोषयोः
विरुद्धयुद्धमद्भुतं प्रचण्डचण्डमुद्धतम्।
तड़त्तड़त्तड़त्तड़च्छतघ्निका शतप्रभा
स्फुरत्स्फुलिंगमालया विलुप्तचण्डदीधिति।।७७।

**कृपा टीका**—इसके अनंतर अपने अपने पराक्रम से संतुष्ट क्रोध के कोषागार परशुराम एवं सहस्रार्जुन का वह अद्भुत विरुद्ध युद्ध प्रारम्भ हुआ जो प्रचण्ड क्रोध के कारण उद्धत था तथा तडतड़ाती तोपरूप बिजलियों की स्फुरित होती हुई लपटों की माला से जिसमें स्वयं सूर्यनारायण छिप गये थे।।७७।। यहाँ से श्लोक संख्या ८१ तक नगस्वरूपिणी अथवा पञ्चचामर छन्द है।

रथाश्वमत्तसादिमत्दुरन्तमप्यनादिमत्
परस्परप्रमादिमद्विरुद्धवीरवादिमत्।
प्रवृद्धवीर्यवाडवं प्रगल्भशस्त्रलाघवं
प्रसिद्धसैन्यपाटवं करालकालताण्डवम्।।७८।।

**कृपा टीका**—जिसमें रथ, घोड़े, मतवाले हाथी तथा पैदल सैनिक थे जिसका अन्त भयंकर था और जो अनादि देवता नारायण स्वरूप परशुराम से युक्त था जिसमें परस्पर के प्रति प्रमाद एवं विरुद्ध वीरों का गर्जन था जहाँ पराक्रमरूप वाडवाग्नि प्रबल हो रहा था जिसमें शस्त्रों की लघुता का प्रगल्भता से प्रयोग हो रहा था जिसमें सैनिकों की पटुता प्रसिद्ध थी। ऐसा वह करालकाल के ताण्डव से युक्त अद्भुत युद्ध था।।७८।।

इतो निरस्तसंभ्रमो विधूतविश्वविभ्रमो
गतभ्रमः परिभ्रमन् भृगूत्तमःस्म राजते।
ततोऽप्यदैन्य सैन्य सांयुगीन शक्तिसर्जनः
सदत्तसत्कृपार्जनः सहस्रबाहुरर्जुनः।।७९।।

**कृपा टीका**—इधर सुशोभित हो रहे थे सबका सम्भ्रम दूर करने वाले सभी विभ्रमों को नष्ट करके स्वयं भ्रमरहित होकर रणभूमि में परिभ्रमण करते हुए भृगुवर्य परशुराम, तो उधर था प्रसन्न सैनिक एवं सामरिक शक्ति का निर्माता दत्तात्रेय की श्रेष्ठ कृपा का अर्जन करने वाला सहस्रबाहु अर्जुन।।७९।।

प्रवीरवाजिमत्तशस्त्रमत्स्यनक्रसंकुलत्
समुल्लसत्सहस्रबाहुसैन्यघोरसागरम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**अजांशकच्छतीव्रशस्त्रवासुकिर्महाबलो**
**रसोज्ज्वलो भयानलो ममन्थ राममन्दरः॥८०॥**

**कृपा टीका**—प्रकृष्ट योद्धा, घोड़े, हाथी एवं शस्त्ररूप मछलियों एवं मकरों से युक्त ऐसे सुशोभित होते हुए सहस्रबाहु के सेनारूप घोर सागर को ब्रह्मा के अंश शिव को कच्छप तथा तीव्र आयुधों को वासुकि नाग बनाकर वीररस से उज्ज्वल भयरूप अग्नि से युक्त परशुराम रूप मंदराचल ने मथ डाला॥८०॥

**क्वचित्छिरो विखण्डनं क्वचित्कबन्धकृन्तनं**
**क्वचित्पदादिलुण्ठनं क्वचित्प्रवीरतर्जनम्।**
**प्रभञ्जनो यथा घनं विधूय शात्रवं बलं**
**प्रचण्डचण्डविग्रहो जगर्ज रामकेशरी॥८१॥**

**कृपा टीका**—कहीं पर शिरों के टुकड़े किये जा रहे थे कहीं धड़ कट रहे थे कहीं पैदल सैनिक लोट रहे थे तो कहीं योद्धा एक दूसरे को तर्जित कर रहे थे। इस प्रकार प्रचण्ड क्रोध के विग्रह स्वरूप परशुराम महासिद्ध ने मेघघटा को वायु की भाँति शत्रु सेना को तितर बितर करके गंभीर गर्जना की॥८१॥

**एवं हतेऽखिलबले बलिबन्धिबन्धु स्निग्धावतारवपुषा रणकर्कशेन।**
**क्रुद्धस्तमभ्यपपतच्छलभो यथाग्निं रुद्रास्यचापशतकोऽथ सहस्रबाहुः॥८२॥**

**कृपा टीका**—इस प्रकार युद्ध में अत्यन्त कठोर तथा बलि को वरुण पास में बाँधने वाले गरुड़ देव के स्वामी भगवान् नारायण के स्नेहभाजन अवतार से आवेशित शरीर श्री परशुराम द्वारा सहस्रबाहु के सम्पूर्ण सैन्यबल के समाप्त कर दिये जाने पर अग्नि में पतंगे की भाँति क्रुद्ध होकर पाँच सौ धनुष लेकर सहस्रबाहु परशुराम जी पर टूट पड़ा॥८२॥ यहाँ से श्लोक ९५ तक वसन्ततिलका छन्द है।

**तं पञ्चकार्मुकशतेरित भीमवह्नि ज्वालाज्वलच्छिख निशातशरालिजालैः।**
**जैत्रो जजाल जलदो जलजान्वयस्य प्रेष्ठं मुहूर्तमिव संयति कार्तवीर्यः॥८३॥**

**कृपा टीका**—पाँच सौ धनुषों से प्रेरित भयंकर अग्नि ज्वाला से देदीप्यमान लपटों से युक्त तीखे बाण समूह रूपजलराशि से बादल की भाँति सहस्रार्जुन ने युद्ध में भगवान् शंकर के प्रिय शिष्य विजयशील परशुराम जी को मुहूर्त भर के लिए ढक दिया॥८३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**स ग्रीष्मकोटिशतभानुसमप्रभावश्चापाच्युतागिनशरमेव प्रहृत्य शीघ्रम्।**
**भस्मीचकार रिपुबाणचयं क्षणेन श्रीरामनामजपतामिव पातकानि।।८४।।**

**कृपा टीका**—ग्रीष्मकालीन अरबों सूर्यों के समान प्रभा वाले परशुराम जी ने धनुष से शीघ्र ही अग्निबाण का प्रहार करके शत्रु के बाण समूहों को क्षण भर में उसी प्रकार भस्म कर दिया जैसे श्रीरामनाम का नाम जप, करने वाले के पापों को भस्म कर देता है।।८४।।

**पार्जन्यशस्त्रमथहैहयराजमुक्तं यावत्क्षणं दमयितुं दहनं प्रयेते।**
**तावद्भृगूत्तमसमीरसमीरशस्त्रं मोघीचकार किमनन्तबलस्य चित्रम्।।८५।।**

**कृपा टीका**—इसके अनंतर हैहयराज सहस्रार्जुन द्वारा छोड़े हुये पार्जन्यास्त्र ने जब तक परशुराम के बाण से उत्पन्न अग्नि को बुझाने का प्रयास किया तब तक परशुराम जी द्वारा छोड़े हुये वायव्यास्त्र ने पार्जन्यास्त्र को विफल कर दिया, अनन्तर बलशाली परशुराम जी के लिए यह कौन सा आश्चर्य है।।८५।।

**क्रुद्धोऽर्जुनो धनुषि पार्वतशस्त्रमुग्रं यावद्दधे विहितपर्वतभूरिवर्षम्।**
**वज्रास्त्रतः सपदि वज्रधरानुजांशो धूलीचकार धृतशात्रवनेत्रधूलिः।।८६।।**

**कृपा टीका**—अनंतर क्रुद्ध होकर सहस्रार्जुन ने पर्वतों की वर्षा करने वाले भयंकर पार्वतास्त्र को ज्यों ही धनुष पर रखा तब तक शत्रु की आँखों में धूलि झोंकते हुए वज्रपाणि इन्द्र के अनुज विष्णु के अंशावतार परशुराम जी ने उसे वज्रास्त्र से धूल में मिला दिया।।८६।।

**रुष्टोऽर्जुनः परशुरामजिघांसया वै यावद्दधे धनुषि पाशुपतास्त्रमुग्रम्।**
**तावद्भृगूत्तम प्रयोजितभीमशस्त्रे नारायणे समलयत् तदतीव चित्रम्।।८७।।**

**कृपा टीका**—क्रुद्ध सहस्रार्जुन ने परशुराम जी को मार डालने की इच्छा से ज्यों ही अपने धनुष पर पाशुपतास्त्र का संधान किया उसी समय परशुराम जी द्वारा प्रयुक्त नारायण नामक भयंकर अस्त्र में पाशुपतास्त्र समा गया। यह अत्यन्त आश्चर्यमय घटना घटी।।८७।।

**तत् साधुसाधुमुनयो विबुधाश्च चक्रुः शंसन्तईड्यचरितं भृगुवंशकेतोः।**
**नेदुर्दिवो विबुधदुन्दुभयस्तदानीं कीर्तिं जगुर्मुदित किंपुरुषासुगाश्च।।८८।।**

**कृपा टीका**—इस कर्म से संतुष्ट होकर मुनियों और देवताओं ने परशुराम जी के इस चरित्र की प्रशंसा करते हुए साधु-साधु शब्द का उच्चारण किया उस

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

समय स्वर्ग की दुन्दुभियाँ बजने लगीं, किन्नर तथा गन्धर्व परशुराम जी का यशोगान करने लगे॥८८॥

**शक्तिस्त्रिशूलमथ चक्रपरश्वधाद्या रामे विरुद्ध मनसाप्रसभं प्रयुक्ताः।**
**सर्वे तदैव विफला हतशक्तिकास्ते क्षिप्रं बभूवुरिव दुष्टमनोरथाश्च॥८९॥**

**कृपा टीका**—जिस प्रकार दुष्टों के मनोरथ विफल हो जाते हैं उसी प्रकार विरुद्ध मन वाले सहस्रबाहु द्वारा परशुराम जी पर फेंके हुए शक्ति त्रिशूल चक्र परश्वध तोमर परिघ आदि सभी आयुध शक्तिहीन एवं निष्फल हो गये॥८९॥

**भूयो व्यभावयदयं मनसा मनस्वी संक्रीडितो बहु मया किल हैहयेशः।**
**शीघ्रं निहन्मि खरधारपरश्वधेन ब्रह्मावमानहतपूर्वममन्दपापम्॥९०॥**

**कृपा टीका**—फिर मनस्वी परशुराम जी ने मन में विचार किया कि मेरे द्वारा हैहयराज बहुत देर तक खिलाया गया अब ब्राह्मणों के अपमान से पूर्व में ही मरे हुए इस महापापी को तीक्ष्ण धारा वाले फरसे से मार डालता हूँ॥९०॥

**एवं व्यवस्य भगवान् धृतचण्डचापः शीघ्रं चकर्त धनुषां शतकानि पञ्च।**
**क्रोधाज्जडीकृतविवेकविलोचनं तं वीरो महारथमसौ विरथञ्चकार॥९१॥**

**कृपा टीका**—इस प्रकार निश्चय करके प्रचण्ड धनुष वाले भगवान परशुराम ने सहस्रबाहु के पाँच सौ धनुषों को शीघ्र ही काट दिया और क्रोध से जड़ीभूत नेत्र वाले उस महारथी को वीर भृगुनंदन ने विरथ कर दिया॥९१॥

**भग्नोरथो विनिहतास्तुरगाश्च सर्वे सूतोऽपि कृत्तशिरसा सहसा पपात।**
**तूणानिनष्टविशिखानि तदासभूयो मर्तव्यमेव मनसा परिनिश्चिकाय॥९२॥**

**कृपा टीका**—जब सहस्रार्जुन का रथ टूट गया, उसके चारों घोड़े मर गये, सारथी भी कटे मस्तक के साथ पृथ्वी पर गिर गया, उसके तरकश बाणों से रिक्त हो गये तब सहस्रार्जुन ने मरना ही है ऐसा मन से निश्चय कर लिया॥९२॥

**यं विश्वविश्वविजयीदशकन्धरोऽपि प्राभून्न चाभिभवितुं धृतमुक्त आजौ।**
**रेवाप्रवाहपरिव्र्तनसौण्ड्यबाहुं रामो रणे गणयतेस्म न तं तृणाय॥९३॥**

**कृपा टीका**—युद्ध में पहले पकड़कर छोड़ा हुआ सम्पूर्णविश्व का विजयी रावण भी जिस सहस्रबाहु को नहीं हरा पाया उसी नर्मदा के प्रवाह को परिवर्तित करने में कुशल बाहुवाले सहस्रबाहु को परशुराम ने युद्ध में तृण के समान भी नहीं गिना॥९३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तं हन्तुकाममनसा भृगुवंशवर्यो विज्यं धनुः सपदि सज्जमसाववकार्षीत्।**
**ब्रह्मद्विषां प्रबलकालकराललोलज्ज्वालामयं स्वधितिमेव करेऽग्रहीत् सः॥९४॥**

**कृपा टीका**—उसको मारने की इच्छा से परशुराम जी ने शीघ्र ही अपने धनुष पर प्रत्यंचा चढ़ाई और ब्राह्मणद्रोहियों के लिए प्रबल काल से कराल चंचल ज्वाला से युक्त फरसे को हाथ में ले लिया॥९४॥

**तं खड्गपाणिमभियान्तमरातिमारात् संस्तभ्यमार्गणगणैः सपरश्वधेन।**
**रामः सहस्रभुजबाहुसहस्रमुग्रो वव्रश्च काण्डनिकरानिव पादपस्य॥९५॥**

**कृपा टीका**—हाथ में तलवार लेकर आक्रमण करते हुए निकट आये शत्रु को वाणों के समूह से रोककर उग्र स्वभाव वाले परशुराम जी ने वृक्ष की शाखाओं की भाँति सहस्रबाहु की एक सहस्र भुजाओं को अपने फरसे से काट दिया॥९५॥

**स हैहयपते शिरोमुकुटकुण्डलाढ्यं नृपाभिषेकजलबिन्दुभिर्विलसितंश्लथत्कुन्तलम्।**
**कठोरतमनेमिना परशुनापतिभ्योदिशां चकर्त कृतिनाम्वरो बलिमिवादिशन् भार्गवः॥९६॥**

**कृपा टीका**—कृतियों में श्रेष्ठ उन परशुराम जी ने राज्याभिषेक के जल बिन्दुओं से सुशोभित बिखरे हुए बालों वाले मुकुट एवं कुंडलों से सुशोभित हैहयराज अर्जुन सहस्रबाहु के सिर को मानो दिक्पालों को बलि चढ़ाते हुए कठोर धारा वाले फरसे से काट दिया॥९६॥ पृथिवी छन्द।

**धनुश्रुगभिमेदुरे भृगुपकोपवैश्वानरे रणांगणसुचत्त्वरे सुभटराववेदस्वरे शराहुतिमनोहरे।**
**नृपतिकाष्ठसंजागरे सहस्रभुजमध्वरे पशुमिवाजुहोद्भार्गवः॥९७॥**

**कृपा टीका**—धनुष रूप स्रुवा के कारण सुन्दर लगने वाले परशुराम जी के क्रोधरूप दक्षिणाग्नि से युक्त समरांगणरूप वेदिका से सुशोभित, वीरों की चीत्कार रूप वेदध्वनि से मंडित, बाण रूप आहुतियों से अत्यन्त मनोहारी, अनेक राजारूप समिधा से युक्त, युद्धरूप महायज्ञ में परशुराम जी ने बलिपशु की भाँति सहस्रबाहु अर्जुन को हवन कर दिया॥९७॥ पृथिवी छन्द।

**देवा हृष्टा बवृषुरनघं पारिजातप्रसूनै रेजे राजा रुचिततमसामोषधीनामिवासौ।**
**माहिष्मत्याः सह निववृते कामधेन्वा महात्मा पित्र्याऽरण्यं पृथुलचरितः किन्नरैर्गीतिकीर्तिः॥९८॥**

**कृपा टीका**—देवताओं ने कल्पवृक्ष के पुष्पों की निष्पाप परशुराम जी पर वर्षा की। अन्धकार को भी प्रकाशित करने वाली औषधियों के पति चन्द्रमा के समान परशुराम जी सुशोभित हुये किन्नरों द्वारा जिनका यश गाया जा रहा था ऐसे

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अगणित चरित्रों वाले महात्मा परशुराम जी माहिष्मती से कामधेनु के साथ पिताजी के वन में लौट आये॥९८॥ मन्दाक्रान्ता छन्द।

**हत्वा संयति भूसुरद्रुहमसौ भूपं सहस्रार्जुनं कृत्वा दारुणदेवविस्मयकरं संग्राममत्युल्बणम्।**
**दिव्यं ब्राह्मणवंशविश्रुतयशो लोकत्रयंगापयन् पित्रोस्तोषकरश्चिरं विजयते वीरव्रती भार्गवः॥९९॥**

**कृपा टीका**—इस प्रकार देवविस्मयकारी अत्यन्त भयंकर संग्राम करके युद्ध में ब्राह्मणद्रोही राजा सहस्रार्जुन का वध करके दिव्य ब्राह्मणवंश का विमल यश तीनों लोकों से गवाते हुए माता एवं पिता को प्रसन्न करनेवाले अखण्ड ब्रह्मचारी परशुराम जी सदैव सबसे श्रेष्ठ होकर विराज रहे हैं॥९९॥ शार्दूलविक्रीडित छन्द।

**इति- भृगपतिर्हत्वारामः सहस्रभुजं रणे सुरभिसुरभिर्वीरोधीरो धरासुरभूषणम्।**
**सुरमुनिगणोद्गीतः प्रीतः पितुःपदपङ्कजं रणरसलसन्मूर्ध्ना प्रेम्णा स्पृशन् मधुपव्रतः॥१००॥**

**कृपा टीका**—इस प्रकार युद्ध में सहस्रबाहु को मारकर कामधेनु से सुशोभित होकर परमधीर वीर ब्राह्मणवंश के विभूषण भृगुवर्य श्री परशुराम जी ने देवताओं एवं मुनियों से प्रशंसित होकर प्रसन्नतापूर्वक भ्रमर की भाँति प्रेम से वीररस से सुशोभित पिताश्री के पदपद्म का स्पर्श किया॥१००॥ हरिणी छन्द।

**इत्थं शुभे भार्गवराघवीये भव्ये महाकाव्य उदारवृत्ते।**
**षष्ठस्तु सर्गः कविरामभद्राचार्यप्रणीते भवताच्छ्रियै नः॥१०१॥**

**कृपा टीका**—इस प्रकार महाकवि रामभद्राचार्य द्वारा विरचित भव्य सुन्दर वृत्तों वाले कल्याणकारी इस भार्गवराघवीय नामक महाकाव्य में प्रस्तुत किया हुआ यह छठा सर्ग हम लोगों की श्री अर्थात् भौतिक एवं भक्ति सम्पत्ति के लिए हो॥१०१॥ उपजाति छन्द।

**इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामिरामभद्राचार्यप्रणीते श्रीभार्गवराघवीये महाकाव्ये 'सहस्रार्जुनवधो' नाम षष्ठः सर्गः॥**

**॥श्रीराघवः शन्तनोतु॥**

इस प्रकार धर्मचक्रवर्ती महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामी रामभद्राचार्य द्वारा विरचित श्रीभार्गवराघवीयम् नामक महाकाव्य में 'सहस्रार्जुनवध' नामक षष्ठ सर्ग सम्पन्न हुआ।

॥श्रीराघवः शन्तनोतु॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥श्रीमद्राघवो विजयते॥

# सप्तमः सर्गः

**आकर्ण्य पुत्रस्य जयं जयैषिणो दृष्ट्वा सहस्रार्जुनशातनं सुतम्।**
**पादे पतन्तं प्रणिपातमुद्रया नैवाभ्यनन्दत् स पिता निनिन्द तम्॥१॥**

**कृपा टीका**—विजयशील पुत्र की सहस्रबाहु पर विजय सुनकर तथा सहस्रार्जुन का वध करने वाले प्रणाम की मुद्रा से अपने चरणों में गिरते हुए पुत्र को देखकर भी पिता ने परशुराम जी का अभिनंदन नहीं किया प्रत्युत उनकी निन्दा ही की॥१॥ यहाँ से श्लोक संख्या ९ तक इन्द्रवंशा छन्द है। इस सर्ग में विविध छन्दों का प्रयोग है।

**आहैनमारात् प्रणतं कृताञ्जलिं पुत्रं परिष्वज्य पिताश्रुलोचनः।**
**किं ते कृतं वत्स दुरन्तमन्युतो विप्रः क्षमासारकृतिर्हि शस्यते॥२॥**

**कृपा टीका**—अपने निकट हाथ जोड़कर बैठे हुए पुत्र का आलिंगन करके अश्रुपूरित नेत्र से पिता जमदग्नि ने कहा पुत्र! दुःखद परिणाम वाले क्रोध के कारण तुमने यह कर डाला? क्योंकि ब्राह्मण तो क्षमायुक्त कार्य से ही शोभित होता है॥२॥

**मूर्धाभिषिक्तस्य महीपतेर्वधः पापावहो ब्रह्मवधादपि स्मृतः।**
**तं त्वं विधायाद्य मुधा विकत्थसे क्रोधो हि पापस्य निदानमुच्यते॥३॥**

**कृपा टीका**—मूर्धाभिषिक्त राजा का वध ब्रह्महत्या से भी अधिक पापा वह होता है आज़ उसी को करके तुम अपने को व्यर्थ ही प्रशंसित कर रहे हो। क्रोध को ही पाप का कारण कहा जाता है॥३॥

**द्वारत्रयं यद्यपि नैरयं बुधा सक्रोधलोभंमदनं समुज्जगुः।**
**क्रोधस्तु ताभ्यां बलवत्तरः स्मृतः सन्मध्यमेवाङ्गुलिरेष मध्यमः॥४॥**

**कृपा टीका**—यद्यपि विद्वानों ने काम, क्रोध, लोभ इन तीनों को नरक का द्वार कहा है फिर इनमें मध्यवर्ती क्रोध, मध्यमा अँगुली की भाँति काम और लोभ इन दोनों से अधिक बलवान है॥४॥

**क्रोधो हि धर्मस्य दुरत्ययो रिपुः क्रोधो गवाशो मनुजत्वगोपतेः।**
**क्रोधो महादारुणरक्षसांपतिः क्रोधः पिशाचः पिशिताशनो नृणाम्॥५॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—क्रोध ही धर्म का अविनाशी शत्रु है। क्रोध ही मनुष्यत्व रूप बैल का कसाई है। क्रोध ही सबसे बड़ा राक्षस है और क्रोध ही मनुष्यों का माँस खाने वाला पिशाच है॥५॥

**तद्वत्स तीर्थाटमतो दुरत्ययं पापं द्रुतं क्षालयितुं त्वमर्हसि।**
**तीर्थाम्बुभिर्धूतसमस्तकल्मषो राहूज्झितश्चन्द्रइवावभास्यसि॥६॥**

**कृपा टीका**—इसलिये पुत्र अब तुम तीर्थयात्रा से ही इस भयंकर पाप का प्रक्षालन करो। तीर्थों के जल से अपने समस्त कल्मषों को धोकर चन्द्रग्रहण मोक्ष के समय राहु से मुक्त हुए चन्द्रमा की भाँति तुम सुशोभित होओगे॥६॥

**इत्युक्तवन्तं जमदग्निमादरात् स्वां मातरं च प्रणिपत्य भार्गवः।**
**तीर्थीचिकीर्षन् पदपद्मरेणुभिस्तीर्थानि गन्तुं भगवान् मनोदधे॥७॥**

**कृपा टीका**—इस प्रकार आदेश देते हुए पिता जमदग्नि को एवं अपनी माता रेणुका जी को आदरपूर्वक प्रणाम करके अपने चरणकमल के पराग से तीर्थों को भी पवित्र करने की इच्छा से भगवान परशुराम जी ने तीर्थयात्रा करने का मन बना लिया॥७॥

**तीर्थेषु मज्जन् प्रणमन् मुदा क्वचित् स्थानानि पश्यन् मृडयंश्च कुत्रचित्।**
**भ्राम्यन् क्वचित् क्वापि च रेणुकासुतश्चिच्चित्रकूटं ससुखं समाययौ॥८॥**

**कृपा टीका**—रेणुकापुत्र परशुराम किन्हीं तीर्थों में स्नान करते, कहीं प्रसन्नता से प्रणाम करते कहीं देवस्थानों के दर्शन करते, कहीं भ्रमण करते हुए चिन्मय चित्रकूट आ गये॥८॥

**मन्दाकिनीवारि विधूतकल्मषं, वृक्षावली शीतलचण्डदीधितिम्।**
**श्रीचित्रकूटं स निरीक्ष्य राघवीः सस्मार लीलाः श्रितपूर्वकल्पिकाः॥९॥**

**कृपा टीका**—मंदाकिनी के जल से निष्पाप तथा वृक्षावलियों के कारण सूर्यनारायण की शीतल किरणों से सुशोभित श्रीचित्रकूट को निहारकर परशुराम जी ने इसी चित्रकूट में पूर्वकल्पों में सम्पन्न हुई श्रीराघवेन्द्र सरकार की लीलाओं का स्मरण किया॥९॥

**मन्दाकिनी वारिपवित्रकूटः संसारपाथोधिवहित्रकूटः।**
**सीतेशपादाब्जविचित्रकूटो मत्पापकूटं द्यतु चित्रकूटः॥१०॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—परशुराम जी बोले-जिनके शिखर मंदाकिनी के जल से पवित्र हो चुके हैं एवं जिनके शृंग संसार सागर के लिए नौका के समान हैं तथा जिनके कूट सीतापति भगवान श्रीराम के चरणकमलों के विशिष्ट चित्रों से अंकित हैं वही श्रीचित्रकूट हमारी पापराशि को समाप्त कर दें॥१०॥ इन्द्रवज्रा छन्द।

**त्रिजगदवनहत हरिजननिधुवन**
**निजवनरुचिजितशतशत विधुवन।**
**तरुवरविभवविनत सुरवरवन**
**जयतिविरतिघनइव रघुवर वन॥११॥**

श्री परशुरामजी अपने में लघुता का अनुसन्धान करके सात लघुमात्रिक छन्दों द्वारा श्रीचित्रकूट की स्तुति कर रहे हैं।

**कृपा टीका**—हे भगवान श्रीराम के वन श्रीचित्रकूट! हे तीनों लोकों के रक्षक, हे भगवद्भक्तों के ग्राम्यभोगों के निवारक, हे अपने जल की शोभा से असंख्य चन्द्रशोभा को पराजित करने वाले, हे श्रेष्ठवृक्षों के वैभव से असंख्य नन्दनवनों को भी झुकाने वाले तुम वैराग्य की घनीभूतराशि के समान विराज रहे हो॥११॥

**मदनमथनसुखसदनविधुवदन**
**गदितविमलवरविरुदकलिकदन।**
**शमदमनियम महितमुनिजनधन**
**लससि विवुधमणिरिवहरिपरिजन॥१२॥**

**कृपा टीका**—काम के शत्रु शिवजी के सुखमन्दिरस्वरूप तथा चन्द्रवदन भगवान श्रीराम जी के द्वारा जिनका निर्मल यश गाया गया है ऐसे कलिमल के नाशक तथा शम दम नियमादि सात्विक भावनाओं से पूजित मुनिजन के धनस्वरूप श्रीरामचन्द्र के प्रिय परिजनरूप आप संसार में चिन्तामणि की भाँति सुशोभित हो रहे हैं॥१२॥

**जनकदुहितरमहिपमपिसुखयसि**
**सुखमुखमपि शुचिसुमुख सुमुखयसि।**
**विबुधविपिनमपि हरिसख सखयसि**
**यतिजनमखमपि सुमखसुमखयसि॥१३॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—आप जनकपुत्री सीता जी तथा लक्ष्मण जी को भी सुख देते हैं। पवित्र सुन्दर वृक्षावलिरूपमुखमण्डित आप सुख के कारण स्वरूप श्रीराम को भी प्रसन्नमुख कर देते हैं। हे श्रीराम के मित्र! आप नन्दनवन को भी अपना मित्र बना रहे हैं तथा संन्यासियों के यज्ञ को सफल बना रहे हैं॥१३॥

**मनसिजजवमपि सुजवविफलयसि**
**खलकुलरवमपि सुखर्विकलयसि।**
**कलिमल बलमपि सबलमबलयसि**
**गुणिगणकुलमपि कुशलकुशलयसि॥१४॥**

**कृपा टीका**—हे सुन्दर वेगशाली श्री चित्रकूट! आप काम के वेग को भी विफल कर देते हैं। हे रामनाम की झंकार से पूर्ण आप दुष्टों के कोलाहल को भी शान्त कर देते हैं। आप सेना सहित कलिकाल के मलसमूह को भी निर्बल कर देते हैं। हे कुशल शिरोमणे! आप गुणग्राहियों के समूह को भी निष्णात बना देते हैं॥१४॥

**विटपनिविडनिगडितमनसिजजव**
**शिखरिशकलशकलितभवपरिभव।**
**मुनिजनभजनमहितखगकलरव**
**रघुवरवनमयि सकरुण इह भव॥१५॥**

**कृपा टीका**—हे सघनवृक्षसमूह के द्वारा कामवेग को अवरुद्ध करने वाले तथा पर्वतखण्डों के द्वारा संसार के अपमान को समाप्त करने वाले, मुनिजन के भजन तथा सुन्दर पक्षियों के कलरव से युक्त श्रीरामचन्द्र जी के वन श्रीचित्रकूट! आप मुझ परशुराम पर सकरुण हों॥१५॥

**रघुपतिगृहिणिनयनसुखनवदल**
**हरिपदजलजरसितसितजलकल।**
**सुरनरमुनिगणगुणितसुजनबल**
**विफलयममभवरुजमपि फलफल॥१६॥**

**कृपा टीका**—हे चित्रकूट! आपके नये नये पल्लव श्रीरामचन्द्र जी की धर्मपत्नी श्रीसीताजी के नेत्रों को सुख देते हैं तथा आपका सुन्दर जल श्रीरामचन्द्र जी के

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चरणकमल के मकरन्द से स्वादयुक्त है। आपका देवता, मनुष्य और मुनिजन गुणगान गाते हैं तथा आप सज्जनों के बल हैं। इसीलिए चारों पुरुषार्थों के महाफलरूप श्रीचित्रकूट, आप मेरे सांसारिक रोग को विफल अर्थात् नष्ट कर दें॥१६॥

**सुकृतसुभगसुरवरतरुफल जय**
**फणिपतिरघुपतिचरणविमल जय।**
**कलिमलखलकुलकदनकुशल जय**
**गिरिधरसुखवननयनसुफल जय॥१७॥**

**कृपा टीका**—हे पुण्यरूप सुन्दर कल्पवृक्ष के फलस्वरूप चित्रकूट, आपकी जय हो। हे श्रीलक्ष्मण तथा श्रीरामचन्द्र जी के चरणकमलों द्वारा पवित्र, आपकी जय हो। हे कलियुग के मल तथा दुष्टों के नाश में कुशल, आपकी जय हो। हे कामदगिरि से सुशोभित, सुखमय वन तथा दर्शकों के नेत्रों को सुन्दर फलस्वरूप आपकी जय हो॥१७॥

**परं निर्गुणं ब्रह्मलीलातडागं कृपादोर्लताहंसकं हंसभागम्।**
**मुदा यत्र रेमे चिरं रामसंज्ञं सदा सादरं तं स्तुवे चित्रकूटम्॥१८॥**

**कृपा टीका**—ललित लीलाओं के सरोवरस्वरूप कृपाशक्ति रूपिणी सीताजी की बाहु लता को अपने कंठ का आभूषण बनाकर सूर्य की जैसी तेजोमयी कान्ति से अलंकृत होकर श्रीरामनाम वाले निर्गुण परम ब्रह्म परमात्मा जिन श्रीचित्रकूट में बहुत दिनों तक रमण करते रहे उन्हीं श्रीचित्रकूट की मैं सादर सदैव स्तुति करता हूँ॥१८॥ अब श्लोक संख्या २५ तक भुजंगप्रयात छन्द है।

**कृता पर्णशाला सुरैर्राघवार्थे किरातायितैर्यस्य दिव्ये प्रदेशे।**
**गिरीणां प्रणम्यं प्रभग्नत्रिकूटं सदा सुन्दरं तं ब्रुवे चित्रकूटम्॥१९॥**

**कृपा टीका**—जहाँ किरातवेशधारी देवताओं द्वारा श्रीराघव सरकार के लिए पर्णशाला बनाई गई उन्हीं पर्वतों के प्रणम्य काम क्रोध लोभ रूप त्रिकूट को नष्ट करने वाले सुन्दर श्रीचित्रकूट को मैं सदैव गाता रहता हूँ॥१९॥

**सदा मैथिलीपादपद्मप्रपन्नं शुचिं साधकानां समूहाभिपन्नम्।**
**हरिद्भिर्द्रुमैः संकुलं सुप्रसन्नं विचित्रं चिदा संश्रये चित्रकूटम्॥२०॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—सीता जी के श्रीचरणकमल में निरंतर प्रपन्न एवं सदैव साधकों के समूह से युक्त हरे हरे वृक्षों से युक्त अत्यन्त प्रसन्न ऐसे विचित्र श्रीचित्रकूट को मैं अपनी चेतना से आश्रय बना रहा हूँ॥२०॥

**क्वचिल्लक्ष्मणेनामुदा लाल्यमानं क्वचिद्रामचन्द्रेण संचर्यमाणम्।**
**क्वचिद्देववृन्दैः समभ्यर्च्यमानं विमानं मुहुः संदधे चित्रकूटम्॥२१॥**

**कृपा टीका**—कहीं लक्ष्मण जी द्वारा प्रेमपूर्वक दुलारे जाते हुए कहीं भगवान श्रीरामचन्द्र जी के द्वारा प्रसन्न किये जाते हुये तथा कहीं देववृन्दों द्वारा पूजे जाते हुए ऐसे मानरहित तथा मान को हरने वाले श्री चित्रकूट को मैं बारबार अनुसंधान का विषय बनाता हूँ॥२१॥

**प्रयागादितीर्थैर्लसच्चारुकूटं खरद्विट्कृते देवतादारुकूटम्।**
**त्रिलोकेश वन्दारुमन्दारकूटं महोदारकूटं भजे चित्रकूटम्॥२२॥**

**कृपा टीका**—जिसके शिखरों पर प्रयाग आदि तीर्थ शोभा पाते हैं जिसकी चोटियाँ खर केशत्रु भगवान श्रीराम के लिए देवदारु जैसी उपयोगी हैं तथा जो त्रिलोकेश्वर भगवान श्रीराम के लिए भी प्रणम्य कल्पवृक्षों के समूह वाले हैं ऐसे अत्यन्त उदार श्रृंगमाला वाले श्रीचित्रकूट को मैं भजता हूँ॥२२॥

**द्रुतं पूरयन्तं मनः कामकूटं कलिध्वान्त हृद्भास्करोद्दामकूटम्।**
**रमारामकूटं घनश्यामकूटं परंधामकूटं वृणे चित्रकूटम्॥२३॥**

**कृपा टीका**—मन के कामना समूह को शीघ्र पूर्ण करने वाले कलियुग के अंधकार को नष्ट करने में समर्थ सूर्य के समान सुशोभित उत्कृष्ट शिखरों वाले भगवती सीताजी को आनन्ददायक श्रृंगमालाओं से युक्त, विविध वृक्षों के कारण मेघ के समान श्यामल चोटियों वाले ऐसे परमेश्वर श्रीरामचन्द्र जी के निवासस्थान परमधाम रूप शिखरों से सनाथित श्रीचित्रकूट को मैं अपनी साधनास्थली के रूप में वरण करता हूँ॥२३॥

**धरायाश्चितं भागधेयैककूटं परब्रह्मणो रूपधेयैककूटम्।**
**शुचीनां शुभं नामधेयैककूटं चिरं चेतसा चिन्तये चित्रकूटम्॥२४॥**

**कृपा टीका**—इकट्ठे हुए पृथ्वी के सौभाग्यों के समूहरूप तथा परब्रह्म श्रीराम के

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पुंजीभूत दिव्य विग्रह स्वरूप एवं परमपवित्र परमात्मा के मंगलमय नामस्वरूप चिन्मय श्रीचित्रकूट का मैं चित्त से निरन्तर चिन्तन करता हूँ॥२४॥

**क्वचिद्योगिवृन्दैर्लसत् दिव्यकूटं क्वचिद्रामचन्द्रं नमन् नव्यकूटम्।**
**क्वचिन्मैथिलीं मण्डयन् भव्यकूटं चिता चिन्तये चेतसा चित्रकूटम्॥२५॥**

**कृपा टीका**—कहीं योगिवृन्दों से सुशोभित होते हुए तो कहीं भगवान् श्रीरामचन्द्र को नमन करके नित्य नवीन लगते हुए तो कहीं अपनी भव्य शृंग मालाओं से सीताजी को शृंगारित करते हुए ऐसे चेतनामय चित्रकूट का मैं चित्त से चिन्तन करता हूँ॥२५॥

**श्रीरामपद्मपदपुण्यपरागभागं योगीन्द्रसिद्धमुनिसेवित दिग्विभागम्।**
**कारुण्यमूर्तिमनघं हृतजीवरागं चेतश्चिरंतमिह चेतय चित्रकूटम्॥२६॥**

**कृपा टीका**—हे चिंत्त श्री भगवान राम के चरणकमल के पवित्र पराग से युक्त तथा योगीन्द्र सिद्ध एवं मुनियों द्वारा जिनके प्रदेशों का सेवन किया गया है ऐसी करुणा की मूर्ति निष्पाप जीव के राग को नष्ट करने वाले उन श्रीचित्रकूट का चिरकाल पर्यन्त चिन्तन करो॥२६॥ वसन्ततिलका छन्द।

**पूतात्मनां मतिमतां विहितव्रतानां सत्साधनैक मनसां भुवि पारिजातम्।**
**दत्ताखिलेप्सितफलं श्रुतिशैलकेतुं चेतश्चिरंतमिह चिन्तय चित्रकूटम्॥२७॥**

**कृपा टीका**—हे मेरे चित्त श्रेष्ठ साधना में अपना मन लगाये हुए व्रतानुष्ठान करने वाले पवित्रात्मक महापुरुषों के लिए पृथ्वी पर कल्प वृक्षस्वरूप सभी मनोवांछित कामनाओं को देने वाले श्रुतियों में वर्णित पर्वतों में श्रेष्ठ ऐसे उन अपूर्व श्रीचित्रकूट का यहाँ तुम दीर्घकालपर्यन्त चिन्तन करो॥२७॥ वसन्ततिलका छन्द।

**चिन्तामणिं विहितशैलतनुं तनिम्ना प्रादुष्कृतश्रुतिसुसम्भ्रितसारभूतम्।**
**पूतं नुतं गिरिवरैर्गुणितं गरिम्णा चेतश्चिरंतमिह चिन्तय चित्रकूटम्॥२८॥**

**कृपा टीका**—हे मेरे चित्त तुम उन श्रीचित्रकूट का चिरचिन्तन करो जो पर्वत शरीर के रूप में साक्षात् चिन्तामणि हैं जिसने अपने विस्तार में सम्पूर्ण वैदिक वाङ्मय तत्व को प्रकट किया है जो परम पवित्र तथा सभी पर्वतों द्वारा वंदित हैं जो गरिमामय हैं॥२८॥ वसन्ततिलका छन्द।

**सैरध्वजीललितपाणिसरोजसेव्यं मन्दाकिनीविमलवारिविवर्धिताभम्।**
**श्रीकामदेश्वरसमर्पितसत्प्रतिष्ठं चेतश्चिरंतमिह चिन्तय चित्रकूटम्॥२९॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—श्रीजानकी जी के सुन्दर करकमलों से सेवित तथा मंदाकिनी जी के विमल जल से सम्वर्धित शोभायुक्त तथा श्रीकामदनाथ से परम प्रतिष्ठाप्राप्त ऐसे उन श्रीचित्रकूट को मेरे चित्त चिन्तन का विषय बनाओ॥२९॥ वसन्ततिलका छन्द।

**नवजलधरनीलं वेदविख्यातलीलं शिखरमहितसीतं पादपालीपरीतम्।**
**गिरिवरकमनीयं वन्दनीयं सुराणां कलितविविधकूटं चिन्तये चित्रकूटम्॥३०॥**

**कृपा टीका**—मैं नवीन बादल के समान नीले तथा वेदों में विख्यात लीलाओं वाले भगवती सीता जी से पूजित शृंगमाला वाले सुन्दर वृक्षों से घिरे हुए श्रेष्ठ पर्वतों की कामना के पात्र बने हुए देवताओं के भी वंदनीय विविध प्रकार के कूटोंवाले श्रीचित्रकूट का चिन्तन करता हूँ॥३०॥ मालिनी छन्द।

**पयसि निहितभागं ज्ञानवैराग्ययागं परिलसदनुरागं रामपादाब्जरागम्।**
**मणिमिव रमणीयं भास्वतं भावतश्च प्रथितविमलकूटं नौमि तं चित्रकूटम्॥३१॥**

**कृपा टीका**—पयस्वनी नदी में जिसका सौभाग्य निहित है जहाँ ज्ञान वैराग्य जप जागादि होते रहते हैं जहाँ प्रभु का अनुराग निरंतर शोभित रहता है। जहाँ जाने पर साधक के मन में श्रीराम जी के चरणकमलों में लगाव हो जाता है जो मणि के समान रमणीय और दिव्य भावों से चमत्कृत हैं ऐसे विमल शिखरों वाले श्रीचित्रकूट को मैं प्रणाम करता हूँ॥३१॥ मालिनी छन्द।

**सुरतरुवरवृन्दैर्भागधेयं यदीयं प्रणतिविनमितांसैर्गीयते बद्धनिष्ठैः।**
**जनकनृपसुताया लोचनैकाभिरामं शिखरनिहितरामं चित्रकूटं नतोऽस्मि॥३२॥**

**कृपा टीका**—निष्ठावान तथा प्रणाम की मुद्रा से झुके हुए कन्धों वाले कल्पवृक्षों द्वारा जिसके सौभाग्य का निरंतर गान किया जाता है जनकनंदिनी जानकी जी के नेत्रों को एकमात्र आनन्द देने वाले तथा भगवान श्रीराम से सुशोभित शिखरों वाले श्रीचित्रकूट को मैं नमन करता हूँ॥३२॥ मालिनी छन्द।

**भवजलनिधिमीनं पापपङ्के निलीनं विषयकलिलमग्नं वासनाराशिलग्नम्।**
**निरवधि निरुपायं त्याजिताध्यात्मकायं पतितमभिकमेनं त्रायतां चित्रकूटः॥३३॥**

**कृपा टीका**—भगसागर के मत्स्यरूप पाप के कीचड़ में फंसे हुए विषय के दलदल

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

में डूबे हुए वासनासमूह में लिप्त अत्यन्त असहाय आध्यात्मिक शरीर से रहित इस कामान्ध पतित परशुराम की श्रीचित्रकूट रक्षा करें॥३३॥ मालिनी छन्द।

**विधातुर्वैसृष्टौ परमरमणीयो मणिरिव प्रचेतो जातस्य प्रथितरचना स्रोत इव यः।**
**निषेव्यः शैलानां मुनितिलक वन्द्याङ्घ्रिवनजः सदारामारामो जयति रुचिरो राघवगिरिः॥३४॥**

**कृपा टीका**—ब्रह्मा की सृष्टि में जो परम रमणीय मणि के समान है तथा महर्षि वाल्मीकि की प्रथम रचना रामायण का जो स्रोत है ऐसे समस्त पर्वतों के सेव्य मुनि जनों के द्वारा वंदित चरण सीता को आनन्दित करने वाले श्री राघवेन्द्र सरकार के पर्वत श्री चित्रकूट की जय हो॥३४॥ शिखरिणी छन्द।

**निधानं सिद्धीनां विमलमवदानं च तपसां**
**निदानं रोगाणां क्षपित भवभोगैक जनुषाम्।**
**निपानं जीवानां मिहिरकर तप्तामिततृषां**
**निशानं लक्ष्याणां त्रिभुवि गिरिरेको विजयते॥३५॥**

**कृपा टीका**—समस्त सिद्धियों के खजाने तपस्याओं के निर्मल उपहार संसार के भोगों एवं जन्म को ही नष्ट करने वाले भयंकर रोगों के चिकित्सा निदान मोहरूप सूर्य के ताप से बढ़ी हुई प्यास से व्याकुल जीवों के एकमात्र जलपान सरोवर लक्ष्यों के एकमात्र लक्ष्यभेदक ऐसे श्रीचित्रकूट पर्वत तीनों लोकों में एक ही हैं और वह सर्वश्रेष्ठ हैं।३५॥ शिखरिणी छन्द।

**प्रतप्तानां तापैस्त्वमसि शरणं वै तनुभृतां**
**तथा जिज्ञासूनां त्वमसि विमलं ज्ञानभवनम्।**
**पिपासूनां स्रोतः सरसमतिदिव्यं जलमयं**
**जगत्यां वै शैलस्त्वमसि गुणधन्यो हरिगिरे॥३६॥**

**कृपा टीका**—हे भगवान श्रीराम के प्रिय पर्वत चित्रकूट तीनों तापों से तपे हुए जीवों के तुम एकमात्र शरण हो तथा ब्रह्म जिज्ञासुओं के तुम्हीं निर्मल ज्ञान के गृह हो भक्ति पिपासुओं के तुम्हीं एकमात्र अमृत जी के स्रोत हो। पृथ्वी में समस्त सद्गुणों से युक्त तुम्हीं एकमात्र धन्य पर्वत हो॥३६॥ शिखरिणी छन्द।

**अकामानां नृणां त्वमिव फलदः खण्डपरशुः**
**यथा विष्णुस्त्राता त्वमसि भवभीतेः पदजुषाम्।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विधातेव स्रष्टा त्वमिह हरिभक्त्येकमनसां
त्रिदेवात्मा देवो जयसि नितरां राघवगिरे।।३७।।

**कृपा टीका**—हे श्रीरामगिरि चित्रकूट तुम निष्काम प्राणियों के लिए शिवजी के समान अभीष्ट फलदाता हो और विष्णु के समान तुम अपने चरणसेवकों के भवभय से रक्षक हो। ब्रह्मा जी के ही समान तुम भगवद्भक्तों के आध्यात्मिक शरीर के रचयिता हो वस्तुतः तुम ब्रह्मा विष्णु शंकर स्वरूप देवता के रूप में सतत सबसे श्रेष्ठ बनकर विराज रहें हो।।३७।। शिखरिणीछन्द।

निवासो धीराणां गुणगणविकासोऽसि सुधियां
प्रकाशो बुद्धीनां त्वमसि सुविलासो मतिमताम्।
जनानां विश्रामो भवभयविरामः पदजुषां
सदा रामारामो निखिलगिरिमौले विजयसे।।३८।।

**कृपा टीका**—हे पर्वत चूड़ामणि तुम धीर महानुभावों के निवासस्थान तथा सुधीजनों के सद्गुणों के विकास करने वाले तुम बुद्धियों के प्रकाशक तथा बुद्धिमानों के विहारस्थल हो तुम प्राणियों के विश्रामस्थान तथा सेवकों के भवभय के विरामस्थान तथा भगवती सीता जी के मन के लुभाने वाले बनकर सदैव सर्वश्रेष्ठ रूप से विराज रहे हो।।३८।। शिखरिणी छन्द।

रघुपतेः पदपद्मविभूषितो निखिलयोगिसमाजसभाजितः।
सकलसाधककल्पतरुर्महान् विजयसे भुवि राघवपर्वत।।३९।।

**कृपा टीका**—हे श्रीराघव के पर्वत श्रीचित्रकूट तुम श्रीराम जी के चरणकमलों से सुशोभित तथा सभी योगी मुनिवरों द्वारा सम्मानित सम्पूर्ण साधकों के महान कल्पवृक्ष के रूप में उपस्थित होकर पृथ्वी पर सर्वश्रेष्ठता सिद्ध कर रहे हो।।३९।। द्रुतविलम्बित।

रघुनन्दनपादपयोजरजः कलितं भरितं प्रभयाविभया।
शुचिसाधकवाञ्छितसिद्धिकरं प्रणमामि रघूत्तमशैलवरम्।।४०।।

**कृपा टीका**—श्रीराम के चरण कमल की धूलि से सुशोभित परमेश्वर की शोभा एवं नैसर्गिक कान्ति से युक्त पवित्र साधकों की मनोवांछित सिद्धियों के प्रदाता श्रीराम के श्रेष्ठ पर्वत श्रीचित्रकूट को प्रणाम करता हूँ।।४०।। त्रोटक।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**धरणीतनयाकरपङ्करुहप्रथितामरदुर्लभभाग्यविभम्।**
**फणिनायकसेवितशृंङ्गचयं प्रणमामि गिरिं च सुवर्णमयम्।।४१।।**

**कृपा टीका**—पृथ्वी पुत्री सीता जी के करकमलों से जिसकी सौभाग्य शोभा की प्रशंसा की गई एवं लक्ष्मण जी द्वारा जिसके शिखरों की श्रद्धा से सेवा की जाती है ऐसे स्वर्णमय श्रीचित्रकूट पर्वत को मैं प्रणाम करता हूँ।।४१।। त्रोटक।

**श्रीरामचन्द्रचरणाङ्कितदिव्यकूटं सौमित्रिसाधनधनार्चितनव्यकूटम्।**
**सीताविलोचनसमञ्चित् भव्यकूटं रे चित्त चिन्तय चिरन्तन चित्रकूटम्।।४२।।**

**कृपा टीका**—अरे मेरे चित्त जिनके दिव्य शिखर श्रीरामजी के चरणों से चिह्नित है, जिनकी चोटियों में लक्ष्मणजी के साधना धन की पूजा से नित्य नवीनता विराज रही हैं, जिनकी शृंङ्गमालाएँ सीताजी के नेत्रों की चितवन की भव्यता से युक्त हैं ऐसे चिरंतन श्रीचित्रकूट का चिन्तन करो।।४२।। वसन्ततिलका।

**चिन्तामणिप्रकरमञ्जुलरत्नकूटं सीतापतिप्रसरपावनप्रत्नकूटम्।**
**योगीन्द्रसाधकसुसाधनयत्नकूटं रे चित्त चिन्तय चिरन्तन चित्रकूटम्।।४३।।**

**कृपा टीका**—अरे मेरे चित्त तुम उस परम प्राचीन चित्रकूट का चिंतन कर जिस पर चिन्तामणि एवं सुन्दर रत्नों के समूह बिखरे पड़े हैं तथा जिसके प्राचीन शिखर भगवान् श्रीराम के निरावरण चरणकमलों से पावन हो रहे हैं तथा जहाँ श्रेष्ठ योगी साधकों के सुन्दर साधनों की कतारें सतत दृष्टिगोचर होती हैं।।४३।। वसन्ततिलका।

**सीतानिवासवरवासविलासभूमिं**
**वृन्दारकागणशरण्यमरण्ययुक्तम्।**
**विन्ध्याटवी मुकुटमौलिरनदभ्रकीर्तिं**
**रे चित्त चिन्तय चिदालय चित्रकूटम्।।४४।।**

**कृपा टीका**—मेरे चित्त तुम उन चिद्भवन श्रीचित्रकूट का चिन्तन करो जो भगवती सीता जी का निवासस्थान एवं उनके पति प्रभु श्रीराम का वासस्थल एवं लीलाभूमि है जो देवगणों का शरणदाता तथा दिव्यवनों से युक्त और विन्ध्याचल का मुकुटमणि तथा अखंड कीर्ति वाला है।।४४।। वसन्ततिलका।

**तीर्थैं किमत्र बहुभिः कलितप्रयासैः कष्टैकसाध्यजनमानसरोगयुग्भिः।**
**आकर्ण्य वाक्यमिदमद्य विचारयुक्तं पान्थाः सदाव्रजत चिन्मयचित्रकूटम्।।४५।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—अरे पथिकों अनेक कष्टों के साध्य तथा मानस रोगों से युक्त भौतिक चाकचिक्य वाले लुभावने तथा अनेक प्रयासों एवं एवं व्यय से प्राप्त होने वाले अनेक तीर्थों से क्या लाभ, मेरा विचारपूर्ण यह वाक्य सुनकर अब तुम सब चिन्मय चित्रकूट का ही सेवन करो।।४५।। वसन्ततिलका।

**अज्ञस्य पापकलिलेऽपि विषीदतो वै त्यक्तप्रसाद निवहस्य मलैकराशेः।**
**चिन्ताकुलस्य विधनस्य जडायुषो मे दीनस्य चाद्य शरणं भव चित्रकूट।।४६।।**

**कृपा टीका**—अज्ञानी पाप के कीचड़ में फंसे हुए प्रसन्नता के समूहों से रहित मलिकि राशि अनेक चिन्ताओं से व्याकुल मुझ निर्धन दीन जड़ात्मा साधक के लिए हे चित्रकूट! आज तुम रक्षक हो जाओ।।४६।। वसन्ततिलका।

**श्रीमन्मैथिलिपादपद्मरजसां राशीकृतं शाश्वतं**
**पापानां किल धूमकेतुविभवं माधुर्यधुर्यस्थितम्।**
**श्रीमन्दाकिनिवारिवारितभयंकल्लोललोलद्विभम्**
**पश्येयं सुमनोदृशा गिरिवरं श्रीचित्रकूटं मुहुः।।४७।।**

**कृपा टीका**—अहो भगवती सीता जी के चरण कमलों की धूलि के समूह रूप निरंतर वर्तमान सभी पापों के लिए धूमकेतु पुच्छल तारा, माधुर्य की धुरी धारण करने वाले श्रीराम में ही स्थित मंदाकिनी जी के जल से भव भय को दूर करने वाले तरंगों से चंचल कान्ति वाले ऐसे पर्वत श्रेष्ठ श्री चित्रकूट को मैं बारम्बार मन के नेत्र से देखने को इच्छुक हूँ।।४७।। शार्दूलविक्रीड़ित।

**सीता यत्र विराजते भगवती सत्पर्णशालास्थिता**
**सिञ्चन्ती तुलसीतरूनहरहो मंदाकिनीवारिभिः।**
**कीरान्मञ्जुलसारिकाश्च विधिवत् संशिक्षयन्ती मुहुर्**
**धन्योऽसौ नयनाभिरामशिखरः श्रीचित्रकूटो गिरिः।।४८।।**

**कृपा टीका**—जहाँ पर भगवती सीता अपनी पर्णकुटी में स्थित होकर तोता एवं मैना को पढ़ाती हुई तो कभी मंदाकिनी के जल से प्रतिदिन तुलसी वृक्षों को सींचती हुई विराजती हैं ऐसा नेत्रों को सुखद शृंगमालाओं वाला श्री चित्रकूट पर्वत धन्य है।।४८।। शार्दूलविक्रीड़ित।

**यत्रास्ते सुमनोज्ञपूतसलिला श्रीगुप्तगोदावरी।**
**यं नित्यं समलङ्करोति विरजा मालेव मन्दाकिनी।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**यस्योत्कर्षमतीव वर्धयति वै ह्यत्रिप्रिया शाश्वती**
**सोऽयं राजति शैलराजशिखरी श्रीचित्रकूटो भुवि।।४९।।**

**कृपा टीका**—जहाँ पवित्र जलवाली श्री गुप्तगोदावरी विराजती हैं जिसको रजोगुण से रहित मंदाकिनी जी माला की भाँति निरंतर सजाती हैं तथा माता अनुसूया जिसका उत्कर्ष निरंतर बढ़ाती रहती हैं वही पर्वतराज श्रीचित्रकूट इस पृथ्वी पर विराज रहे हैं।।४९।। शार्दूलविक्रीड़ित।

**यो नित्यं परिपातिपावनरुचा श्रीकामदोपत्यकां**
**यस्मिन् कोटिमुनीन्द्रयोगिनिवहाः प्रेम्णा तपस्यन्त्यहो।**
**यत्र क्रीडति चारुचम्पकनिभा सैरध्वजी शावकैः**
**कीराणां तमिमं गिरीन्द्रमनघं श्रीचित्रकूटं श्रये।।५०।।**

**कृपा टीका**—जो अपनी पवित्र कान्ति से कामद की तलहटी की नित्य रक्षा करते रहते हैं, जिनकी छाया में करोड़ों योगी मुनि सिद्धजन प्रेम से तपस्या करते हैं। जहाँ चम्पा के समान कान्ति वाली भगवती सीताजी तोतों के बच्चों से खेला करती हैं ऐसे इन श्रेष्ठ पर्वत श्रीचित्रकूट का मैं आश्रय ले रहा हूँ।।५०।। शार्दूलविक्रीड़ित।

**मन्दाकिनी पयसि भावभरं निमज्य भक्त्या समार्जिहतमत्तगजेन्द्रनाथम्।**
**आदौ भवस्य यदथाम्बुजविष्टरोऽसावातिष्ठिपद्विमललिङ्गमभीप्सितार्थः।।५१।।**

**कृपा टीका**—अनंतर परशुराम जी ने भावपूर्ण हृदय से मंदाकिनी जी के जल में स्नान करके भक्तिपूर्ण हृदय से उन मत्तगजेन्द्रनाथ की पूजा की जिन्हें सृष्टि के प्रारम्भ में मनःकामना की सिद्धि के लिए ब्रह्मा जी ने प्रथम शिवलिंग के रूप में स्थापित किया।।५१।। वसन्ततिलका।

**मध्ये पयस्विनि पुरस्कृत दुग्धधारां व्यालोक्य लोलनयनश्चकितो बभूव।**
**वात्सल्यमण्डितपयोधरहारशोभां श्रीरेणुकामिव नदीं विनतो ननाम।।५२।।**

**कृपा टीका**—उसी समय पयस्विनी जी के बीच में राघव प्रयाग घाट के पास दूध की धारा देखकर चंचल नयन परशुराम जी चकित हो गये। वात्सल्य से मंडित दुग्ध धारा से युक्त पयस्विनी नदी को श्री रेणुका जी की भाँति ही परशुराम जी ने विनम्रता से प्रणाम किया।।५२।। वसन्ततिलका।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**चक्रे प्रदक्षिणमथो गिरिराजराजं श्रीकामदं पुलकितः स सहस्रकृत्वः।**
**रामस्तु दण्डवदनागसि दत्तदण्ड पापानि मार्ष्टुमिव भग्नभयो भवस्य॥५३॥**

**कृपा टीका**—संसार का भय दूर करने वाले परशुराम जी ने निर्दोष लोगों को दिये हुए दंड से उत्पन्न पापों को क्षालित करने के लिए ही मानो प्रायश्चित बुद्धि से पर्वतों के राजा हिमालय के लिए वंदनीय कामदनाथ भगवान की पुलकित होकर एक हजार दंडवती परिक्रमा की॥५३॥ वसन्ततिलका।

**यं धर्मपीठमिह पर्वतराजराजं श्रीचित्रकूटमथ कामदनामधेयम्।**
**पूर्वत्र कल्पउषितानुजजानकीश्री रामं स्मरन् समभवत् स कृतार्थरूपः॥५४॥**

**कृपा टीका**—जिस पर पूर्वकल्प में श्री लक्ष्मण एवं श्री जानकी जी सहित भगवान श्रीराम विराजे थे उसी भारत के प्रथम धर्मपीठ गिरिराज कामदनाम वाले श्रीचित्रकूट को स्मरण करके परशुराम जी कृतार्थ हो गये॥५४॥ वसन्ततिलका।

**पतिदैवतिकां स चानसूयां परशुधरोऽर्चितवांश्च पूज्यभावात्।**
**कुपितामिव तां सशङ्कमानः प्रियसुतशिष्यविनाशतोऽनुनेष्यन्॥५५॥**

**कृपा टीका**—अनसूया के प्रिय पुत्र दत्तात्रेय जी के प्रिय शिष्य सहस्रबाहु के वध से अनसूया जी को कुपित हुई सी मानते हुए, उन्हें मनाते हुए परशुराम जी ने पूज्य भाव से पतिव्रता अनसूया जी की पूजा की॥५५॥ मत्तमयूरिका छन्द।

**आमन्त्र्याद्रिं रघुपतिपदाम्भोजपांशुप्रसादम्**
**रामोऽद्राक्षीद् भुवनमहितां राजधानीं रघूणाम्।**
**यस्यां त्यक्त्वा त्वचमिव तनुं भोगवान् कोऽपि जीवः**
**प्राप्तानन्दो लसति द्विविजैर्दिव्यसाकेतधाम्नि॥५६॥**

**कृपा टीका**—श्रीरामचन्द्र भगवान के श्रीचरणकमल के धूलि के प्रसाद से सुशोभित कामदनाथ भगवान से आज्ञा लेकर परशुराम जी ने रघुवंशी राजाओं की राजधानी श्री अयोध्या के दर्शन किये जिसमें सर्प के केंचुल की भाँति कोई भी जीव अपना शरीर छोड़कर परमानन्द से युक्त होकर देवताओं के साथ दिव्य साकेतलोक में विराजमान हो जाता है॥५६॥ अब श्लोक संख्या ७० तक मन्दाक्रान्ता छन्द है।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यस्यां सीता बिबुधवनितावन्दितावन्द्यभार्या
नित्यं धातुस्तनयतनयातीरकुञ्जेषु भर्त्रा।
दीव्यन्ती सा प्रणयमुदिता कोटिकोट्या सखीनां
रामा रामं रमयति रमा मञ्जुमाधुर्यधुर्या॥५७॥

**कृपा टीका**—जिन श्री अयोध्या में निरंतर ब्रह्मपुत्र वसिष्ठ जी की पुत्री सरयूजी के तटवर्ती कुंजों में कोटि-कोटि सखियों से युक्त देववधूटियों से वंदित प्रणय से प्रसन्न प्रभु श्रीराघव के साथ विहार करती हुई वन्दनीय श्रीराम की धर्मपत्नी रमणीय कान्ति महालक्ष्मी श्री सीताजी मधुर माधुर्य की धुरी को सँभालती हुई रसिक शिरोमणि प्रभु श्रीराम को सदैव रमाती रहती हैं॥५७॥

राजा रामो जयति भगवान् जानकी यत्र राज्ञी
यस्यां लोकाः प्रणिहतमलाः सच्चिदानन्दरूपाः।
यस्याः प्रान्ते लसति सरयूः सर्वदा सोमतोया
सैषायोध्या विलसति भुवो मस्तकीभूय भूयः॥५२॥

**कृपा टीका**—जिस अयोध्या में भगवान श्रीराम राजा एवं जानकी जी महारानी नित्य विराज रही हैं जिस अयोध्या में निवास करने वाले लोग निर्मल एवं सच्चिदानन्द रूप हैं जिसके समीप अमृत जलवाली श्री सरयूजी प्रवाहित होती हैं वह यह श्रीअयोध्या, जो पृथ्वी का मस्तक बनकर सर्वतोऽधिक शोभा पा रही हैं॥५८॥

नामं नामं नमित शिरसा दण्डवत् दण्डितारि
भ्रामं भ्रामं विगतरजसा वन्यकुञ्जेषु धीरः।
ध्यायं ध्यायं शिशुरघुवरं कन्दनीलं सुशीलं
गायं गायं प्रभुगुणगणं भार्गवस्तत्र रेमे॥५९॥

**कृपा टीका**—शत्रुओं को दंडित करने वाले धीर परशुराम जी विनम्र मस्तक से दण्डवत् प्रणाम कर करके रजोगुण से रहित भाव से श्रीअवध के कुञ्जों में भ्रमण कर कर के मेघश्यामल सुन्दरशील वाले शिशु राघव का ध्यान कर करके प्रभु श्रीराम का पुनः पुनः गुणगान कर करके श्री अयोध्या में रम गये॥५९॥

दर्शं दर्शं दुरितदमनं दामिनिद्योतिधाम
स्पर्शं स्पर्शं परमरमणं रेणुराशिं रमेष्टम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भावं भावं भवभयहरं भावभाव्यं भविष्णुं
कामं कामं कमलकमनं राघवं शर्म लेभे॥६०॥

**कृपा टीका**—विद्युत के समान प्रकाशमान कनक भवन को देख देखकर लक्ष्मी के लिए भी इष्ट पापों को नष्ट करने वाली श्रीअयोध्या की धूलि का बार.बार स्पर्श करके भव भय के हरने वाले भावना से भव्य प्रभु का बारम्बार स्मरण करके कमलनयन भगवान् कीपुनः पुनः दर्शन की कामना करके परशुराम जी ने परमशान्ति सुख का अनुभव किया॥६०॥

भूयो पश्यन् मधुवनमसौ सूर्यकन्यातिधन्यम्
स्निग्धा रामं व्रजजनवृतं मञ्जुकूजन्मरालम्।
यां वै प्राहुर्मधुरिपुपुरीं शार्ङ्गिणो जन्मभूमिं
सेयं पापं मथति मथुरा मन्मथारीष्टमान्या॥६१॥

**कृपा टीका**—इसके पश्चात् परशुराम जी ने सूर्य कन्या यमुना से धन्य सुन्दर उद्यानों से युक्त ब्रज जनों से घिरे हुए हंसों की मधुर ध्वनि से सुशोभित मधुवन के दर्शन किये जिसको भगवान श्रीकृष्ण की जन्मभूमि एवं महाविष्णु की प्रिय पुरी कहते हैं वही यह भगवान शंकर के भी इष्ट श्रीकृष्ण की माननीया मथुरा सभी पापों को नष्ट करती आ रही हैं॥६१॥

स्नात्वा जप्त्वा मनसि यमुना जीवनं चिन्तयित्वा
वृन्दारण्यं त्रिजगदरणं भार्गवो भक्तितोऽगात्।
कृष्णः कूजन् मधुरमुरली यत्र रासे सखीनां
नित्यं राधा कुचकलशयोर्भाति पाटीरशिल्पी॥६२॥

**कृपा टीका**—श्रीयमुना में स्नान करके कृष्णमंत्र का जप करते हुए यमुना जी के जीवन श्री मथुरानाथ का चिन्तन करते हुए भक्तिपूर्ण परशुराम जी ने तीनों लोकों को शरण देने वाले उस वृन्दावन में प्रवेश किया जिस श्री वृन्दावन में सखियों के बीच रासबिहारी भगवान् श्रीकृष्ण मधुर मुरली बजाते हुए राधाजी के वक्षोज कलशों पर चित्रकारी की चातुरी से पाटीर रचना करते हुए निरंतर विहार करते रहते हैं॥६२॥

गत्वा भूयो मुनिगणयुतं श्रीहरिद्वारमाद्यं
गङ्गाद्वारं त्रिपुरजयिना भग्नदक्षावलेपम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**मायापुर्यामथकनखले जाह्नवीदिव्यतोये**
**मज्जन् मग्नं मनसि स मलं मज्जयामास मान्यः॥६३॥**

**कृपा टीका**—इसके पश्चात् माननीय परशुराम जी उस हरिद्वार में पधारे जो गंगाजी का प्रथम द्वार है। और जहाँ त्रिपुरासुर के विजेता भगवान शंकर द्वारा दक्ष के गर्व को नष्ट किया गया फिर मायापुरी के कनखल तीर्थ में गंगाजी के पवित्र जल में स्नान करके परशुराम जी ने अपने मन के मल को भी वहीं डुबो दिया॥६३॥

**काश्यां काशी गदितगरिमोद्दाममुक्तेकभूमौ**
**रामो रेमे शिशुशशिभृतश्शूललब्धास्पदायाम्।**
**मङ्क्त्वा भक्त्याच्युतचरणजा वारिवाराणसीशं**
**रामेत्येवं जपपरधियं सान्नपूर्णं ददर्श॥६४॥**

**कृपा टीका**—इसके पश्चात् परशुराम जी ब्रह्मा, विष्णु एवं शंकर द्वारा जिसकी महिमा कही गई है, जो मुक्ति की उन्मुक्त भूमि है तथा बाल चन्द्रशेखर भगवान शंकर ने जिसे प्रलयकाल में अपने त्रिशूल पर स्थान देकर नष्ट होने से बचा लिया ऐसी काशी में जाकर परशुराम जी आनन्दित हुए फिर भगवान के चरणों से प्रकट हुई गंगाजी के जल में स्नान कर राम नाम जप करते हुए अन्नपूर्णा सहित भगवान शंकर के दर्शन किये॥६४॥

**यस्यामीशो मरणसमये प्राणिनां कर्णमूले**
**द्व्यर्णं रामेत्यघहरमहामन्त्रमाद्यं ददानः।**
**आचाण्डालं जयति भगवान् मोक्षयन् जीवलोकं**
**काशीवासी कथमुविभियाद्याम्यदण्डात् कदापि॥६५॥**

**कृपा टीका**—जिस काशी में मरण के समय में प्राणियों के कान में पापहारी द्वय अक्षर (राम) यह आद्य महामंत्र देते हुए आचाण्डाल समस्त जीवलोक को मुक्त करते हुए भगवान् शंकर विराजते हैं। वह काशीवासी भला यमराज के दंडपाश से क्यों डरे॥६५॥

**काञ्चीं काञ्चीमिव वसुमती योषितस्तिग्मभानुम्**
**गत्वा रामः किल वरदराड्विष्णुमीक्षाम्बभूव।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**शेषे शेषे बकुलधवले शार्ङ्गिणं तं शयानं**
**नैशं नीलोत्पलमिव लसत्षट्पदं पार्वणेन्दौ॥६६॥**

**कृपा टीका**—पश्चात् जहाँ सूर्य की किरणें अत्यन्त तीखी हो जाती हैं ऐसी पृथ्वी रूप नायिका कि कटि जैसी कांचीपुरी में जाकर प्रभु के सेवक बकुल पुष्प के समान श्वेत ऐसे शेषनाग पर शयन करते हुए शार्ङ्गपाणि वरदराज भगवान विष्णु को चन्द्रमा में भ्रमर से व्याप्त रात्रि के नीलकमल की भाँति निहारा॥६६॥

**तस्या आराद्रतिपतिरिपोः पादपद्माङ्कभाजम्**
**घण्टानादप्रतिहतभयां शैवकाञ्चीमपश्यत्।**
**श्रीकावेरीसरितिविमलो रङ्गनाथं विलोक्य**
**प्राप्तानन्दो मनसि च बभौ भौमवैकुण्ठमाप्य॥६७॥**

**कृपा टीका**—उसी विष्णुकांची के समीप कामशत्रु शंकर भगवान के चरणचिन्हों से सुशोभित घंटा निानद से भय दूर करने वाली शिव कांची के दर्शन किये। फिर निर्मल मनवाले परशुराम जी कावेरी नदी के तट पर रंगनाथ जी के दर्शन करके पृथ्वीं पर वैकुण्ठ के जैसा आनन्द प्राप्त कर बहुत प्रसन्न हुए॥६७॥

**गत्वापूर्वां पवनगमनो विन्ध्यशैले लसन्तीं**
**हृष्टो रामः श्रुतमिव भयात् चाप्यवन्तीमवन्तीम्।**
**क्षिप्रं क्षिप्रापयसि विरजाः प्राप्तभावोपचारो**
**साम्बं देवं हरमथमहाकालमानर्च धीरः॥६८॥**

**कृपा टीका**—इसके अनंतर वायुवेग वाले परशुराम जी अपूर्व तथा विन्ध्यपर्वत पर विराजमान भय से शास्त्र की रक्षा करती हुई सी अवंतीपुरी जाकर वहाँ अत्यन्त शीघ्र ही क्षिप्रा नदी में स्नान करके अपने भाव के उपचारों से साम्ब सदाशिव महाकाल भगवान का समर्चन किया॥६८॥

**भूयो यात्वा सपदि ददृशे द्वारकां पश्चिमायां**
**सिन्धोस्तीरे कनकभवनां राजधानीं यदूनाम्।**
**द्वारे द्वारे विलसति परं ब्रह्म कं यत्र नित्यं**
**दृष्ट्वा रेमे भृगुकुलमणिर्मोक्षदां तां मनोज्ञाम्॥६९॥**

**कृपा टीका**—इसके अनंतर शीघ्र पश्चिम दिशा में स्वर्ण के भवनों वाली समुद्र

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

के तीर पर बसी हुई यदुओं की राजधानी मोक्ष देने वाली द्वारका के दर्शन किये जिसके प्रत्येक द्वार पर क अर्थात् परब्रह्म नित्य ही विराजमान रहते हैं। यहाँ भृगुवंश के मणि परशुराम जी बहुत प्रसन्न हुए॥६९॥

**तत्र स्नात्वा लवणसलिले गोमतीसिन्धुमिश्रे**
**लुञ्चन् दर्भान् परमकुशलस्तान्कुशस्थल्युपेतान्।**
**प्रापं प्रापं पयसि रुचिरं गोमतीचक्रकं तत्**
**रामः प्रीतः परमकठिनं कालचक्रं व्यपोहत्॥७०॥**

**कृपा टीका**—वहाँ गोमती एवं सागर के संगम वाले खारे जल में स्नान करके उस स्थली में उत्पन्न कुशों को लेकर गोमती जी के जल में गोमती चक्रों को प्राप्त करके परम कुशल परशुराम जी ने कालचक्र को ही समाप्त कर लिया॥७०॥

**गत्वा प्रभासं तममन्दविक्रमः श्रीसोमनाथं श्रितसोमशेखरम्।**
**सम्पूजयामास वशी वशानुगं गौरीसमेतं धृतसर्वगौरवम्॥७१॥**

**कृपा टीका**—इसके अनंतर अमित पराक्रमी परशुराम जी ने प्रभास क्षेत्र जाकर पार्वती जी के सहित समस्त गौरव धारण करने वाले भक्तों के अनुगामी चन्द्रशेखर श्रीसोमनाथ का संयमपूर्वक पूजन किया॥७१॥ अब श्लोक संख्या ९८ तक इन्द्रवंशा छन्द है।

**यत्पादपाथोजपरागसेवया सोमो दुरन्तादथ दक्षशापतः।**
**मुक्तः क्षयात्क्षीणकलोऽपि पुष्कलो ज्योतिश्च सोमेश्वरलिङ्गमादिमम्॥७२॥**

**कृपा टीका**—जिनके चरणकमल के पराग की सेवा से भयंकर दक्ष के शाप के कारण कलाओं के क्षीण हो जाने पर भी चन्द्रमा क्षय से मुक्त होकर फिर सभी कलाओं से युक्त हो गये और जिन्हें प्रथम ज्योतिर्लिङ्ग कहा जाता है॥७२॥

**श्रीशैलमासाद्य स मल्लिकार्जुनं रामोऽर्चयन् नन्दनमल्लिकादिभिः।**
**स्तुत्यानुरक्त्या वरिवस्ययार्जव प्रोद्दाम वाचा समतूतुषद्धरम्॥७३॥**

**कृपा टीका**—फिर परशुराम जी ने श्री शैल पर्वत में जाकर नंदनवन की मल्लिका से द्वितीय ज्योतिर्लिङ्ग मल्लिकार्जुन का पूजन किया। स्तुति प्रेम पूजा विनम्रता एवं स्वाभाविक वाणी से भगवान शंकर को संतुष्ट कर लिया॥७३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**यज्ज्योतिषोलिङ्गमथो द्वितीयकं पौराणिका आदरतः समामनन्।**
**पुत्रं दिदृक्षुर्गिरिजावरः सदा यत्राश्रितः क्रौञ्चभिदं महेश्वरः॥७४॥**

**कृपा टीका**—जिसको पौराणिक लोग आदर से द्वितीय ज्योतिर्लिङ्ग कहते हैं यही क्रौञ्च पर्वत के विदारक अपने पुत्र कार्तिकेय को निहारने के लिए भगवान शंकर पार्वती के सहित मल्लिकार्जुन नाम से यहाँ नित्य विराजते हैं॥७४॥

**भूयो महाकालमुपास्तधीधनः प्राप्योज्जयन्यां जनतापमोचनम्।**
**क्षिप्रापयःक्षालितपादपङ्कजं दोषाकरास्यं स निरस्तदूषणम्॥७५॥**

**कृपा टीका**—फिर बुद्धिमान परशुराम जी ने उज्जयिनी में जाकर भक्तों का कष्ट दूर करने वाले दूषण दैत्य को मारने वाले चन्द्रमुख क्षिप्रा नदी के जी से जिनका चरण कमल छालित है ऐसे भगवान महाकाल की उपासना की॥७५॥

**यत्रोषितानां भगवानुमावरो धत्ते महाकालकरालभीतितः।**
**रक्षन् प्रतीक्ष्यार्पितसर्वसाधनो निष्किञ्चनानामिव पारिजातकः॥७६॥**

**कृपा टीका**—अपने भक्तों को समस्त साधन अर्पित करके निष्किञ्चनों के लिए कल्पवृक्षरूप भगवान पार्वतीपति महविकरालकाल के भय से जहाँ निवास करने वालों का रक्षण करते हुए पालन पोषण करते रहते हैं॥७६॥

**ओङ्कारमासाद्यमुदावनीतलं रेवाजलाप्लावितसर्वविप्लवम्।**
**प्रार्चत् स भक्त्या परमेश्वरं प्रभुं राजोपचारैर्द्विजराजसत्तमः॥७७॥**

**कृपा टीका**—इसके अनंतर नर्मदा नदी द्वारा जिसके सम्पूर्ण उपद्रव नष्ट कर दिये गये हैं ऐसे ओंकारेश्वर में जाकर ब्राह्मणश्रेष्ठ परशुरामजी ने भगवान परमेश्वर का राजोपचार से पूजन किया॥७७॥

**विन्ध्याचलंस्मास्थितवान् स भक्तितः संप्रीणितोद्धा गुरुगौरवादपि।**
**तस्याद्रिराजस्य हरः प्रसेदिवान् ज्योतिस्सुलिङ्गं व्यदधाच्चतुर्थकम्॥७८॥**

**कृपा टीका**—विन्ध्याचल की भक्ति एवं उसकी गुरुदेव के प्रति पूज्य भावना से प्रसन्न होकर भगवान शंकर उसी की उपत्यका में चतुर्थ ज्योतिर्लिङ्ग के रूप में ओंकारेश्वर में विराज गये॥७८॥

**गत्वा परघ्नः परलीं परन्तपः श्रीवैद्यनाथं किल लिङ्गमद्भुतम्।**
**दृष्ट्वा प्रसन्नः समपूपुजन्मुदा विभ्रन्मनो भूतपभक्तिनिर्भरम्॥७९॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—शत्रुओं के नाशक परंतप परशुराम जी ने शिवजी की भक्ति से निर्मल मन को धारण करते हुए परली में पधारकर विंध्याचल के मध्य में वैद्यनाथ नामक अद्‌भुत ज्योतिर्लिङ्ग के दर्शन कर उनकी प्रसन्नता से पूजा की॥७९॥

**कैलासमुत्तोलयतो दुराग्रहात् दोर्भ्यां स्ववीर्यात् वहतः कृतागसः।**
**यो रावणस्य स्खलितः स्वहस्ततः अत्र स्थितः पुण्यमिवाल्पमेधसः॥८०॥**

**कृपा टीका**—जो भगवान वैद्यनाथ दुराग्रहवशात् कैलास को उठाकर पराक्रम से शिवलिङ्ग के दोनों भुजाओं से धारण करते हुए रावण के हाथ से छूटकर परली में उसी प्रकार स्थित हो गये जैसे अल्पबुद्धि का पुण्य क्षीण हो गया हो॥८०॥

**गत्वाथ भूयः किल डाकिनीं जवी स्वं डाकिनीभ्यो भगवानूरिरक्षिसुः।**
**तं पूजयामास च भीमशङ्करं षष्ठञ्च लिङ्गं धृतभक्तिरादरात्॥८१॥**

**कृपा टीका**—फिर वेगशाली भगवान परशुराम ने अपनी डाकिनियों से रक्षा करने की इच्छा से डाकिनी क्षेत्र में जाकर षष्ठ ज्योतिर्लिङ्ग भीम शंकर की भक्तिपूर्वक पूजा की॥८१॥

**वाराणसीमेत्य पुनः स भार्गवो वीरव्रतो वर्धितशत्रुसङ्कटः।**
**विश्वेशलिङ्गं समपूजयन्मुहुः कोट्यासहस्रेण च विल्वपत्रकैः॥८२॥**

**कृपा टीका**—शत्रुओं का संकट बढ़ाने वाले ब्रह्मचारी परशुरामजी ने वाराणसी आकर एक सहस्र करोड़ विल्वपत्रों से प्रसन्नतापूर्वक विश्वेशलिङ्ग भगवान विश्वनाथ की पूजा की॥८२॥

**यां विश्वनाथः प्रलयेऽपि काशिकां विभ्रत्त्रिशूले दयितामिवादरात्।**
**प्रीत्या ररक्षाथसुरेन्द्रवन्दितः सानन्दमानन्दवने कृतालयः॥८३॥**

**कृपा टीका**—जिस काशी को प्रलयकाल में भी भगवान विश्वनाथ ने प्रिया की भाँति अपने त्रिशूल में रखकर प्रेमपूर्वक सुरक्षित कर लिया और स्वयं इन्द्र से पूजित होकर आनन्दपूर्वक आनंदवन में निवास कर लिया॥८३॥

**गोदावरीतीरमुपेत्य भार्गवः सत्र्यम्बकं स्नेहजलाप्लुताम्बकः।**
**सम्पूज्य भक्त्या प्रतुतोष मानसे नष्टव्यथो रङ्कइवाप्यकाञ्चनम्॥८४॥**

**कृपा टीका**—फिर प्रेम जल से पूर्ण नेत्रवाले परशुराम जी गोदावरी के तट पर

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आकर भगवान त्रयम्बकेश्वर की पूजा करके स्वर्ण को पाकर दरिद्र की भाँति समस्त व्यथाओं से मुक्त होकर मन में बहुत प्रसन्न हुए॥८४॥

**संभावितो गौतमभक्तिभावितो गोदावरीं स्वीयशटाकलापतः।**
**प्रादुश्चकारामलनीरमण्डितां लिङ्गं शिवः चामरवृन्दवन्दितम्॥८५॥**

**कृपा टीका**—यहाँ गौतम जी की भक्ति से प्रसन्न होकर भगवान शंकर ने निर्मल जल वाली गोदावरी एवं देववंदित ज्योतिर्लिंग प्रकट किया॥८५॥

**केदारनाथं हिमशैलमूर्धनि प्रार्चत् प्रसन्नो भृगुवंशवर्धनः।**
**नेत्राम्बुभिश्चापि तुषारशीतलैः संक्षालयामास वदान्यशेखरम्॥८६॥**

**कृपा टीका**—हिमाचल पर्वत के शिखर पर भृगुपति परशुराम जी ने अपने नेत्रों के शीतल आँसुओं से महाभिषेक कर प्रसन्नतापूर्वक पूजन किया॥८६॥

**यश्चादिदेवः श्रितवत्सलो भवः कारुण्यकल्लोलविलोलमानसः।**
**विभ्रद्वपुर्माहिषमादिपूरुषो भीमेन भीमो ददृशे हिमालये॥८७॥**

**कृपा टीका**—जो आदि पुरुष आदिदेव भक्तवत्सल करुणा तरंगों से चंचल मनवाले भगवान शिव इससे पूर्व कल्प में हिमालय पर भीमसेन के द्वारा भयंकर भैंसे का रूप धारण करते हुए देखे गये॥८८॥

**पश्चात् समासाद्य स दारुकावनं नागेश्वरं पूजयतिस्म भक्तितः।**
**दूरीचिकीर्षुः षडसौ दुरत्ययान् नागानिवासादितभूरिवैक्लवः॥८८॥**

**कृपा टीका**—इसके पश्चात् शत्रुओं को भयभीत करने वाले परशुराम जी अपने काम, क्रोध, लोभ, मोह मदमात्सर्य, इन छहों नागों को दूर करने की इच्छा करते हुए से दारुका वन में जाकर नागेश्वर भगवान की भक्तिपूर्वक पूजा की॥८८॥

**यं सेवितुं सादरलोकपालकाः देवेन्द्रमुख्याः स्पृहयन्ति नित्यशः।**
**आकाशगङ्गाशिशिराम्बुशीकरैः संक्षालयिष्यन्त इवाङ्घ्रिपङ्कजम्॥८९॥**

**कृपा टीका**—जिन नागेश्वर के चरणकमल को आकाश गंगा कें शीतल ज़ल से अभिषिक्त करने के लिए इन्द्रादि लोकपाल आदरपूर्वक जिनकी सेवा हेतु नित्य तरसते रह़ते हैं॥८९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**भूयः समासाद्य स दक्षिणोदधिं रामेश्वरं पूजयति स्मपूजितः।**
**सन्नारिकेलाम्बुविशुद्धधारया रुद्राभिषेकं विदधे विधानवित्॥९०॥**

**कृपा टीका**—फिर दक्षिण सागर पहुँचकर विधानवेत्ता परशुराम जी ने नारियल की जलधारा से भगवान् रामेश्वर का रुद्राभिषेक करके पूजन किया॥९०॥

**यं पूर्वकल्पे रघुवंशवर्धनो रामेश्वरं स्थापयतिस्म सादरम्।**
**लिङ्गं विधायाथ च रेणुकामयं भूमौ च विश्वासमिवात्मनामनि॥९१॥**

**कृपा टीका**—जिस रामेश्वर को बालुकामय लिङ्ग बनाकर अपने नाम में विश्वास की भाँति भगवान् श्रीराम ने पूर्वकल्प में पृथ्वी पर आदरपूर्वक स्थापित किया था॥९१॥

**अन्ते स गत्वा मुदितश्शिवालयं घुश्मेश्वरं वैदिकमन्त्रवत्प्रभुः।**
**प्रीत्याभ्यसिञ्चज्जमदग्निनन्दनो नम्रः प्रसूनैः किल नन्दनोद्भवैः॥९२॥**

**कृपा टीका**—अन्त में प्रसन्न होकर विनम्र परशुराम जी ने शिवालय जाकर वैदिक मंत्रों से अभिषेक करते हुए नन्दनवन के पुष्पों से घुश्मेश्वर की पूजा की॥९२॥

**यो ब्राह्मणीनिर्मलभक्तियन्त्रतो घुश्मापुरो दर्शितलिङ्गविग्रहः।**
**दिव्यं यशः स्वं प्रकटीचकारह घुश्मेश्वरख्यातिमगात् सनातनीम्॥९३॥**

**कृपा टीका**—जो ब्राह्मणी की निर्मल भक्ति से प्रभावित होकर घुश्मा के समक्ष लिङ्ग विग्रह में प्रकट हुए तथा अपना दिव्ययश प्रकट किया और घुश्मेश्वर नाम से सदा के लिए प्रसिद्ध हो गये॥९३॥

**एवं विभुर्द्वादशलिङ्गविग्रहं सज्ज्योतिषो ज्योतिषबद्धनिष्ठया।**
**सम्पूज्य भक्त्या भृगुवंशभूषणः स द्वादशादित्य इवाबभौ दिने॥९४॥**

**कृपा टीका**—इस प्रकार भृगुवंश को बढ़ाने वाले भगवान परशुराम परब्रह्म में निष्ठापूर्वक बारहों ज्योतिर्लिङ्ग की पूजा करके दिन में उदित हुए द्वादश सूर्यों की शोभा से युक्त होकर प्रकाशमान हो गये॥९४॥

**एवं विधान्येव सुतीर्थकान्यलं भ्राम्यन् भ्रमभ्रामितपापतापहा।**
**भूयश्चचारातिमनुष्यचेष्टितः संशिक्षयिष्यन् पितृतोषणं व्रतम्॥९५॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—इस प्रकार पितृ तोषण व्रत की शिक्षा लेते हुए मनुष्य के विलक्षण चेष्टावाले भ्रम से युक्त जीवों के पाप एवं ताप को नष्ट करने वाले परशुराम जी भ्रमण करते हुए इस प्रकार अनेक तीर्थों में विचरण करते रहे॥९५॥

**पश्चाद्गतस्तीर्थगुरुं स पुष्करं पुंसःपुराणस्य कलांशविग्रहः।**
**लोकं पुनानः पदपद्मरेणुभी रेमेंऽशुमालीव स रेणुकासुतः॥९६॥**

**कृपा टीका**—इसके अनंतर पुराण पुरुष भगवान विष्णु के कलांशावतार परशुरामजी अपने चरणकमल की धूलि से जगत को पवित्र करते हुये पुष्कर आकर सूर्य की भाँति सुशोभित हुए॥९६॥

**भूयः प्रयागं स तु तीर्थनायकं**
**गत्वा त्रिवेण्यां परिमज्य भार्गवः।**
**स्वं पापराशिं क्षपयाम्बभूव ह**
**प्रद्योतितो भानुरिवाभ्रसंक्षये॥९७॥**

**कृपा टीका**—फिर परशुराम जी तीर्थराज प्रयाग जाकर त्रिवेणी में मज्जन करके अपनी सम्पूर्ण पापराशि को नष्ट करके बादलों के छँट जाने पर सूर्यनारायण की भाँति चमक उठे॥९७॥

**स ब्रह्मचर्यव्रतमेव नैष्ठिकं विभ्रत्समुत्खातसपत्नकण्टकः।**
**सत्तीर्थयात्राव्यपदेशतो विभुस्तीर्थीचकाराखिलमेव भारतम्॥९८॥**

**कृपा टीका**—इस प्रकार शत्रु कंटकों को उखाड़ कर नैष्ठिक ब्रह्मचर्य व्रत धारण करते हुए समर्थ परशुराम जी ने तीर्थयात्रा के बहाने सम्पूर्ण भारत को ही तीर्थ बना दिया॥९८॥

**इति पितृपरितोषं संविधित्सुर्महात्मा**
**पदजलजरजोभिर्जीवलोकं पुनानः।**
**निजचरितसितिम्ना श्वेतयिष्यंस्त्रिलोकीम्**
**विबुधविरुदवन्दी वन्दितो रैणुकेयः॥९९॥**

**कृपा टीका**—इस प्रकार रेणुकापुत्र महात्मा परशुरामजी पिता का परितोष करने की इच्छा करते हुए श्रीचरणकमलों की धूलि से मर्त्यलोक को पवित्र करते हुए अपने चरित्र की धवलिमा से तीनों लोकों को उज्ज्वल करते हुए देवतारूप

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बंदीजनों से वंदित हुए॥९९॥ मालिनी।

द्विजकुलकुमुदेशः शस्त्रविद्याविधिज्ञो
गलपितसकलपापो भग्नतापस्तरस्वी।
घटजसदृशतेजा भूसुरध्रुक्पयोधे-
र्जगति जयति रामः सर्वदा जामदग्न्यः॥१००॥

कृपा टीका—ब्राह्मणकुल कुमुद के चन्द्रमा, शस्त्र विद्या के वेत्ता, सम्पूर्ण पापों के नाशक, जीवों के ताप हरने वाले, अत्यन्त तेजस्वी, ब्राह्मणद्रोहीरूप महासागर को सोखने के लिए अगस्त्य के समान जैसे जमदग्निनंदन परशुराम जी जगत् में सर्वदा उत्कृष्ट व्यक्तित्व बनकर विराज रहे हैं॥१००॥ मालिनी।

इत्थं शुभे भार्गवराघवीयेभव्ये महाकाव्य उदारवृत्ते।
सर्गः श्रियैस्तात् कविरामभद्राचार्यप्रणीते किल सप्तमो नः॥१०१॥

कृपा टीका—इस प्रकार कल्याणकारी शुभ सुन्दर छन्दों वाले महाकवि रामभद्राचार्य द्वारा प्रणीत भार्गवराघवीय नामक इस महाकाव्य में प्रस्तुत सातवाँ सर्ग हम लोगों की श्री के लिए हो अर्थात् हमें भक्ति श्री प्रदान करे॥१०१॥ उपजाति।

**इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामिरामभद्राचार्यप्रणीते श्रीभार्गवराघवीये महाकाव्ये 'तीर्थाटनं' नाम सप्तमः सर्गः॥**

॥श्रीराघवः शन्तनोतु॥

इस प्रकार धर्मचक्रवर्ती महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामी रामभद्राचार्य द्वारा विरचित श्रीभार्गवराघवीय नामक महाकाव्य में 'तीर्थाटन' नामक सप्तम सर्ग पूर्ण हुआ॥

॥श्रीराघवः शन्तनोतु॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥श्रीमद्राघवो विजयते॥

# अथ अष्टमः सर्गः

तीर्थयात्रां गते रामे विरामे ब्रह्मविद्विषाम्।
त्रिलोक्याश्चाभिरामे तु पद्मिन्या इव भास्वति॥१॥

**कृपा टीका**—जिस प्रकार कमलिनी को सूर्य आनंदित करते हैं उसी प्रकार तीनों लोकों को आनंद देनेवाले ब्राह्मणद्रोहियों के अभावस्थान ऐसे परशुराम जी के तीर्थयात्रा पर चले जाने पर॥१॥ इस सर्ग में श्लोक ९१ तक अनुष्टुप् छन्द है।

कार्तवीर्ये महावीर्ये नीते वीरगतिं रणे।
चञ्चत्कुठारयानेन रामेणाक्लिष्टकर्मणा॥२॥

**कृपा टीका**—पवित्र कर्मवाले परशुराम जी द्वारा चंचल कुठाररूप विमान से महापराक्रमी सहस्रार्जुन के वीरगति प्राप्त करा दिये जाने पर॥२॥

कार्तवीर्यात्मजाः सर्वे भृगूणां कोष्णशोणितैः।
निर्वापाञ्जलिदानेन निश्चिक्युश्तोषणं पितुः॥३॥

**कृपा टीका**—सहस्रार्जुन के सभी पुत्रों ने भृगुवंशियों के गर्म रक्त से जलाञ्जलि दान द्वारा पिता के परितोष का निश्चय किया॥३॥

सम्भूयार्जुनयः सर्वे प्रभुजाप्रतिजज्ञिरे।
जामदग्न्यं चतुर्थं वै निहन्तुं कूटसंयुगे॥४॥

**कृपा टीका**—इसके अनंतर सभी सहस्रार्जुन के पुत्रों ने भुजा उठाकर जमदग्नि के चतुर्थ पुत्र परशुराम जी को कूटयुद्ध में मार डालने की प्रतिज्ञा कर ली॥४॥

महत्या चतुरङ्गिण्या सेनया बालिसेनया।
माहिष्मत्या विनिर्जग्मुरारादागतमृत्यवः॥५॥

**कृपा टीका**—अति सन्निकट आई हुई मृत्यु के वशीभूत अर्जुन के पुत्र मूर्ख सेनापति से युक्त विशाल चतुरंगिणी सेना के साथ माहिष्मती नगरी से निकल पड़े॥५॥

पदातिस्यन्दनाश्वानां कुञ्जराणाञ्च धूलिभिः।
छन्नज्ज्योतिर्दिवाप्यर्कः सायन्तन इवाभवत्॥६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—पैदल, रथ, घोड़े एवं हाथियों के चरणों से उठी धूलि द्वारा प्रकाश के तिरोहित हो जाने पर सूर्यनारायण दिन में भी संध्याकालीन जैसे हो गये॥६॥

**अथापशकुनान्येषामुत्पेतुर्ब्रह्मघातिनाम्।**
**हैहयव्यसनं प्राप्तं सूचयन्तीव दारुणम्॥७॥**

**कृपा टीका**—इसके अनंतर हैहयवंश में आने वाली दारुण विपत्तियों की सूचना देते हुए अनेक अपशकुन इन ब्रह्महत्यारों के समक्ष उपस्थित हुए॥७॥

**गृद्ध्रा अगृद्धयंस्तन्मासं उपर्युपरि तानथ।**
**कालदूता उलूकाश्च करटाश्चुकुवुः कटुद्ध॥८॥**

**कृपा टीका**—गृध्र लोग उनके मांसों के लिए टूट पड़े और उन दुष्टों के ऊपर काल के दूत और उल्लू मँडराने लगे और कौवे कटु बोलने लगे॥८॥

**उल्कापातो दिवाप्यासीत् पस्पन्दे वामलोचनम्।**
**शस्त्राणि पेतुर्हस्तेभ्योऽनुत्साहो योद्ध्रृणामथ॥९॥**

**कृपा टीका**—उस समय दिन में भी उल्कापात होने लगा, बाँया नेत्र फड़कने लगा, वीरों के हाथ से हथियार गिरने लगे और वीरों का मन उत्साह शून्य होने लगा॥९॥

**नाजीगणंस्ते राजन्याः कालपाशवशंवदाः।**
**अविवेकान्धचक्षुष्का मुमुर्षव इवौषधम्॥१०॥**

**कृपा टीका**—जिस प्रकार मरणासन्न व्यक्ति औषधि नहीं लेते उसी प्रकार काल के वश में हुए अविवेक से अंधनेत्र वाले उन राजकुमारों ने इन अपशकुनों की कोई चिन्ता नहीं की॥१०॥

**अथापतन् पातयन्तो वृक्षान् मुन्याश्रमं तदा।**
**जामदग्नेन रहितं हरिणेव मृगाकरम्॥११॥**

**कृपा टीका**—इसके अनन्तर सिंह से रहित मृगसमूह की भाँति जमदग्नि के आश्रम में पास के वृक्षों को तहस नहस करते हुए सहस्रार्जुन के पुत्र आ धमके॥११॥

**लुनीहि काननं वृक्षान् वृश्च शीघ्रं मुनीन् जहि।**
**हरकन्यावटूंश्छिन्धि वदन्तश्चेत्थमाययुः॥१२॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—वन को उजाड़ दो वृक्षों को काट दो मुनियों को मार डालो मुनि कन्याओं का अपहरण करो वटुओं को छिन्न भिन्न कर दो इस प्रकार बोलते हुए सहस्रार्जुन के पुत्र वहाँ घुस आये॥१२॥

**पलायन्तेस्म तान्वीक्ष्य तापसा कूटयोधिनः।**
**श्येनान्निरीक्ष्य चायातान् भीता इव विहङ्गमाः॥१३॥**

**कृपा टीका**—उन कूट योद्धा राजकुमारों को देखकर तपस्वी लोग उसी प्रकार भगे जैसे बाज को देखकर छोटे पक्षी भाग जाते हैं॥१३॥

**तानापतत आलक्ष्य शस्त्रपाणीन् नराधमान्।**
**मृगीव त्रस्तनयना रेणुका रेणुरूषिता॥१४॥**

**कृपा टीका**—इस प्रकार हाथ में शस्त्र लिये हुए उन दुष्ट राजकुमारों को आते देखकर धूलि से धूसरित रेणुका जी मृगी की भाँति डरीं और उनके नेत्र में त्रास के भाव छलकने लगे॥१४॥

**जमदग्निः समाधिस्थो ध्यानस्तिमितलोचनो।**
**मीलन्मीनइवाम्भोधिस्तस्थौ शैल इवाचलः॥१५॥**

**कृपा टीका**—जमदग्नि जी महाराज समाधि में स्थित थे और उनके नेत्र ध्यान में वंद थे। उनकी ध्यानमुद्रा सोई हुई मछलियों से युक्त सागर जैसी थी और उनकी स्थिति पर्वत जैसी थी॥१५॥

**तं हन्तुकामानाज्ञाय वारयामास तापसी।**
**तस्थौ करिणमावृत्य करेणुरिव रेणुका॥१६॥**

**कृपा टीका**—जमदग्नि को मारने की इच्छा करते हुए उन दुष्ट राजपुत्रों को देखकर तपस्वी रेणुका ने रोका जिस प्रकार हथिनी हाथी को सूँड से ढकने का प्रयास करती है उसी प्रकार रेणुका जी जमदग्नि को अंचल से ढक कर बैठ गयीं॥१६॥

**विललापातिकरुणं कुररीव सुमध्यमा।**
**हा रामेति समाक्रोश्य पत्यौ संवीक्ष्य संकटम्॥१७॥**

**कृपा टीका**—पति पर आये हुए संकट को देखकर हा राम हा राम कहकर चिल्लाती हुईं शोभन मध्यभाग वाली रेणुका जी कुररी की भाँति अत्यन्त करुण विलाप करने लगीं॥१७॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**श्रृणुध्वं क्षत्रियाः सर्वे निर्बन्धस्त्यज्यतामयम्।**
**दयध्वं मम दीनाया कान्तं मा हत मा हत।।१८।।**

**कृपा टीका**—हे क्षत्रियो सुनो। यह हठ छोड़ दो मुझ दीन तापसी पर दया करो। मेरे पति को मत मारो मत मारो॥१८॥

**निर्दोषोऽयं सुशीलश्च ब्राह्मणो ब्रह्मवित्तमः।**
**तं हन्तुमिव चायाता गवाशागामनागसम्।।१९।।**

**कृपा टीका**—महर्षि जमदग्नि बड़े ही निर्दोष, सुशील, श्रेष्ठ वेत्ता तथा कुलीन ब्राह्मण हैं निरपराध गौ को मारने आये हुए कसाई की भाँति महर्षि की हत्या के लिए तुम आये हो॥१९॥

**प्रतीक्ष्यन्तां क्षणाः केचित् युयुत्सानलमेव वः।**
**शमयिष्यति चागत्य राममेघः शराम्बुभिः।।२०।।**

**कृपा टीका**—कुछ क्षण प्रतीक्षा कर लो, शीघ्र ही आकर परशुरामरूप मेघ अपने वाणरूप जल से तुम्हारी युद्ध की इच्छारूप अग्नि को शान्त कर देगा॥२०॥

**इत्येवं विलपन्तीं तां विनिर्भर्त्स्य विनिर्दयाः।**
**क्षत्रियापसदाः खड्गैर्जमदग्नेः शिरोऽहरन्।।२१।।**

**कृपा टीका**—निर्दयानिकृष्ट क्षत्रियकुमारों ने इस प्रकार विलाप करती हुई रेणुका जी को पीछे धकेल कर तलवारों से जमदग्नि का शिर काट दिया॥२१॥

**हाहाकारो महानासीत् स्वाहाकारविवर्जितः।**
**राजन्यघस्मरैः क्रूरैर्निहिते ब्रह्मवादिनि।।२२।।**

**कृपा टीका**—क्रूर नीच राजकुमारों द्वारा ब्रह्मवादी जमदग्नि जी के मारे जाने पर स्वाहाकार से रहित हाहाकार होने लगा॥२२॥

**महर्षेः शिर आदाय निर्मथ्याश्रमसंपदः।**
**विडाला इव ते जग्मुर्हत्वा रात्रौ वयोऽर्भकान्।।२३।।**

**कृपा टीका**—इस प्रकार जैसे वन विलाव रात में चिड़ियों के घोसलों में जाकर उनके छोटे-छोटे बच्चों को मार डालते हैं उसी प्रकार जमदग्नि के कटे हुए शिर को लेकर आश्रम की सम्पत्ति तहस नहस करके हैहय राजकुमार माहिष्मती चले गये॥२३॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कबन्धं भग्नसंबंधं गृहीत्वा रेणुका सती।।**
**पपात धरणौ झञ्झोद्धूतेव कल्पवल्लिका।।२४।।**

**कृपा टीका**—इस प्रकार शिर कटे हुए जमदग्नि का कबंध लेकर सती रेणुका जी झंझावात से झकझोरी हुई कल्पलता की भाँति पृथ्वी पर गिर पड़ीं।।२४।।

**एतस्मिन्नन्तरे तत्र भार्गवोऽपि समागमत्।**
**उत्पपाताशुभं घोरं पितुः कदनकारणम्।।२५।।**

**कृपा टीका**—इसी समय वहाँ तीर्थयात्रा करके परशुराम जी लौट ही रहे थे उस समय उन्हें अनेक उत्पात और पिता के मृत्यु के सूचक घोर अशुभ दिखे।।२५।।

**वामदेवविधेयस्य वामं लोचनमस्फुरत्।**
**वामं प्रदक्षिणं चक्रे मृगमाला स भीतवत्।।२६।।**

**कृपा टीका**—भगवान शंकर जी के शिष्य परशुराम जी की बायीं आँख फड़कने लगी। भयभीत हरिणों की पंक्ति परशुराम जी की बायीं ओर से परिक्रमा करने लगीं।।।२६।।

**नाधीयतेस्म बटवो बाष्पोपहतचेतनाः।**
**स्वाध्यायमपि शोकार्ता न पठन्ति स्म वेपिताः।।२७।।**

**कृपा टीका**—आश्रम के बटु रो रोकर अपनी चेतना खो चुके थे और कंपित हो रहे थे इसलिए न तो वे वेदाध्ययन कर रहे थे और न ही अपनी शाखा के वेद का पाठ ही कर रहे थे।।२७।।

**नाध्यापयन्ति मुनयः न रटन्तिस्म सारिकाः।**
**कीरा नैवस्म कूजन्ति न गायन्तिस्म कन्यकाः।।२८।।**

**कृपा टीका**—उस समय मुनि अध्यापन नहीं कर रहे थे। मैनाएँ नहीं बोल रही थीं, तोते नहीं कूज रहे थे। मुनि कन्यायें नहीं गा रही थीं।।२८।।

**नाग्निहोत्रवषट्कारौ स्वाहाकारविवर्जितम्।**
**दावाग्निनेवसंदग्धं वनं विषमतां गतम्।।२९।।**

**कृपा टीका**—वहाँ अग्निहोत्र और वषट्कार नहीं हो रहे थे। स्वाहाकार से रहित वह वन मानो दावाग्नि से जला हुआ एक विषम परिस्थिति में पहुँच चुका था।।२७।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कबन्धंगतनिर्बन्धं पश्यतः पतितं पितुः।
रामस्यापि महाधैर्यशिखरी व्यचलत्क्षणम्।।३०।।

**कृपा टीका**—कटे हुए शीश वाले पिता के कवंध को देखते ही परशुराम जी का भी धैर्य रूप पर्वत एक क्षण के लिए चलायमान हो गया।।३०।।

पप्रच्छ मातरं वीरो रोषसंरक्तलोचनः।
क्रोधकारुण्यसम्पन्नः संदष्टदशनच्छदः।।३१।।

**कृपा टीका**—क्रोध के कारण लाल नेत्रवाले ओठों को चबाकर क्रोध और करुणा से युक्त परशुराम जी ने माता जी से पूछा।।३१।।

केन नीचेन मातर्मे तातःस्वर्गमितोऽधुना।
कः क्रीडति कृतान्तेन मुमुर्षुः प्रलयाग्निना।।३२।।

**कृपा टीका**—हे माँ! किस नीच के द्वारा मेरे पिताश्री इस समय स्वर्ग भेजे गये? कौन व्यक्ति आज प्रलयाग्नि और काल से खेल रहा है।।३२।।

मत्कुठारः कठोरोऽयं कस्य पास्यति शोणितम्।
गृद्ध्रेभ्यो ह्यर्पयिष्यन्ति मांसं कस्य ममाशुगाः।।३३।।

**कृपा टीका**—मेरा कठोर यह कुठार किसका रक्त पियेगा। मेरे ये वेगशाली बाण गृध्रों को किसका माँस अर्पित करेंगे।।३३।।

एवमुक्ता महाभागा रेणुका पतिदेवता।
पुत्रमावेदयामास वृत्तान्तं वज्रदारुणम्।।३४।।

**कृपा टीका**—इस प्रकार कहने पर पतिव्रता मनस्विनी रेणुका जी ने पुत्र परशुराम जी को वज्र के समान दारुण सम्पूर्ण वृतान्त सुनाया।।३४।।

कार्तवीर्यावमैर्हस्ते पिता वै पितृवत्सल।
अग्न्यागारसमासीनः पशुमारममार्यत।।३५।।

**कृपा टीका**—हे पितृवत्सल! सहस्रार्जुन के मलस्वरूप पुत्रों ने अग्निशाला में बैठे हुए तुम्हारे पिताश्री को पशु की भाँति गला काटकर मार डाला।।३५।।

अभवं विधवा वीर माधवे त्वयि तिष्ठति।
स्थलीव कर्दमोपेता पारिजातालवालिका।।३६।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे वीर जिस प्रकार पारिजात की जन्मभूमि स्थली कीचड़ से युक्त होजाए उसी प्रकार तुम जैसे परमात्मा के रहते हुए भी मैं विधवा हो गयी॥३६॥

**इत्युक्त्वा करुणं माता पतित्वा भूमिमण्डले।**
**एकविंशतिकृत्वः सा सोरस्थलमताडयत्॥३७॥**

**कृपा टीका**—इस प्रकार करुण क्रन्दन करके पृथ्वी पर गिरकर माता रेणुका जी ने इक्कीस बार अपनी छाती पीटी॥३७॥

**आजानुलम्बिबाहुभ्यां उत्थाप्य जननीं सुतः।**
**नेत्रे प्रमृज्य तां प्राह गिरा घनगभीरया॥३८॥**

**कृपा टीका**—पुत्र परशुराम जी आजानुबाहुओं से माँ को उठाकर उनके नेत्र पोंछकर गंभीर वाणी में बोले॥३८॥

**मारोदीरम्ब सत्यं ते प्रतिजाने प्रतीयताम्।**
**निश्छत्रांमेदिनीं सर्वां करिष्ये सायकैरहम्॥३९॥**

**कृपा टीका**—हे माँ मत रोओ। मैं सत्य प्रतिज्ञा करता हूँ कि अपने वाणों से इस पृथ्वी को ब्रह्मद्रोही क्षत्रियों से रहित कर दूँगा॥३९॥

**त्रिसप्तकृत्वोहृदयं यत्त्वया ताडितं शुभे।**
**तत्संख्ययैव निश्छत्रां करिष्यामि महीमिमाम्॥४०॥**

**कृपा टीका**—हे शुभे अपने इक्कीस बार अपनी छाती पीटी इसलिए उतनी ही बार मैं ब्रह्मद्रोही क्षत्रियों से इस पृथ्वी को रहित करूँगा॥४०॥

**त्वं सदा सधवा साध्वी सौभाग्यसुखसंयुता।**
**विधवास्तु भविष्यन्ति अद्य त्वद्रिपुयोषितः॥४१॥**

**कृपा टीका**—हे साध्वी आप सदैव सौभाग्य सुख से युक्त अखंड सौभाग्यवती हैं। आज ही आपके शत्रुओं की पत्नियाँ विधवा होंगी॥४१॥

**मा रोदीरम्ब भद्रन्ते क्षणं किञ्चित्प्रतीक्ष्यताम्।**
**त्वन्नाथघ्नानां साध्वि हनिष्यामि शिताशुगैः॥४२॥**

**कृपा टीका**—हे माँ आप न रोएँ आपका कल्याण हो। कुछ क्षण प्रतीक्षा कीजिए। आज ही आपके पति के हत्यारों को मैं तीक्ष्ण वाणों से मार डालूँगा॥४२॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अहं हैहयपुत्राणां पौत्राणां रुधिरामिषैः।
क्षिप्रं श्राद्धं विधातास्मि कार्तवीर्यस्य वार्षिकम्।।४३

**कृपा टीका**—मैं हैहयराज के पुत्रों और पौत्रों के रक्त तथा माँस से शीघ्र ही सहस्रार्जुन का वार्षिक श्राद्ध करने वाला हूँ।।४३।।

यावन्मदागमं मात्रा रक्षणीयः पिता त्वया।
तेजसा स्वेन दिव्येन सावित्र्या सत्यवानिव।।४४।।

**कृपा टीका**—जिस प्रकार सावित्री ने सत्यवान की रक्षा की थी उसी प्रकार मेरे आने तक अपने दिव्य तेज से आप पिताश्री के शरीर की रक्षा करें।।४४।।

तैलद्रोण्यां विनिक्षिप्य पितुर्मृतकलेवरम्।
हस्ते कुठारमादाय कृतान्त इव कोपितः।।४५।।

उपवीती धनुष्पाणिर्महावक्षाः प्रतापवान्।
हन्तुं जगाम राजन्यान् पितृहन्तॄन् गतायुषः।।४६

**कृपा टीका**—यज्ञोपवीत धारण किये हुए हाथ में धनुष एवं फरसा लेकर विशाल वक्षस्थल वाले परम प्रतापी, काल के समान क्रुद्ध परशुराम जी पिता के मृत शरीर को तेल से भरी नाव में डालकर पिता के हत्यारे क्षीण आयुवाले दुष्ट राजाओं का वध करने के लिए चल दिये।।४५-४६।।

चतुरङ्गबलोद्दारुकोपसर्पिष्समेधसः।
क्षत्रबन्धून् समादग्धुं प्राज्ज्वलद् भार्गवानलः।।४७।।

**कृपा टीका**—चतुरङ्ग सेना रूप उत्कृष्ट लकड़ी से धधकता हुआ क्रोध रूपी घी से उद्दीप्त ऐसा परशुराम रूप अग्नि, दुष्ट राजाओं को ईंधन के समान भस्म करने के लिए प्रज्वलित हो उठा।।४७।।

तीक्ष्णबाणविषाणाग्रो दानदानीनिरंकुशः।
राजपैपीलिकान्मृद्नन् रामहस्ती व्यजृम्भत।।४८।।

**कृपा टीका**—तीक्ष्ण बाण ही जिसके आगे के दाँत थे। दान ही जिसका मद था जो कभी भी अंकुश का नियंत्रण नहीं मानता था ऐसा परशुराम रूप मतवाला हाथी ब्रह्मद्रोही राजवंश चीटों को कुचलता हुआ और भी उद्धत हो गया।।४८।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पञ्चाननकृपादृष्टिप्राप्तपञ्चाननो बली।
राजकुम्भीश्वरान् हन्तुं प्रोत्सेहे रामकेशरी।।४९।।

**कृपा टीका**—पञ्चानन भगवान शंकर की कृपादृष्टि से जिसे पाँच मुख के समान धनुष, बाण, तरकश, फरसा एवं दीर्घायुष्य ये पाँच गुण प्राप्त हैं ऐसा परशुरामरूप सिंह दुष्ट राजारूप मतवाले हाथियों को मार डालनें के लिए प्रोत्साहित हो उठा।।४९।

दृप्तराजबलाम्भोधिं दिधक्षंस्तर्षोऽर्जितः।
क्रोधस्फुल्लिङ्गमालाढ्यो ववृधे रामबाडवः।।५०।।

**कृपा टीका**—अहंकारी राजाओं के सैन्य महासागर भस्म करने की इच्छा करता-हुआ क्रोधरूप लपटों की माला से युक्त परशुरामरूप बडवानल उद्दीप्त हो उठा।।५०।।

महाभुजोर्मिहुंकारझङ्कारो भार्गवाभिधः।
वीर्यवारिःप्रववृधे पर्वणीव पयोनिधिः।।५१।।

**कृपा टीका**—महान भुजाएँ ही जिसकी लहर थी। हुंकार गर्जनारूप झंकारयुक्त ऐसा पराक्रम रूप जल से मंडित परशुराम महासागर अब उद्वेलित हो उठा।।५१।।

निश्छत्रो निस्तकवचो निष्पदत्राण आत्मवान्।
एकाकी सोपवीतोऽयं जगामारिजिघांसया।।५२।।

**कृपा टीका**—परशुराम जी क्षत्र, कवच, और पदत्राण के बिना ही मात्र उपवीत धारण किये हुये अकेले ही शत्रु वध करने की इच्छा से चल पड़े।।५२।।

रुरोध नगरीं नागैः श्वसद्भिरिव सायकैः।
क्षत्रियापसदान् हन्तुं कृतान्त इव दुर्धरः।।५३।।

**कृपा टीका**—दुष्ट राजाओं को मारने के लिए दुर्घर्ष काल के समान परशुराम जी ने श्वास लेते हुए सर्प के समान वाणों से माहिष्मती नगरी को घेर लिया।।५३।।

धनुष्टङ्कारयामास वज्रनिष्पेशनिष्ठुरम्।
आजुहाव रणे वीरान् ब्रह्मघ्नान्क्षपितायुषः।।५४।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—वज्रपात के समान कठोर धनुष की टंकार की एवं परशुराम जी ने नष्ट आयु वाले ब्रह्महत्यारे वीरों को युद्ध में ललकारा॥५४॥

**अथापतन्सरोषास्ते दंशिताश्चण्डधन्विनः।**
**मन्देहा इव मन्देहा प्रत्यूषे बालभास्करम्॥५५॥**

**कृपा टीका**—इसके अनंतर निम्न चेष्टा वाले वैहेध्य राजकुमार क्रुद्ध होकर कवच धारण करके प्रचंड धनुषों के साथ प्रातःकाल में सूर्य नारायण पर मंदेह नामक दैत्यों की भाँति परशुराम जी के ऊपर टूट पड़े॥५५॥

**न विव्यथे मनाग्रामो वीक्ष्य वीरानुपागतान्।**
**कुञ्जरान्दानदृप्तांस्तान् समीक्ष्य मृगराडिव॥५६॥**

**कृपा टीका**—आये हुए उन वीरों को देखकर परशुराम जी तनिक भी विचलित नहीं हुए। जैसे मतवाले हाथियों को देखकर सिंह विचलित नहीं होता॥५६॥

**अथारभ्यत युद्धं तत् तुमुलं लोमहर्षणम्।**
**दैवासुरमिवात्युग्रं रामेणार्जुनिभिः समम्॥५७॥**

**कृपा टीका**—इसके अनंतर सहस्रार्जुन के पुत्रों के साथ परशुराम जी द्वारा देवासुर संग्राम की भाँति अत्यन्त उग्र भयंकर रोमाञ्चक युद्ध प्रारम्भ कर दिया गया॥५७॥

**चिक्षिपुः क्रोधताम्राक्षा दिव्यशस्त्राण्यनेकशः।**
**शक्तिशूलकृपाणेषुभुशुण्डीपरिघान्यथ॥५८॥**

**कृपा टीका**—क्रोध से लाल नेत्र वाले उन हैहय राजकुमारों ने परशुराम जी पर शक्ति, त्रिशूल, तलवार, वाण, बंदूक परिघ आदि अनेक अस्त्र शस्त्र फैंकें॥५८॥

**तानि चिच्छेद रामोऽपि कौतुकेन शितैः शरैः।**
**सतर्क इव पुण्याढ्यो दुर्जनानां मनोरथान्॥५९॥**

**कृपा टीका**—परशुराम जी ने खेल खेल में तीखे वाणों से दुर्जनों के मनोरथों को पुण्यशाली व्यक्ति की भाँति उन अस्त्र शस्त्रों से काट दिया॥५९॥

**क्वचिद्रथं समाभञ्जन् क्वचित्सूतं निपातयन्।**
**क्वचिदश्वान् विनिर्निघ्नन् क्वचिद्धिसंस्तु दन्तिनः॥६०॥**

**कृपा टीका**—कहीं रथ तोड़ते हुए कहीं सारथी को मारते हुए कहीं घोड़ों को नष्ट करते हुए तो कहीं हाथियों की हिंसा करते हुए॥६०॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**रथिनाञ्च पदातीनां द्रुतं हस्तिमतामथ।**
**छिन्दच्छिरांसि युगपद् सैको बहुरिवाभवत्।।६१।।**

**कृपा टीका**—रथियों, पैदल सैनिकों, हाथी पर चढ़े हुए योद्धाओं के शिरों को एक साथ काटते हुए वे परशुराम जी एक होकर भी बहुत से लग रहे थे।।६१।।

**यावद्धन्वी धनुस्सज्यं चिकीर्षति च तावता।**
**रामेण तीक्ष्णभल्लेन छिन्नमेव विलोक्यते।।६२।।**

**कृपा टीका**—जब तक धर्नुधर अपना धनुष चढ़ाने की इच्छा करता तब तक तो परशुराम जी के द्वारा तीखे वाणों से कटा हुआ ही दीखता था।।६२।।

**विकर्षन्तं विमृश्यन्तं सन्दधानं शिलीमुखम्।**
**नापश्यत् कोऽपि चात्मानं घ्नन्तमेव व्यलोकयत्।।६३।।**

**कृपा टीका**—कोई भी वीर परशुराम जी को धनुष चढ़ाते, विचार करते, वाण का संधान करते, नहीं देख रहा था वह तो उन्हें स्वयं को मारते हुए ही देख रहा था।।६३।।

**वीराणां भग्नशिरसां रामशस्त्रहतैनसाम्।**
**प्रगच्छतां च कोटीनां स्वर्गं स्वल्पमिवाभवत्।।६४।।**

**कृपा टीका**—परशुराम जी के शस्त्रों से निष्पाप हुए कटे शिरों वाले स्वर्ग जाते हुए कोटि कोटि वीरों की भीड़ से अब स्वर्ग बहुत छोटा जैसा होने लगा था।।६४।।

**स्वर्गसोपानरूपेण सैकैकेन महेषुणा।**
**कोटिकोटीरनिनीषुर्वै सम्मर्दमिव चान्वभूत्।।६५।।**

**कृपा टीका**—परशुराम जी स्वर्ग के सोपान के समान बने हुए एक एक वाण से कोटि कोटि वीरों को स्वर्ग भेजने की इच्छा करते हुए बहुत भीड़ का अनुभव जैसा कर रहे थे। क्योंकि सोपान एक, उस पर चढ़कर स्वर्ग जानेवाले करोड़ों।।६५।।

**क्वचित् प्रभज्य पत्राणि जघान रथिनः क्वचित्।**
**क्वचिच्छिरांसि चिच्छेद क्वचिच्चापं चकर्त सः।।६६।।**

**कृपा टीका**—परशुराम जी कहीं वाहनों को काटते तो कहीं रथियों को मारते, कहीं सिरों को काटते तो कहीं धनुषों का खंडन करते थे।।६६।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धावन्तं कञ्च विव्याध करं कस्यचिदाच्छिनत्।
कस्यचिन्नेत्रयुगलं व्रणयामास सायकैः।।६७।।

**कृपा टीका**—किसी को दौड़ते हुए बींधा तो किसी के हाथ काट दिये। किसी की दोनों आँखों को वाणों से भर दिया॥६७॥

कृतान्त इव चावार्यः कालानलइवोद्धतः।
साम्वर्तकइवामोघः क्षपयामास शात्रवान्।६८।।

**कृपा टीका**—काल के साथ दुर्निवार्य प्रलयाग्नि के समान उद्धत और साम्वर्तक मेघ के समान अमोघ पराक्रमी परशुराम जी ने शत्रुओं का संहार कर डाला॥६८॥

एवं मुहूर्तमात्रेण रामेणाक्लिष्टकारिणा।
शात्रवं तद् बलं भग्नं भास्करेण यथा तमः।।६९।।

**कृपा टीका**—इस प्रकार श्रेष्ठ कर्म करने वाले परशुराम जी द्वारा सूर्यनारायण द्वारा अन्धकार की भाँति शत्रुओं की सम्पूर्ण सेना का संहार कर दिया गया॥६९॥

भूयः परशुमादाय कार्तवीर्य सुतानसौ।
जघानाथ दिगीशेभ्यो वीरो बलिमिवाहरन्।।७०।।

**कृपा टीका**—फिर फरसा लेकर वीर परशुराम जी ने दिक्पालों को बलि अर्पित करते हुए से सहस्रार्जुन के पुत्रों का वध कर दिया॥७०॥

कामधेनुं पितुश्चापि शिरः परं भास्वरम्।
आनीय रेणुकापादपङ्कजं शुभमस्पृशत्।।७१।।

**कृपा टीका**—(इसके अनन्तर श्री परशुराम जी ने) कामधेनु तथा पिता के तेजस्वी सिर को लाकर माता रेणुका जी के चरणकमल का स्पर्श किया॥७१॥

कबन्धेन च सन्धाय जमदग्निशिरः प्रभुः।
ईषदैश्वर्यमाहात्म्याज्जीवयामास लीलया।।७२।।

**कृपा टीका**—परम समर्थ परशुराम जी ने कवंध से पिताश्री का शिर जोड़कर थोड़े से ऐश्वर्य के प्रयोग से उन्हें खेल खेल में जिला दिया॥७२॥

लब्धसंज्ञः स उत्थाय मुनिः सुप्तइवोत्थितः।
रामानुभावमाकर्ण्य साश्चर्यस्तमुदैक्षत।।७३।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—सोकर उठे हुए से जमदग्नि जी की संज्ञा प्राप्त कर उठकर जब परशुराम जी का पराक्रम सुना तो आश्चर्यपूर्वक उन्हें निहारने लगे॥७३॥

**रेणुकापि महाभागा पतिं प्राप्य शुचिस्मिता।**
**पुत्रं स्वमङ्कमारोप्य नेत्रवारिभिरासिचत्॥७४॥**

**कृपा टीका**—परम तपस्वी रेणुकाजी ने अपने पति को पाकर मन्द मुस्कान से प्रसन्नता व्यक्त की और पुत्र को गोद में लेकर नेत्र के जल से नहला दिया॥७४॥

**पयोदाभ्याञ्च सुस्राव पयः प्रेमपरिप्लुतम्।**
**पाययामास तद्रामं दुग्धं मातृधनं स्मृतम्॥७५॥**

**कृपा टीका**—उनके सुन्दर स्तनों से प्रेमरस पूर्ण दूध चूने लगा, उसे उन्होंने परशुराम जी को पिलाया क्योंकि दूध ही माँ का धन कहा गया है॥७५॥

**रामोऽपि धन्विनां श्रेष्ठः पितरौ प्रणनाम तौ।**
**सर्वमावेदयाञ्चक्रे माहिष्मत्यां यदप्यभूत्॥७६॥**

**कृपा टीका**—धनुर्धरों में श्रेष्ठ परशुराम जी ने माता पिता को प्रणाम किया और माहिष्मती में जो कुछ हुआ वह सब उन्हें सुनाया॥७६॥

**उत्सवश्च महानासीत् तत्रत्यानां वनौकसाम्।**
**आनन्दस्यातिरेकेण तन्नन्दनमिवाभवत्॥७७॥**

**कृपा टीका**—उस समय उस आश्रम में रहने वाले वनवासियों के यहाँ महान उत्सव हुआ। आनन्द के अतिरेक से वह आश्रम नंदनवन जैसा हो गया॥७७॥

**यदा यदापि सस्मार भार्गवो व्यसनं पितुः।**
**तदा तदैव तच्चित्ते क्रोधवह्निर्व्यदीप्यत॥७८॥**

**कृपा टीका**—परशुराम जी जब जब पिताजी के वध का स्मरण करते तब तब उनके चित्त में क्रोधाग्नि स्फुरित हो उठती थी॥७८॥

**तदैवोत्थाय मेधावी गच्छतिस्माविचारयन्।**
**राजन्यांश्च समाक्रम्य पशुमारममीमरत्॥७९॥**

**कृपा टीका**—उसी समय बिना विचार किये ही फरसा हाथ में लिये परशुराम जी दौड़ पड़ते और राजाओं पर आक्रमण करके उन्हें पशुओं की भाँति मार डालते थे॥७९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

राघवान्यादवांश्चैव ब्रह्मण्यान्क्षत्रियर्षभान्।
नावधीत्भगवांस्तत्र स्वावतारं विभावयन्॥८०॥

**कृपा टीका**—ब्राह्मण भक्त रघुवंशी एवं यदुवंशी क्षत्रियों को परशुराम जी ने नहीं मारा क्योंकि उन्हीं कुलों में भगवान को दो अवतार लेने थे॥८०॥

अन्यान्क्षत्रियदायादान् ब्रह्मद्रोहपरायणान्।
सर्वान् जघान भगवान् भूभारमवतारयन्॥८१॥

**कृपा टीका**—पृथ्वी का भार उतारते हुए भगवान् परशुराम जी ने अन्य ब्राह्मणद्रोही क्षत्रियों को मार दिया॥८१॥

भानुसाहस्रभूपानां चक्रे पञ्चसरोवरम्।
कुरुक्षेत्रे स रुधिरैः पित्रे दास्यन्निवाञ्जलिम्॥८२॥

**कृपा टीका**—पिताश्री को तिलाञ्जलि देने के लिए परशुराम जी ने बारह हजार राजाओं को मारकर उनके रक्त से कुरुक्षेत्र में पाँच तालाब बनाये॥८२॥

एकविंशतिकृत्वो हि रामः प्रहरताम्वरः।
निश्छत्रामकरोद् भूमिं क्रोधो वै दारुणः सताम्॥८३॥

**कृपा टीका**—इस प्रकार श्रेष्ठ प्रहारकर्ता परशुराम जी ने पृथ्वी को इक्कीस बार क्षत्रियों से विहीन किया क्योंकि सज्जनों का क्रोध भी भयंकर होता है॥८३॥

वारं वारं द्विजेभ्योऽदान्महनीयो महीमिमाम्।
ईजे बहुविधैर्यज्ञैर्यज्ञो विष्णुः स्वयं श्रुतः॥८४॥

**कृपा टीका**—बार बार परशुराम जी ने पृथ्वी को ब्राह्मणों को दान किया और बहुत प्रकार के यज्ञ किये क्योंकि श्रुतियों ने विष्णु को ही यज्ञ कहा है॥८४॥

एकविंशे महायुद्धे क्षत्रियाणां क्षये कृते।
कश्यपो भगवांस्तत्र प्रजासर्गमचिन्तयत्॥८५॥

**कृपा टीका**—इक्कीसवें युद्ध में क्षत्रियों का विनाश करने पर भगवान कश्यप को प्रजा की सृष्टि की चिन्ता होने लगी॥८५॥

जग्राह दानं मारीचोलोकानां हितकाम्यया।
परोपकारसारा हि सन्तश्चारित्र्यवत्सलाः॥८६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—लोकों के हित की इच्छा से कश्यप जी ने परशुराम जी का दान लिया क्योंकि चरित्रवान संतगण परोपकार को ही अपना सारसर्वस्व मानते हैं॥८६॥

**आहैनं भार्गवं धीरो रोषकाषायलोचनम्।**
**अलं रामाधिकं क्रुद्ध्वा क्रोधः पापस्य कारणम्॥८७॥**

**कृपा टीका**—क्रोध से लाल नेत्रवाले भार्गव से कश्यप जी ने कहा हे परशुराम जी! अधिक क्रोध करना व्यर्थ है क्योंकि क्रोध पाप का कारण है॥८७॥

**न हन्तव्यास्त्वया तात अधुना क्षत्रियर्षभाः।**
**कार्तवीर्ये हते वंशे रुट् ते बीजमिवोसरे॥८८॥**

**कृपा टीका**—अब अधिक क्षत्रियों का संहार मत करो। सहस्रार्जुन के वंश नष्ट हो जाने पर ऊसर में बोये हुए बीज की भाँति तुम्हारा क्रोध निरर्थक है॥८८॥

**न वस्तव्यं त्वया नक्तं संप्रत्येषा मही मम।**
**महेन्द्रं गच्छ कल्याण महेन्द्र सम वीर्यवान्॥८९॥**

**कृपा टीका**—हे इन्द्र के समान पराक्रमी कल्याणकारी परशुराम, अब इस पृथ्वी पर तुम्हें नहीं रहना चाहिए क्योंकि इस समय यह पृथ्वी मेरी है। तुम महेन्द्राचल पर चले जाओ॥८९॥

**पिता ते जीवितो भद्र कृतः सप्तर्षिमण्डले।**
**द्वितीयोऽप्यद्वितीयस्ते गाथा नृन् गापयिष्यति॥९०॥**

**कृपा टीका**—हे भद्र, तुम्हारे पिता जीवित होकर सप्तर्षि मण्डल में द्वितीय स्थान प्राप्त करके तुम्हारी अद्वितीय गाथाओं को मनुष्यों से गवाते रहेंगे॥९०॥

**इत्युक्त्वा कश्यपो विप्रं गतो यादृक्षिको मुनिः।**
**आपृच्छ पितरौ रामो महेन्द्रं शैलमागमत्॥९१॥**

**कृपा टीका**—इस प्रकार परशुराम जी को आदेश देकर कश्यप जी अपनी सहजगति से चले गये। परशुराम जी भी माता पिता को प्रणाम करके महेन्द्र पर्वत पर आ गये॥९१॥ यहाँ तक अनुष्टुप् छन्द है।

**सुरेन्द्र योगीन्द्रमुनीन्द्रवन्दितो द्विजार्णवेन्दुर्भृगुवंशवर्धनः।**
**चकार लोकातिशयं गुणातिगश्चरित्रमीड्यं पितृभक्तमौलिपः॥९२॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—पिता के भक्तों में मुकुटमणि ब्राह्मणवंशरूप क्षीरसागर के चन्द्रमा भृगुवंश की कीर्ति बढ़ानेवाले देवताओं, योगियों एवं मुनियों से वंदित अलौकिक गुणों वाले परशुरामजी ने लोकातिशय चरित्र किये॥९२॥ वंशस्थ।

**एवं विधाय कदनं च कदात्मकानां**
**निश्क्षत्रियां कुमकरोत्स त्रिसप्तकृत्वः।**
**यज्ञं विधाय प्रणिदाय च कश्यपाय**
**भूमिं महेन्द्रशिखरे न्यवसत् प्रशान्तः॥९३॥**

**कृपा टीका**—इस प्रकार दुष्ट राजाओं का वध करके परशुराम जी ने इक्कीस बार पृथ्वी को क्षत्रियों से विहीन किया॥ यज्ञ करके कश्यप को समग्र पृथ्वी का दान करके प्रशान्त चित्त से महेन्द्र पर्वत पर विराज गये॥९३॥ वसन्ततिलका।

**पञ्चोदधीनिव विधाय च पञ्चकुण्डा**
**नेतानि भूपरुधिरेण च पूरयित्वा।**
**दीर्घायुषं स्वपितरं परिजीव्य वीरो**
**योगीन्द्रगीतचरितो विचरत्यभिज्ञः॥९४॥**

**कृपा टीका**—इस प्रकार कुरुक्षेत्र में पाँच सागरों जैसे पाँच कुंडों का निर्माण करके उन्हें राजाओं के रक्त से भरकर पिताश्री को जीवन एवं दीर्घायु देकर योगीन्द्रों द्वारा गाये जाते हुए चरित्रवाले सर्वज्ञ परशुराम जी आज भी विचरण कर रहे हैं॥९४॥ वसन्ततिलका।

**बीभत्सस्य च रौद्रवीररसयोः कारुण्यहास्यात्मनो**
**रामेणात्र भयानकाद्भुतजुषोः सप्तार्णवाः कल्पिताः।**
**एकैकत्ररसाम्बुधौ परशुधृक् त्रिस्त्रिर्भटान्मज्जयन्**
**निश्छत्रामकरोन्महीं भृगुपतिः सप्तत्रिरुच्चैरुषा॥९५॥**

**कृपा टीका**—वीभत्स रस, वीर रस, रौद्र दस, करुण रस, हास्य रस, भयानक रस और अद्भुत रस के एक एक करके परशुराम जी द्वारा सात महासागर बनाये गये। एक एक सागर में तीन तीन वीरों को डुबाकर क्रोधपूर्वक परशुराम जी ने पृथ्वी को इक्कीस बार क्षत्रियों से विहीन किया॥९५॥ शार्दूलविक्रीड़ित।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निहत्य राजन्यगणान्समेधितान्
द्विजद्रुहो भार्गववंशवर्धनः।
महेन्द्रशैले सुरसिद्धसेविते
समुद्रवेलामनुशान्तिराप्यत।।९६।।

**कृपा टीका**—इस प्रकार ब्राह्मण द्रोही उदण्ड राजाओं को युद्ध में मार कर योगीन्द्र मुनीन्द्रों से सेवित माहेन्द्र पर्वत के शिखर पर समुद्र की बेला का अनुसरण करने वाली शान्ति को प्राप्त किया अर्थात् मर्यादा में रहने लगे।।९६।। वंशस्थ।

ततः प्रभृत्येव निरस्तविग्रहो
गुणग्रहः शाश्वतधर्मसंग्रहः।
कदापि नासावतिलंघितुं मुने-
र्निदेशमैक्षत् निशिनेव सात्वतः।।९७।।

**कृपा टीका**—उसी समय से कलह छोड़कर गुणों को गहण करते हुये परशुराम जी सनातन धर्म के सिद्धान्तों का संग्रह करने लगे। उन्होंने कभी भी रात्रि में कश्यप के निर्देश का उसी प्रकार उल्लंघन नहीं किया जैसे वैष्णवजन अपना सिद्धान्त नहीं छोड़ते।।९७।। वंशस्थ।

निर्मथ्यासुरनृपतीन्रणाङ्गणेऽसौ
निश्छत्रांभुवमकरोत् त्रिसप्तकृत्वः।
दत्त्वा तां रविगुरवे प्रशान्तरोषो
रामोऽभूत्कृतनिलयो महेन्द्रशैले।।९८।।

**कृपा टीका**—समरांगण में असुर राजाओं को मारकर पृथ्वी को इक्कीस बार क्षत्रियहीन करके सूर्य के पिता कश्यप को पृथ्वी देकर परशुराम जी ने महेन्द्र पर्वत अपनी कुटी बना ली।।९८।। प्रहर्षिणी।

पितुर्वाक्यं रक्षन्स्वहतजननीजीवितकरः
सकुर्वन्निश्छत्रां चरितमथसप्तत्रिरवनिम्।
सुयज्वा पुण्यौघैर्मृतमपि समाजीव्य पितरम्
वितन्वन्वैचित्र्यं जयति कुशलः कोऽपि कृतिमान्।।९९।।

**कृपा टीका**—पिता के वाक्य की रक्षा करते हुए अपने द्वारा मारी गई माँ को

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जीवित करके पृथ्वी को इक्कीस बार क्षत्रियहीन किया एवं मृत पिता को जीवित करके सुन्दर यज्ञ करते हुए अपने पुण्यसमूहों से विचित्र चरित्र का विचार करते हुए कोई अपूर्व कृती आज भी विजयी हो रहा है॥९९॥ शिखरिणी।

**उदस्यन्नौदास्यं दुरितमथ दास्यं क्षितिभुजाम्**
**निरस्यन्नैराश्यं सुजनमुखलास्यं विलसयन्।**
**समस्यन्दुष्टास्यं प्रणतजनतास्यं विकसयन्**
**निजारामो रामो विलसति महेन्द्रे शिखरिणि॥१००॥**

**कृपा टीका**—उदासी, दरिद्रता एवं राजाओं के दास्य को नष्ट करते हुए, निराशा को दूर भगाते हुए, सज्जनों की मुख प्रसन्नता को सुशोभित करते हुए, दुष्टों के मुख को संकुचित करते हुए, भक्तों के मुख को विकसित करते हुए, अपने भक्तों को आनन्द देने वाले श्री परशुराम जी महेन्द्र पर्वत पर सुशोभित हो रहे हैं। यहाँ शिखरिणी शब्द का प्रयोग करके मुद्रालंकार से शिखरिणी वृत्त का संकेत किया गया॥१००॥ शिखरिणी।

**इत्थं शुभे भार्गवराघवीये भव्ये महाकाव्य उदारवृत्ते।**
**सर्गोऽष्टमस्तात् कवि रामभद्राचार्यप्रणीते सततं श्रियै नः॥१०१॥**

**कृपा टीका**—इस प्रकार कल्याणकारी शुभ सुन्दर छन्दों से समलंकृत महाकवि रामभद्राचार्य द्वारा प्रणीत भार्गवराघवीय नामक महाकाव्य में प्रस्तुत आठवाँ सर्ग हमारी श्री के लिए निरंतर हो॥१०१॥ उपजाति।

**इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामि रामभद्राचार्यप्रणीते श्रीभार्गवराघवीये महाकाव्ये 'न्यस्तदण्डो' नामाष्टमः सर्गः॥**

**॥श्रीराघवः शन्तनोतु॥**

इस प्रकार धर्मचक्रवर्ती महामहोपाध्याय श्रीचित्रकूट तुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामी रामभद्राचार्य द्वारा प्रणीत श्रीभार्गवराघवीय नामक महाकाव्य में 'न्यस्तदण्ड' नाम का अष्टम सर्ग पूर्ण हुआ।

॥श्रीराघवः शन्तनोतु॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥श्रीमद्राघवो विजयते॥

# अथ नवमः सर्गः

**अथ विप्रसपत्ननरेन्द्रतनूस्रुतशोणितबाणतडागकरः।**
**विबभौ भृगुरामरविस्तरुणस्ततत्तुत्तमतिग्मतुषारहरः।।१।।**

**कृपा टीका**—इसके अनंतर ब्राह्मणों के शत्रुराजाओं के शरीर से निकले हुए रक्त से कुरुक्षेत्र में पाँच तालाबों की रचना करनेवाले तथा पिताश्री के हत्यारे हैहयराज वंशरूप गाढ़ अंधकार युक्त तुषार को समाप्त करनेवाले परशुराम जी मध्याह्न के सूर्य की भाँति सुशोभित हुए॥१॥ यहाँ से श्लोक ५० तक त्रोटक छन्द है।

**खरधारपरश्वधसागरभूरणसागरमग्ननृपप्लवकः।**
**न कदाप्यमृषत्करुणातरुणींव्रतभङ्गभियेवततारिकुले।।२।।**

**कृपा टीका**—अपनी तीक्ष्णधारा वाले परशुरूप सगर तनय से उत्पन्न युद्ध महासागर में राजवंश रूप नौकाओं को डुबा देने वाले परशुराम जी ने पिताश्री के शत्रु के विषय में मानो ब्रह्मचर्य व्रत भंग के भय से कभी करुणारूप युवती का स्पर्श ही नहीं किया॥२॥

**अभिषिच्य पितृघ्ननृपापसदव्रणतो द्रुतरक्तपयोभिरलम्।**
**स्वमथो क्रतुभिर्गतभीर्बहुभिर्भगवान्समयष्टविसृष्टमदः।।३।।**

**कृपा टीका**—पश्चात् पिता श्री का वध करने वाले दुष्ट राजाओं के शरीर के घावों से छलकते हुए रक्त रूप तल से पृथ्वी का अभिषेक करके बहुवेत्ता परशुराम जी ने मदरहित होकर बहुत से यज्ञों से यज्ञ किया॥३॥

**स समर्प्य मरीचिसुताय महीं महितोऽमहितोममहामहिमा।**
**विरराज विराडिव राजवध प्रशमोरूरुजा निजलीनजगत्।।४।।**

**कृपा टीका**—वे परशुराम जी मरीचि पुत्र कश्यप को पृथ्वी को समर्पित करके स्वर्गीय जनों से पूजित हुए भगवान शंकर से महा महिमा प्राप्त कर राजाओं के वध से संसार के भयंकर भार रोग को शान्त करने के कारण अपने में जगत को लीन किए हुए विराट भगवान के समान सुशोभित हुए।४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**हतभानुसहस्रनृपेन्द्रवपुस्स्रुतशोणितनिर्मितबाणसराः।**
**तदपः किल नाकसदांयजने सममन्यत पूर्वजतोषकरीः।।५।।**

**कृपा टीका**—नाक सवाम अर्थात देवताओं की यज्ञभूमि कुरूक्षेत्र में अपने ही द्वारा मारे हुए बारह हजार राजाओं के शरीर से प्रवाहित रक्त से पाँच सरोवरों का निर्माण करने वाले परशुरामजी ने उन्हीं के जल से अपने पूर्वजो के संतोष का कारण माना अर्थात् राजाओं के रक्तजल से ही पूर्वजों का तर्पण किया।।५।।

**हुतवीर्यविभावसुविप्ररिपुर्विबुधार्चितपङ्कजपादयुगः।**
**स सरस्सुकृतानुसवाभिषवः सममन्यत पूर्णततापचितिम्।।६।।**

**कृपा टीका**—ब्राह्मणों देवताओं द्वारा जिनके युगल चरणकमलों की पूजा की गयी है ऐसे परशुराम जी ने अपने पराक्रमरूप अग्नि में ब्राह्मणों के शत्रुओं का हवन करके कुरुक्षेत्र में अपने ही द्वारा निर्मित पाँचों राजाओं के रक्ततालावों में प्रातः, मध्याह्न, सायंकालीन स्नान तर्पण करके अपने को पिता जी का पूर्णपूजक मान लिया।।६।।

**परितर्प्य तदद्भिरसौ स्वपितॄन् पितरं परिजीव्य पराभिहतम्।**
**प्रविधाय मुनिस्वनुमातुलकं कमितः कमितः शमितारिरुजाम्।।७।।**

**कृपा टीका**—इन्हीं रक्तसरोवरों के जल से अपने पितरों का तर्पण करके शत्रुओं द्वारा मारे हुए पिता श्री जमदग्नि को जीवित करके तथा उन्हें सप्तर्षि मंडल में उन्ही जमदग्नि के मामा विश्वामित्र के पश्चात् द्वितीय स्थान प्राप्ति के सुख से युक्त करके जिन ब्राह्मणों के शुद्ध रोगों का नाश किया था उनकी शुभकामनाओं के पात्र बनकर और उनके शिरोभाग पर विराजमान होकर परशुराम जी अपार सुख को प्राप्त हुए।

**इति पुण्यपयोजपरागरसैरसिताखिलविद्वदलिप्रकरः।**
**विबभार रुचं रुचिराननभाजितकोटिविधुर्विधुशेखरकः।।८।।**

**कृपा टीका**—इस प्रकार अपने पुण्यरूप कमल के परागरस से विद्वत्समूहरूप भ्रमरों को तृप्त करके भगवान शंकर को सुख देने वाले तथा अपनी मुख कान्ति से करोड़ों चन्द्रों को जीतने वाले परशुरामजी ने एक अलौकिक छटा धारण की।।८।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

स कदाचिदुदग्रतपास्तरुणस्तपसाजिततिग्मतपस्तपनः।
तप आतपतप्तकरीवसरोहरशैलमुपास्तनिरस्तपरः॥९॥

**कृपा टीका**—किसी समय अतुलनीय तपस्या वाले तरुण तपस्वी अपनी तपस्या से तीक्ष्ण ताप से सूर्यनारायण को भी जीत लेने वाले शत्रुओं को निरस्त किये हुए परशुराम जी ने ग्रीष्म के ताप से तप्त हाथी जिस प्रकार शीतलता के लिए तालाब की ओर दौड़ता है उसी प्रकार भगवान शंकर के कैलाश पर्वत की उपासना की॥९॥

दृढभक्तिसमाधिनिरुद्धमनो नयनो नयनोदितविश्वसृजम्।
स ददर्श विवेकदृशं त्रिदिशं दृशिदृक्सदृशं गिरिशं सवृषम्॥१०॥

**कृपा टीका**—दृढ भक्ति की समाधि से मन एवं नेत्रों को बाह्य विषयों से रोककर अपनी नीति से ब्रह्मा जी को भी प्रेरणा देनेवाले विवेक नेत्रवाले त्रिनयन नेत्रों के भी द्रष्टा सूर्य के समान प्रकाशमान नन्दी बैल के साथ भगवान शंकर के दर्शन किये॥१०॥

घनसारसुधारतुषारतनुं रविचन्द्रहुताशदृशं सुमनुम्।
बुधवीथिविराजितपिङ्गजटं प्रकटं विकटं श्रितसर्पकटम्॥११॥

**कृपा टीका**—कपूर चन्द्रमा और बर्फ के समान श्वेत शरीरवाले सूर्य चन्द्र तथा अग्नि नेत्रवाले सुन्दर राममंत्र का जप करने वाले गंगा जी की तरंग से सुशोभित पीली जटा वाले प्रत्यक्ष दर्शन देते हुए विकट वेशवाले तथा श्रवण में सर्प धारण करने वाले ऐसे शिव जी को परशुराम जी ने देखा॥११॥

वदनद्युतिनिन्दितचन्द्रमसं स्वमहोहतपादनमत्तमसम्।
श्रितरामसुनामवृहत्तपसं पुलकावलिलाभलसद्वपुषम्॥१२॥

**कृपा टीका**—अपने मुख की कान्ति से चन्द्रमा की भी निन्दा करने वाले तथ अपने तेज से अपने चरणों में नमित होते हुए महापुरुषों के अंधकार को दूर करने वाले रामनाम का वृहद् तप करने वाले और पुलकावलि से सुशोभित दिव्य शरीर वाले शिवजी का दर्शन किया।

भवशूलविमोचनशूलकरं शरचापडमर्वयदण्डधरम्।
भुजगेन्द्रविभूषणमार्तिहरं जितदूषणदूषणवैरिवरम्॥१३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—संसार के शूल हरने वाले त्रिशूल को हाथ में लिए हुए धनुष बाण डमरू तथा दंड धारण करनेवाले सर्पभूषण तथा आर्तआर्ति हरने वाले एवं दूषण के शत्रु श्रीरामजी से वरदान प्राप्त करने वाले शिवजी को परशुराम जी ने देखा॥१३॥

**करुणावरुणालयमात्तविषं नुतभुसुरराजतुरीयविशम्।**
**भवभूतिविभावितसर्वदिशं रघुवीरपदाब्जलसन्निमिषम्॥१४॥**

**कृपा टीका**—करुणा के महासागर विषभक्षी तथा ब्राह्मण, क्षत्रिय वैश्य तथा शूद्र इन चारों से वंदित एवं अपनी कल्याणमयी विभूति से सम्पूर्ण दिशाओं का पालन करने वाले तथा भगवान राम के श्रीचरणों में अपने पलक पाँवड़े बिछाये हुए ऐसे शिवजी के परशुरामजी ने दर्शन किये॥१४॥

**निटिलाक्षविदाहितविश्वरुजं भववारिधिमन्दरपंक्तिभुजम्।**
**वरदं विशदं विमलं विरजं गिरजामुखचन्द्रचकोरमजम्॥१५॥**

**कृपा टीका**—अपने भाल के नेत्र से संसार के रोगरूप कामदेव को जलाने वाले, संसार सागर के मन्दराचल के समान दस भुजाओं वाले, वरदान वाले, श्वेतवर्णवाले, निर्मल रजोगुण रहित पार्वती जी के मुखचन्द्र के चकोर अजन्मा भगवान शिव को परशुरामजी ने निहारा॥१५॥

**तमथप्रथमप्रमितेन दृशावशितुं द्विजवंशकृशानुकृषा।**
**शिवमीहितमीहितवीर्यवृषा वृषकेतुपदाब्जपरागतृषा॥१६॥**

**कृपा टीका**—इसके अनंतर ब्राह्मणवंश को अग्नि के समान कष्ट देने वाले राजवंश के शत्रु अभीप्सित पराक्रम का वर्षण करने वाले भगवान शंकर के चरण कमल पराग के पिपासु परशुरामजी के द्वारा प्रथम प्रमित (अर्थात् प्रत्यक्ष प्रमाण के द्वारा) अपने चर्म चक्षुओं से भगवान शंकर का साक्षात्कार करने की चेष्टा की गई॥१६॥

**भवभारहरेण हरेण रुषा भवलब्धकठोरकुठारजुषा।**
**क्षपितं हि मया कुपवीर्यमुषा कुनृपालकुलं द्विजवंशपुषा॥१७॥**

**कृपा टीका**—परशुराम जी ने सोचा—अरे पृथ्वी का भार दूर करने के लिए शंकर भगवान द्वारा प्रेरित हुए एवम् उन्हीं के द्वारा दिया हुआ कठोर कुठार

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लेकर ब्राह्मणों के वंश का पोषण करते हुए दुष्ट राजाओं के पराक्रम का हरण करके मेरे द्वारा कुत्सित राजकुल का क्रोधपूर्वक विनाश कर दिया गया॥१७॥

त्रिजगच्छ्रुतिशष्कुलिकानलिनीकरिशावरवे भवभीतिभवे।
स्मृतिवृक्णकुभृद्गृहगर्भशिशौसुमनो रमते परुषे परशौ॥१८॥

**कृपा टीका**—भवभय के जनक तथा त्रिलोकी की श्रवणशष्कुलीरूप कमदिनियों को नष्ट करने हेतु जिसकी ध्वनि हाथी के बच्चे के समान है जिसके स्मरण मात्र से राज पत्नियों के गर्भस्थ बालक नष्ट हो जाते है ऐसे कठोर फरसे में मेरा मन रम रहा है॥१८॥

मुनिभिर्गुणितत्रिरसक्षितिपक्षतजार्णवमज्जनलब्धरुचिम्।
तुलयेयमलं धनुषा नु कथं शकलत्परशोः परशुं वितथम्॥१९॥

**कृपा टीका**—अरे इक्कीस बार दुष्ट राजाओं के रक्तसागर में स्नान से चमकते हुए अपने इस फरसे को खंडित परशुवाले शिवजी के घनुष से मैं व्यर्थ ही क्यों तुलना करूँ क्योंकि शिवजी का फरसा खंडित और मेरा अखंडित, शिवजी का धनुष निष्क्रिय है तथा मेरा फरसा सक्रिय है॥१९॥

कृतमज्जननीजनकापचितिं कृतिनं नृपनाशकठोरगतिम्।
तमहं मृडपादपयोरुहयोमृडयेयमुदात्तगुणा हि वुधाः॥२०॥

**कृपा टीका**—मेरे माता-पिता की पूजा करने वाले एवम् राजाओं के नाश से कठोर प्रकृति वाले ऐसे अपने सफल इस फरसे को भगवान शंकर के चरण कमलों में सुखी कर लूँ क्योंकि बुध जन उदात्त गुणों वाले होते हैं अर्थात् गुणों को ही श्रेष्ठ मानते हैं॥२०॥

चलचन्द्ररुचेशिशुचन्द्ररुचिं व्रज भो परशो शकलत्परशुम्।
दयितोऽसि च मे सममापिगुरुस्त्वमसत्पुरहा स हतत्रिपुरः॥२१॥

**कृपा टीका**—हे मेरे कुठार तुम स्वयं चन्द्रमा के समान कान्ति वाले इसलिए बालचन्द्र शेखर के पास चलो। तुम पूर्ण हो और शिवजी का फरसा खंडित है फिर भी उनकी शरण में चलो। तुम मुझे बहुत प्रिय हो। शिवजी मेरे भी गुरुदेव हैं तुम दुष्ट राजाओं के नगर नष्ट करते हो तो शंकर भगवान स्वयं त्रिपुरारि हैं॥२१॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**गिरिराजसुताकुचकुंकुमभारुणितारुणसूतभवोपमितम्।**
**गिरिशांघ्रियुगं नुतसूनुयुगं स्पृशमुक्तकठोरगुणोऽनुयुगम्॥२२॥**

**कृपा टीका**—हे कुठार पार्वती जी के वक्ष पर लगे हुए कुंकुम की कान्ति से अरुण तथा अरुण सारथी सूर्यनारायण के द्वारा विकसित होने वाले कमल के समान सुन्दर, जहाँ कार्तिकेय एवं गणपति ये दोनों पुत्र सतत प्रणाम कर रहे हैं ऐसे भगवान शंकर के युगल चरणों को, कठोरता का गुण छोड़कर स्पर्श करो॥२२॥

**न तुदेः खरधारकुठारकुभृत्क्षतजस्वदनोद्धतशर्वपदम्।**
**गिरिजाकरचारुसरोजसखं प्रणमद्द्विजनाकिसखं सुनखम्॥२३॥**

**कृपा टीका**—हे कुठार तुम्हारी धार बड़ी तीखी है, तुम कठोर हो, तुम दुष्ट राजाओं का खून पीने के कारण बहुत उदण्ड हो चुके हो इसलिए देखना, सुन्दर नखों वाले ब्राह्मण और देवताओं द्वारा वंदित पार्वती जी के करकमलों के मित्र ऐसे भगवान शंकर के श्रीचरणों को कभी भी कष्ट मत देना॥२३॥

**अवलोक्य भवन्तमुदारगुणं कृतकार्यमनार्यवधव्यसनम्।**
**भगवान्नयनैर्दशपञ्चमितैः सुखयिष्यति ह्यगुणा हि बुधाः॥२४॥**

**कृपा टीका**—हे मेरे फरसे, उदार गुणोंवाले अनार्यों के वध के व्यसनी ऐसे अपने कार्य में सफल तुझे देखकर भगवान शंकर तुम्हें पन्द्रह नयनों से निहार कर निहाल कर देंगे। क्योंकि पंडित लोग गुणों पर ही पक्षपात करते हैं॥२४॥

**त्वमथो भवपादपयोरुहयोर्भ्रमरीभवभावितभव्यबलः।**
**परशो परुषत्वमपास्य मुहुर्लघुता हि गुरौ गुरुताजननी॥२५॥**

**कृपा टीका**—हे मेरे फरसे भगवान शंकर द्वारा जब तुम्हारे श्रेष्ठ बल का सम्मान कर दिया जायेगा तब तुम थोड़ी देर के लिए अपनी स्वाभविक कठोरता छोड़कर भगवान शंकर के श्री चरणकमलों में भ्रमर वन जाना। क्योंकि गुरुजनों के चरणों में लघुता समस्त गौरवों की माता बन जाती है अर्थात् जो गुरुजनों के समक्ष नम्र होता है वह सर्वत्र बड़े से बड़ा होता है॥२५॥

**इति सानुनयं प्रियशस्त्रमयं निगदन्निगदन् गदिनोंऽशवरः।**
**परुषं परितो निजदृष्टिमयीर्विसृजन् स्रजउत्कउमेशपदे॥२६॥**

**कृपा टीका**—इस प्रकार भगवान शंकर के श्री चरणों के दर्शनों के लिए उत्सुक

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भगवान नारायण श्रेष्ठ अंशावतार परशुरामजी अपने शस्त्र कुठार के प्रति अनुनय पूर्ण वाक्य कहते हुए एवम् अपनी दृष्टिमयी मालायें फरसे के चारों ओर विखेरते हुए कैलास आये॥२६॥

**नरकिन्नरचारणसिद्धगणैः परिगीतनृपाधमजैत्रयशाः।**
**पथिपुष्पचयैर्नितरां निचितः प्रश्रितः स ययौ गिरिजेशगिरिम्॥२७॥**

**कृपा टीका**—मनुष्यों, किन्नरों, व चारणों, तथा सिद्धगणों द्वारा जिन परशुराम का अधम राजाओं पर विजय प्राप्तरूप यश गाया गया था तथा मार्ग में जो पुष्पों के समूह से गिर रहे थे ऐसे विनम्र भृगुवर्य भगवान शंकर के पर्वत कैलास पर पधारे॥२७॥

**मुनिभिर्मृदुमानसकंजकरैः क्रियमाणमहेशमहासुमहम्।**
**अलकाललनालकमल्लिकया विहिताद्रिसुताचरणापचितिम्॥२८॥**

**कृपा टीका**—जिस कैलास पर महर्षियों द्वारा अपने कोमल मनकमलों के समूहों से भगवान शंकर का पूजन महोत्सव किया जा रहा था तथा जहाँ अलकापुरी की यक्षिणियों द्वारा अपने शिर में लगी हुई चमेली के गुच्छों से भगवती पार्वती की पूजी की गयी थी॥२८॥

**सह शारदनारदतुम्बुरुणा स्वरमण्डलमञ्जुलमूर्च्छनया।**
**रणितं क्वणितं क्वचिदार्द्रधिया कलनूपुरनाकनटीभिरलम्॥२९॥**

**कृपा टीका**—जो सरस्वती नारद एवं तुम्बुरू के द्वारा बजाई हुई वीणाओं के कोमल स्वर मंडल की मूर्छमाओं से झंकृत हो रहा था तथा जो स्वर्गीय नृत्यांगनाओं के नूपुरों से शब्दायमान था॥२९॥

**क्वचिदुन्मदराजमरालवरैर्वरटासहितै रटितंनटितम्।**
**क्वचिदग्निजवाहसखैः शिखिभिः श्रुतदुन्दुभिनादघनानुमितैः॥३०॥**

**कृपा टीका**—कहीं हंसिनियों के सहित मतवाले राजहंस भम्रण कर रहे थे, तो कहीं नगाड़ों के स्वर मेघ गर्जन का अनुमान करके अग्नि से जन्मे कार्तिकेय के वाहन मयूर के मित्र श्रेष्ठ पर्वतीय मयूर नाच रहे थे॥३०॥

**मुनिमानसवबालमरालवरो मुनिमानसमज्जनपानकरः।**
**मुनिमानसपङ्कजभृङ्गमयं मुनिमानसमन्दिररङ्गमियात्॥३१॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—मुनिजनों के मनमानससरोवर के श्रेष्ठ हंस परशुराम जी मुनिजनों से सेवित मानससरोवर में स्नान और जलपान करके मुनियों के मन कमल भ्रमरों से व्याप्त तथा मुनियों के मानसमंदिर रंगभूमि कैलास पर्वत पर पहुँचे॥३१॥

**स ददर्श तदर्षभमम्बरिणामुदरम्भरिणां दुरवापपदम्।**
**विपदां विपदं श्रितशर्वपदं हृतविघ्नपदं धृतशर्मपदम्॥३२॥**

**कृपा टीका**—उस समय परशुराम जी ने देवताओं में श्रेष्ठ तथा उदर पोषकों के लिए अत्यन्त दुर्लभ चरणों वाले विपत्तियों के विपत्ति स्थान विघ्नों को नष्ट करने वाले परम शान्तिमय भगवान शंकर के श्रीचरणों के सेवक गणेश जी के दर्शन किये॥३२॥

**अरुणाचलचारुशरीररुचं हृतपादपयोरुहदासशुचम्।**
**निजसेवकशस्यसुवारिमुचं शरणागतसंकटलोकलुचम्॥३३॥**

**कृपा टीका**—अरुणाचल पर्वत के समान शरीर की कान्तिवाले अपने चरणकम के सेवकों की चिन्ता दूर करने वाले अपने सेवकरूप सुन्दर फसल के लिए साक्षात् मेघ तथा शरणागतों के संकटसमूह के नष्ट करनेवाले गणेश जी को परशुराम जी ने निहारा॥३३॥

**चिदलौकिकसिन्धुरराड्वदनं भवविघ्नवरूथकलाकदनम्।**
**मृदुमंगलमोदमहासदनं शशिदीधितिनिन्दकदृग्रदनम्॥३४॥**

**कृपा टीका**—चिन्मय एवम् लोकोत्तर हाथी के समान मुखवाले संसार के विघ्न समूहों की कलाओं को नष्ट करनेवाले मधुर मंगल एवम् प्रसन्नता के भवनस्वरूप तथा चन्द्रमा की किरणों के निंदक चमकीले दो दातों वाले गणपति को परशुराम जी ने देखा॥३४॥

**हृतवंकिमवंकिमतुण्डधरं भवखेदविभंजनवेदकरम्।**
**गजकर्णसुकर्णितभौमिवरं सततं हृदिभावितगौरिहरम्॥३५॥**

**कृपा टीका**—संसार की कुटिलता नष्ट करने वाली टेढ़ी सूंड को धारण किये हुए जगत के खेदनाशक चार भुजाओं वाले हाथी के समान कानवाले तथा भूमिपुत्री सीता जी के पति भगवान श्रीराम के गुणों के सुन्दर श्रोता एवं अपने हृदयकमल

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

में पार्वती एवम् भगवान शिव की भावना करने वाले गणपति के परशुराम जी ने दर्शन किये॥३५॥

**कटदानसुगंधबिलुब्धसुरोषवनभ्रमरं भ्रमभीतिहरम्।**
**करतोऽकरतो रिपुवारिभुवां हृतविघ्नभरं हरहारकरम्॥३६॥**

**कृपा टीका**—अपने गंडस्थल से चूती हुई मदधारा की सुगंधि से नंदनवन के भ्रमरों को लुब्ध करने वाले शत्रुरूप कमलों के लिए दुखदायी ऐसी अपनी सूँड से विघ्नसमूह को हरने वाले भगवान शंकर तथा शिवपुत्र कार्तिकेय जी को भी सुख देने वाले गणेश जी को भृगुनंदन ने देखा॥३६॥

**सुमुखं धृतमोदकमञ्जुमुखं सुसुखं रघुनाथकथैकसुखम्।**
**सुमखं हृतविघ्नकबाणमखं सुसखं मतिमंजुलसिद्धिसखम्॥३७॥**

**कृपा टीका**—सुन्दर मुखवाले एवम् अपने श्रीमुख में अलौकिक लड्डू लिए हुए भगवत्सुखसुखी तथा श्रीराम की कथा में सुख अनुभूति करने वाले पञ्च यज्ञनिष्ठ एवम् राम नाम यज्ञ करने वाले सबके मित्र तथा बुद्धि एवम् सिद्धि सरीखी पत्नियों के विश्वासपात्र गणेश जी का परशुराम जी ने साक्षात्कार किया॥३७॥

**निटिलाम्बकवल्गितविप्रपतिं खरतुण्डविदारितविघ्नततिम्।**
**चरणाम्बुजसेवकसेव्यगतिं सततं श्रितराघवनामरतिम्॥३८॥**

**कृपा टीका**—अपने भाल नेत्र से श्रेष्ठ ब्राह्मणों को प्रसन्न करने वाले तथा कठोर सूँड से विघ्नों की पंक्तियों को तहस नहस करनेवाले एवम् अपने चरणकमल के सेवकों के लिए सेव्य एवम् गन्तव्य स्थान तथा निरन्तर भगवान श्रीराम के नाम में रागात्मक भक्ति रखनेवाले गणपति को परशुराम जी ने देखा॥३८॥

**भगवन्तमनन्तमखण्डमजं धृतपाशमनोहरवेदभुजम्।**
**निजकीर्तिबिनाशितविघ्नरुजं गणनायकमायकमानमृजम्॥३९॥**

**कृपा टीका**—पाश धारण किये हुए, चार सुन्दर भुजाओं वाले, अपनी कीर्ति से भवरोगों को नष्ट करनेवाले, प्रवृद्ध अहंकार को समाप्त करनेवाले ऐसे अविनाशी, अखंड, अजन्मा भगवान गणपति को परशुरामजी ने निहारा॥३९॥

**पुरभित्सुतमाश्रितमाखुरथं वरतुन्दमलङ्कृतवेदपथम्।**
**श्रुतिकीर्तितसन्ततसाधुकथं कृतरामसुनामजपावभृथम्॥४०॥**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—त्रिपुरहंता भगवान शंकर के पुत्र तथा चूहे के रथ पर विराजमान सुन्दर तोंद वाले वैदिक मार्ग के अलंकार तथा वेदों में जिनकी सुन्दर कथा गायी गयी है ऐसे श्रीराम नाम जप यज्ञ का अवभृथ स्नान करनेवाले गणपति को परशुराम जी ने देखा॥४०॥

**जगदुद्भवपालननाशगुणं बहुविघ्नविघातविधौ निपुणम्।**
**मतिसिद्धिकलत्रकलाप्रगुणं परमात्ममयंमगुणंसगुणम्॥४१॥**

**कृपा टीका**—संसार का उद्भव पालन तथा संहार करने वाले, अनेक विघ्नों के नाश की विद्या में निपुण, बुद्धि और सिद्ध सरीखी पत्नियों की कलाओं से अत्यन्त श्रेष्ठ, भगवान शंकर के सम्पूर्ण गुणों सें युक्त, सगुण साकार परमात्मारूप गणपति को परशुराम जी ने देखा॥४१॥

**वरदंवरदन्तविभावरदत्विडुदञ्चितशैलसुतावरदम्।**
**विपदर्णवपोतपदं विपदं शुभदं सुखदं विनताभयदम्॥४२॥**

**कृपा टीका**—वरदान देने वाले तथा श्रेष्ठ दातों के प्रकाशरूप चन्द्रमा की कान्ति से पर्वतराज पुत्री पार्वती को वरदान देने वाले भगवान शंकर को भी सुशोभित करनेवाले विपत्तिरूप महासागर के लिए जिनके चरण जहाज के समान हैं ऐसे विष्णुपद के समीप विराजमान मंगलदाता सुखदायक प्रणतों को अभयदान देनेवाले श्रीगणपति को भृगुवर ने देखा॥४२॥

**अरुणाम्बरमम्बरचारिनुतं दनुजारिपुरारिमुरारिहुतम्।**
**वरदानिसुतं वरदानियुतं वरदानिवृतं वरदानिभृतम्॥४३॥**

**कृपा टीका**—रक्त वस्त्र धारण करने वाले आकाशचारी देवताओं द्वारा नमस्कृत वरदानी शंकर भगवान के पुत्र तथा वरदानी विष्णु से युक्त वरदानी देवताओं से घिरे हुए वरदाता शिवजी द्वारा चालित तथा राक्षसों के शत्रु कार्तिकेय, त्रिपुर के शत्रु शिव एवम् मुरदैत्य के शत्रु भगवान नारायण द्वारा जिन्हें आहुति दी जाती है ऐसे गणपति जी का परशुराम जी ने साक्षात्कार किया॥४३॥

**सहितंगणनाथमनाथहितं सुरनायकनागनरैर्महितम्।**
**भयविघ्नविनाशकलासहितं स्मरमत्सरमानमदैरहितम्॥४४॥**

**कृपा टीका**—जगंत के हितैषी, गणों के नाथ, अनाथों के हित, इन्द्र नाग एवम्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मनुष्यों से पूजित भय एवं विघ्नों के विनाश की कला से युक्त काम मत्सर मान एवम् मद से रहित गणेश जी को परशुराम जी ने दर्शन का विषय बताया॥४४॥

**गिरिजागिरिजावरसत्सुकृतं गिरिराजसुताजठरे विहृतम्।**
**गिरिशानुगतं गिरिसानुरतं जगदीश्वरमीश्वरभावरतम्।।४५।।**

**कृपा टीका**—जगत के ईश्वर ऐश्वर्य भाव में तन्मय पार्वती जी एवं शिवजी के पुण्यरूप, पार्वतीजी के गर्भ में विहार किये हुए, भगवान शंकर के अनुगामी तथा उन्हीं कैलासनाथ की सेवा में परायण भगवान गणपति का परशुराम जी ने साक्षात्कार किया॥४५॥

**निजभालविभूषितबालविधुं शुचिमानसबालमरालविधुम्।।**
**स्मरभित्सुकृताब्धिरसालविधुं श्रितबुद्धिसुसिद्धिसुधालवधुम्।।४६।।**

**कृपा टीका**—अपने मस्तक पर बाल चन्द्रमा को सुशोभित किये हुए तथा पवित्र मनरूप मान सरोवर के राजहंस रूप परमात्मा तथा कामारि शंकर के पुण्य क्षीरसागर के चन्द्रमा एवं बुद्धि तथा सिद्धि जैसी पत्नियों के आश्रय गणपति जी के परशुराम जी ने दर्शन किये॥४६॥

**तमतीवमनोहरवेषधरं धरणीधरभूषणतोषकरम्।**
**प्रतिहारमवस्थितमार्तिहरं भृगुरामउदैक्षत बुद्धिवरम्।।४७।।**

**कृपा टीका**—इस प्रकार अत्यन्त मनोहर वेशधारी शेषविभूषण भगवान शंकर को सन्तुष्ट करने वाले आर्तिहारी मुख्यद्वार मुख्य द्वारा पर विराजमान बुद्धि के पति उन भगवान गणपति को भृगु परशुराम जी ने उत्सुकतापूर्वक निहारा ॥४७॥

**अवलोक्य गणेशमशेषनुतं सुमहान्तमुरुक्रमसत्वयुतम्।**
**धृतमोदकहस्तमपास्तभयं भृगुराट् स सविस्मयईशमयम्।।४८।।**

**कृपा टीका**—इस प्रकार सम्पूर्ण जगत से नमस्कृत अत्यन्त महान तथा भगवान नारायण के तेज से युक्त भगवान शिव के प्रतिविम्बरूप हाथ में लड्डू लिए हुए गणेशजी को देखकर परशुराम जी विस्मित हो गये॥४८॥

**किमयं धृतदेहमुदारतपः किमसौतनुमान् भगवांसुजपः।**
**किमुमूर्तिमयं पुरभित्सुकृतं शिवया जनुषे जठरे हि धृतम्।।४९।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—परशुराम जी सोचने लगे क्या यह कठोर तप ही शरीर धारण किए हुए है अथवा क्या सुन्दर जप के विषय बनने वाले भगवान श्रीराम नाम ने ही अवतार ले लिया है अथवा पार्वतीजी ने जन्म लेने के लिए भगवान शंकर के मूर्तिमान पुण्य को ही अपने गर्भ में धारण कर लिया है।।४९।।

**भवमेषभवे भवभावनया सफलंभविनामथ भावितदान्।**
**जननीततपादपरिक्रमया सुरपूज्यविधौ प्रथमः प्रथमः।।५०।।**

**कृपा टीका**—अहो इस श्रेष्ठ महापुरुष ने भगवान शंकर के प्रति भावना से प्राणियों के जन्म को ही इस संसार में पवित्र कर दिया। माता पिता के श्रीचरणों की परिक्रमा से इन्होंने देवताओं में पूज्यविधा में प्रथम स्थान प्राप्त कर लिया।।५०।।

**तं प्राह प्राञ्जलिमिभास्यमुपास्यवाचं**
**वाचंयमं प्रथमपूज्य मथामराणाम्।**
**द्वास्थं सुतं भृगुभुजो भृगुवंशकेतुः**
**स्मेराननेन्दुपरिवर्धिततच्छ्रितेन्दुः।।५१।।**

**कृपा टीका**—अनंतर भृगुवंश की पताका परशुराम जी ने अपनी मंद मुस्कान से युक्त मुखचन्द्र द्वारा गणेश जी के मस्तक पर विराजमान बाल चन्द्रमा को बधाई देते हुए भृगुवंशपालक भगवान शंकर के मुख्य द्वार पर स्थित देवताओं में प्रथम पूज्य, उपासनीय वाणी वाले किंतु हाथ जोड़कर चुपचाप खड़े हुए उन गजवदन गणेश जी से यह वाणी बोले।।५१।। यहाँ से श्लोक १०० तक वसन्ततिलका छन्द है।

**वर्धस्व भो भवभवाभवनाम्बरेन्दो**
**हेरम्बसाम्बशिववत्सलवारिजार्क।**
**विघ्नाटवी दहनदक्षमहादवाग्ने**
**लम्बोदरोदरदुरोदरदृश्यदुर्ग।।५२।।**

**कृपा टीका**—हे भगवान शिव एवम् पार्वती के भवनरूप आकाश के चन्द्रमा तथा उमा महेश्वर के वत्सलरसरूप कमल को विकसित करने के लिए सूर्यरूप विघ्न वन को भस्म करने में कुशलन दावाग्नि स्वरूप अपने उदर में ही भयपरिणामी दृश्यमान जगत को समेटने वाले हे लम्बोदर! हे हेरम्ब! हे गणपति तुम्हारी वृद्धि हो।।५२।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धन्योऽसि वै गणपते त्वमिह त्रिलोक्यां
यत्पाद्मिपद्मपदपूजनपुण्यपूगैः।
लोकान् समाञ्जयसि यद् गुणलेशलुब्धा
गायन्ति जागरगिरः श्रुतिभृङ्गराज्ञः।।५३।।

**कृपा टीका**—हे गणपति वास्तव में आप ही तीनों लोगों में सबसे अधिक धन्य हैं क्योंकि आप कमल नन्दन ब्रह्मा जी के पुत्र भगवान शंकर के चरण कमल के पूजन से उपलब्ध पुण्यसमूहों द्वारा सम्पूर्ण लोकों को जीत चुके हैं इसलिए अपने इन्हीं गुणों से लुब्ध हुईं श्रुतिरूप भ्रमरियाँ अपनी जाग्रत वाणी से आलस्य त्यागकर सदा गाती रहती हैं।।५३।।

त्वं कर्तृभर्तृभवहर्तृमयोऽच्युतात्मा
ब्रह्माद्वयं प्रथममानमितं महात्मा।
त्रीन् वै गुणानथ तनूः समयं च शक्ती-
स्तिस्रो ह्यतीत्य भजसेऽगुणतां गुणाढ्यः।।५४।।

**कृपा टीका**—हे महात्मन् तुम कहीं पालनकर्ता और कहीं संहारकर्ता ब्रह्म अर्थात् ब्रह्मा विष्णु शंकरमय हो, तुम नारायण स्वरूप हो, तुम प्रत्यक्ष ब्रह्म हो, तुम सगुणस्वरूप होकर भी तीनों गुणों को तीनों अवस्थाओं को, तीनों शक्तियों को और तीनों कालों को लाँघ कर निर्गुण हो चुके हो।।५४।।

सम्पूजितः परिणये प्रथमं शिवाभ्या
माद्योऽपि तद्विमलवत्सलभाववश्यः।
आप्थास्तयोस्तनयतां तनुवर्जितोऽपि
भावो भवे ननु भवस्य भवेन्निदानम्।।५५।।

**कृपा टीका**—तुम्हीं शिव पार्वती विवाह में शिवा तथा शिव द्वारा पूजित हुए अनादि होकर भी शिव दम्पती के वात्सल्य के वश में होकर पार्वती और शिवजी के पुत्र बन गये क्योंकि भाव ही संसार में जन्म का कारण बनता है।।५५।।

तद्दर्शया शुभहरं हरमाशुतोषं भूभृत्सुतावरमनिन्द्यगुणैककोषम्।
बालेन्दुमौलिमनघं विकटेड्यवेशं कालार्दनं धृतकपालमुरस्थशेषम्।।५६।।

**कृपा टीका**—इसलिए अशुभहर्ता, आशुतोष, पार्वती जी के पति विनय विमलगुणों

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

के कोष के बालचन्द्र को मुकुटरूप में धारण किये हुए निष्पाप, विकट एवम् स्तुत्य वेशधारी, काल विजेता, कपालमाली, हृदय पर शेषनारायण को धारण करनेवाले, भक्त भयहारी, भगवान शंकर के दर्शन करा दो॥५६॥

**प्रस्थापितं चरणचारणभूभृता त्वं पूर्याः पुरा पुरहरं ह्यविमुक्तनाम्नः।**
**नष्टं स्म रत्नमिव ढुण्ढसिढुण्ढिराजः सर्वंसहो हि भगवान् जनचाटुचुञ्चुः॥५७॥**

**कृपा टीका**—क्योंकि बहुत पहले अर्थात् कृतयुग में भगवान शंकर के चरणों की सेवा करने वाले दिवोदास राजा के द्वारा अविमुक्ति पुरी अर्थात् काशी से बाहर भेजे हुए भगवान शिव को खोये हुए रत्न की भाँति तुम ढूँढ लाये इसीलिये तुम्हें ढुण्ढिराज कहा जाता है क्योंकि भगवान भक्तों के चाटुकार होने के कारण उनका सब कुछ सह लेते हैं इसीलिए दिवोदास के कहने से शिवजी काशी छोड़कर चले गये परन्तु उनका जब मन नहीं लगा तब तुम उन्हें ले आये॥५७॥

**तन्मेऽर्भकेन्दुमुकुटाननशारदेन्दोश्चक्षुश्चकोरय चकोरचराम्बुजाक्ष।**
**तत्पादपद्ममकरन्द मधुव्रतोऽहं दृष्ट्वा तमद्य सुचिरादुपयामि शान्तिम्॥५८॥**

**कृपा टीका**—हे गणपते तुम्हारे नेत्र पूर्व में ही शिव मुख चन्द्र के चकोर बन चुके हैं इस लिए तुम आज मेरे नेत्र को भी चन्द्रमौलि भगवान शिव के मुखचन्द्र का चकोर बना दो मैं शिव जी के ही चरणकमल के मकरंद का भ्रमर हूँ। आज उनके दर्शन से बहुत दिनों के पश्चात् शान्ति पा सकूँगा॥५८॥

**इत्यूचिवांसमपि भार्गवमत्युदारं रोषाग्निदग्ध कुनृपावलिभूरिभारम्।**
**मन्दस्मितं गणपतिः पतितैकबन्धुः प्रेम्णा बभाष इममादृतमर्थपूर्वम्॥५९॥**

**कृपा टीका**—इस प्रकार कहते हुए, अपनी क्रोधाग्नि में दुष्टराजवंशरूप विशाल भूभार को भस्मसात् किये हुए, अत्यन्त उदार परशुराम जी से, पतितों के एकमात्र रक्षक गणपति जी आदर पूर्वक अर्थपूर्ण वचन बोले॥५९॥

**स्वत्यस्तु ते द्विजसरोरुहचित्रभानो सुस्वागतं कुनृपवंशमहाकृशानो।**
**विश्रम्यतामनुगृहाण गृहाणपूजां यावत् तवागममहं निगदामि पित्रे॥६०॥**

**कृपा टीका**—गणपति जी ने कहा कि ब्राह्मणवंश रूप कमल के सूर्य आप का कल्याण हो। हे दुष्ट नृपकुल रूप वेणु वन के लिए दावाग्नि, आपका स्वागत है आप विश्राम करें अनुग्रह करें पूजा स्वीकारें जब तक मैं आपका आगमन पिताश्री से निवेदित करता हूँ॥६०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**किञ्चिद्विरम्य रमणीय पदारविन्दं द्रक्ष्यस्यहो हरमरिन्दमतद्विमृश्य।**
**माध्याह्निकीं गुरुरुपास्तउदारसंध्यां श्रैष्ठ्यंव्यनक्ति हि सतां श्रुतिवाक्यनिष्ठा।।६१।।**

**कृपा टीका**—हे शत्रुनाशक कुछ क्षण प्रतीक्षा करके आप सुन्दर चरणकमल वाले भगवान शिव के दर्शन कर सकेंगे क्योंकि अभी पिताश्री सन्ध्योपासन कर रहे हैं। अहो! वैदिक वाक्यों में निष्ठा ही संतों की श्रेष्ठता को अभिव्यक्त करती है।।६१।।

**तद्भूतभर्तृपदपंकजदर्शनेच्छा व्यालोलमानसबलप्रवणप्रतीक्ष्या।**
**माध्याह्निकी गुहगुरौ ननु कृत्यवेला हेला भवाय न सतां हि भवादृशानाम्।।६२।।**

**कृपा टीका**—इसलिए हे भगवान शंकर के चरणकमल की दर्शनेच्छा से चंचल मनवाले, हे बलशालिन्, कार्तिकेय के पिता भगवान शंकर की मध्याह्न सान्ध्यबेला की तुम्हें प्रतीक्षा करनी होगी क्योंकि आप जैसे लोगों द्वारा शास्त्रीय वचनों का अपमान कल्याण के लिए नहीं होता।।६२।।

**श्रुत्वातमाह भृगुवंशगजो गजास्यं**
**दद्भिर्दशनदशनवास उदूढकोपः।**
**आरक्तनेत्रनलिनो नलिनार्भपौत्रं**
**गर्वो महानरिरुदात्तमहागुणानाम्।।६३।।**

**कृपा टीका**—इस प्रकार वचन सुनकर क्रुद्ध हुए लालनेत्रवाले भृगुश्रेष्ठ परशुराम जी कमलनन्दन ब्रह्मा जी के पौत्र गजानन से बोले क्योंकि गर्व, श्रेष्ठ गुणों का महान शत्रु है।६३।।

**हेरम्ब साम्बभव डिम्भ न मामवैषि**
**ब्रह्मध्रुगम्बुजतुषारकुठारपाणिम्।**
**यद्वीर्यवारिधिसमुच्छलदुग्रवीची–**
**ष्वालीयतार्जुनमयी हतशक्तिनौका।।६४।।**

**कृपा टीका**—हे शिव पार्वती के दुधमुँहे बालक हेरम्ब, ब्रह्मद्रोही राजवंश के लिए हिमपात के समान कुठार को धारण करनेवाले मुझ परशुराम को तुम नहीं जानते हो जिसके पराक्रम रूप महासागर की उछलती हुई लहरों में ही शक्तिहीन होकर सहस्रबाहुरूप नौका डूब गई थी।।६४।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तं प्राह पार्वतिसुतस्तरुणारुणार्क**
**ज्योतिर्विनिन्दनपटूत्तमकान्तिकान्तम्।**
**भासाविमुष्टतिमिरो द्विरदोत्थलम्बि**
**बिम्बाधरेण मृडयन् भृगुवंशवर्यम्।।६५।।**

**कृपा टीका**—इसके अनंतर अपने प्रकाश से अंधकार नष्ट करते हुए अपने दोनों दाँतो पर आश्रित बिम्वाधर से सुखी करते हुए बालसूर्य की कान्ति को लज्जित करने वाली उत्तम शोभा से युक्त परशुराम जी से पार्वतीपुत्र गणेश जी ने कहा।।६५।।

**जाने जनन्यसृगनुत्तमबिन्दुलिप्तमिथ्यावलेपपरशुं परुषाक्षरं त्वाम्।**
**राजन्यगर्भदलने भटमुद्भटाग्रे स्वश्लाघिनं निजपथाद्रभसा विदूरम्।।६६।।**

**कृपा टीका**—हे भगवान मैं आपको जानता हूँ आप अत्यंत कटुभाषी हैं आपका फरसा आपकी माँ के खून से लथपथ और झूठे अहंकार वाला है। आप गर्भस्थ राजकुमारों के नाश में वीर तथा पराक्रमियों के सामने अपनी ही प्रशंसा करने में निपुण हैं आप इस समय क्रोध के आवेश में अपने मार्ग से बहुत भटक गये हैं।।६६।।

**मातुः पिता किमु गुणैः श्रुतितो गरीयान् यद्वाक्यतः स्वजननीं पशुवज्जघान।**
**निर्दोषणार्भकविघातिपरश्वधेन श्लाघाम्मुधा वहसि चेतसि जामदग्न्य।।६७।।**

**कृपा टीका**—क्या वेद के अनुसार पिता माता से श्रेष्ठ होता है जिसके वाक्य के आधार पर आप ने अपनी माँ को पशु की भाँति मार डाला। निर्दोष गर्भस्थ बालकों के मारने से इस फरसे के कारण ही जमदग्नि नन्दन आप अपने चित्त में झूठी प्रशंसा कर रहे हैं।।६७।।

**मामावमत्य भृगुरामशिवेशशीलं नत्वादृशोहि विजहाति कदापि धर्मम्।**
**वेलां पयोधिरतिलंघितुमुद्यतश्चेत्कस्तं नियच्छतु विना ननु कुंभयोनिम्।।६८।।**

**कृपा टीका**—हे परशुराम! भगवान शंकर के शील का अनुगमन करनेवाले मुझ गणेश का अपमान मत कीजिए आप जैसे लोग कभी भी धर्म नहीं छोड़ते। अरे यदि सागर ही अपने मर्यादातट का उल्लंघन करने को उद्यत हो तो फिर उसे अगस्त के अतिरिक्त कौन नियंत्रित कर सकता है।।६८।।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**लब्धावकाशमभिपश्य पितुःपदाब्जं निर्बन्धतो विरम राम नियच्छ मन्युम्।**
**तुष्टे गुरौ सकलसिद्धय आत्तवेगाः शिष्यं व्रजन्ति विमलं सरितो यथाब्धिम्॥६९॥**

**कृपा टीका**—मध्याह्न, संध्या पश्चात् अवकाश मिलने पर पिताश्री के चरण कमलों के दर्शन करना। हे परशुराम हठ छोड़ दो अपने क्रोध पर नियंत्रण करो। जिस प्रकार सागर में नदियाँ स्वयं आकर मिल जाती हैं उसी प्रकार गुरुदेव की संतुष्ट होजाने पर सभी सिद्धियाँ शिष्य के पास आ जाती हैं॥६९॥

**इत्थं निवेद्य विरराम स यावदैशो भूतेशभावपुलकाञ्चितगात्रवल्लिः।**
**तावद्रुषा स विगणय्य गणेशवाचं वीर्यावलेपविवशोऽन्तरुपेतुमैच्छत्॥७०॥**

**कृपा टीका**—इस प्रकार कहकर भगवान शंकर की भावना से पुलकित शरीर वाले गणेश चुप ही हुए थे कि तब तक गणेश जी के वाक्य का तिरस्कार करके परशुराम जी ने अपने अहंकार के वशीभूत होने के कारण गणपति को ठेलकर अंदर जाना चाहा॥७०॥

**तं धावमानमवमानहरंप्रचण्डमुद्दण्डमात्मगुरुगौरवगूढगर्वम्।**
**तुण्डेन तुन्दिलवरस्तरसा निगृह्य व्यापोथयन् नलिननालनिवेभराजः॥७१॥**

**कृपा टीका**—इस प्रकार अपने गुरु की गुरुता से उत्पन्न गर्ववाले गणपति का अपमान करके भगवान शिव की ओर दौड़ते हुए अतिशय क्रुद्ध उद्दण्ड परशुराम जी को गणपति जी ने अपने सूँड से पकड़कर उसी प्रकार फैंक दिया जैसे गजराज कमलदण्ड को फैंक देता है॥७१॥

**भूयस्तमुत्थितमवेत्य हसन् हरांशो विभ्रामयंस्तरुमयं स यथा पतङ्गम्।**
**दूरेऽक्षिपत् क्षपित भूपवधोत्थगर्वं दण्डोऽप्यनुग्रह उदारचरित्रभाजाम्॥७२॥**

**कृपा टीका**—फिर से उठे हुए परशुराम को देखकर हँसते हुए लकड़ी से बने हुए पक्षी की भाँति परशुराम को नचाते हुए राजवध से उत्पन्न गर्व वाले भृगुवर्य को बहुत दूर फैंक दिया क्योंकि उदारचरित्र वाले महापुरुषों का दण्ड भी जीव के अनुग्रह के लिए होता है॥७२॥

**तद्दर्पवार्धिमधिशोषयितुं पुनस्तं निक्षिप्तवान् सरभसा श्रुतिचन्द्रकेषु।**
**लोकेषुलोचननिमीलनदक्षमैशोभूयः समाहरदमुं हरशैलमूलम्॥७३॥**

**कृपा टीका**—परशुराम जी के गर्वसागर को सोखने के लिए गणपति जी ने

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

परशुराम जी को बार बार चौदहों भुवनों में फेंका और जब परशुराम जी की आँखें बन्द हो गईं तब उन्हें कैलास पर्वत के पास ले आये॥७३॥

**तं त्यक्तपौरुषरुषं रुधिरावसिक्तम्**
**भग्नावलेपमथमुक्तधनुष्कुठारम्।**
**संक्षिप्तवीर्यबलदर्पसुभीमराव**
**वार्धेश्रियं दधतमैक्ष्य दयामगात् सः।।७४।।**

**कृपा टीका**—इस प्रकार पौरुष और क्रोध से रहित खून से लथपथ चूर्ण हुए गर्ववाले, जिनके हाथ से धनुष और फरसा गिर चुका था तथा पराक्रम एवं बलरूप तरंगों के गर्जन से मुक्त शांत समुद्र की शोभा प्राप्त कर रहे ऐसे परशुराम जी को देख गणपति जी को दया आ गयी॥७४॥

**देवः शिरस्यथ मुनेर्निजपाणिपद्मम्**
**क्लान्तिं नुनोद वृषकेतुसुतो दधानः।**
**तस्थौ च संयति कुठारकरः स भूयः,**
**क्रोधान्धता न कुरुते कमहो कदर्यम्।।७५।।**

**कृपा टीका**—इस प्रकार भगवान शिव के पुत्र गणेश देव ने मुनि परशुराम जी के शिर पर अपने करकमल का स्पर्श कर उनकी थकावट दूर कर दी परशुराम जी फरसा हाथ में लेकर फिर युद्ध में उपस्थित हुए। अरे क्रोधान्धता किसको नहीं नीच बना देती॥७५॥

**स प्राहरत् कुपतिपद्ममहातुषारं**
**कालालयं कुलिशकोटिकठोरधारम्।**
**दुर्वारणं नृपकृपाकृपणं कुठारं**
**हारौ हरौ दुरितदुर्मदवारणानाम्।।७६।।**

**कृपा टीका**—परशुराम जी ने विघ्नरूप दुष्ट हाथियों के सिंह भगवान शिव के पुत्र श्री गणेश जी पर उस फरसे का प्रहार किया जो दुष्टराजवंशरूप कमल के लिए तुषार (वर्फ) था तथा जो काल का भवन तथा करोड़ो वज्रों से भी अधिक नुकीली धार वाला था, जो किसी अस्त्र शस्त्र से रोका नहीं जा सकता था जो राजाओं पर कृपा के सम्बन्ध में सर्वथा ही कृपण था॥७६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तं भीषणाशनिशतायुतकोटिसारं ज्वालाज्वलत्प्रलयपावकदुर्निवारम्।**
**लम्बोदरः परिकरप्रहितं कुठारं सभ्यः स सव्यदशनेन शशाक सोढुम्।।।।७७।।**

**कृपा टीका**—परम सभ्य लम्बोदर गणेशजी ने अरबों भयंकर वज्रों के समान तीखी नोक वाले ज्वालाओं से धधकती हुई प्रलयकालीन अग्नि के समान किसी भी अस्त्र शस्त्र द्वारा रोके जाने में सर्वथा असम्भव ऐसे परशुराम के फरसे को अपने बायें दाँत से सहन करते हुए रोक लिया॥७७॥

**माहिष्मतीपतिमहाद्रुमचण्डकाण्डदोर्दण्डखण्डनपटुः परशुःपरस्य।**
**वव्रश्चमूलिकमिवैश्वरदन्तमूलं वामं बलं नहि भवाय वरोन्मदानाम्।।७८।।**

**कृपा टीका**—माहिष्मती नगरी के पति सहस्रार्जुनरूप महावृक्ष के शाखारूप भुजदण्डों को काटने में कुशल परशुराम जी के उस कठोर फरसे ने शिवपुत्र गणेश जी के बायें दाँत के मूल भाग को मूली की भाँति काट दिया क्योंकि वरदान से उन्मत्त लोगों का बल भी अकल्याण ही करता है अर्थात् अनर्थकारी होता है॥७८॥

**वृक्णं विषाणमथ भार्गवहेतिना तत् सद्यःपपात धरणौ कृतचण्डशब्दम्।**
**कं कम्पयन् सह पयोनिधिभूमिवृक्षैर्वज्रेण वृक्णमिव शैलपदं मघोनः।।७९।।**

**कृपा टीका**—परशुराम जी के फरसे से कटा हुआ गणेश जी का बायाँ दाँत समुद्र, पृथ्वी, एवं वृक्षों के साथ शिवलोक को भी कम्पित करता हुआ इन्द्र के वज्र से कटे हुए पर्वत शिखर की भाँति शीघ्र ही पृथ्वी पर गिर पड़ा॥७९॥

**तद्वृक्णदन्तखनितस्तरसातितीव्रा सुस्राव शोणितसरित्कृतघोरधारा।**
**हाहेतिघोरनिनदः तुमुलस्तदानीं भूतेरितः समभवद्धतशष्कुलीकः।।८०।।**

**कृपा टीका**—गणेश जी के कटे हुए खड्डे से अत्यन्त तीव्र गति से रक्तसरिता की धारा वह चली उस समय भूतगणों और सम्पूर्ण भूत प्राणियों द्वारा हाहाकार किया जाने लगा जो सुनने वालों के कान फाड़ रहा था॥८०॥

**एवं भृगूद्वहपरश्वधवृक्णशृंगो गोविन्दचेष्टितमसावभिमन्यमानः।**
**भेजेऽहिवैरिवरवज्रविभग्नशृङ्गमातामहश्वशुरमित्रविभां गणेशः।।८१।।**

**कृपा टीका**—इस प्रकार परशुराम जी के फरसे से बाँये दाँत खण्डित हो जाने

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पर भी इसे भगवान की लीला समझते हुए गणेशजी वृत्रासुर के शत्रु इन्द्र के वज्र से कटे हुए शिखर वाले गणपति के नाना हिमालय के सुमेरु पर्वत के मित्र मन्दराचल की शोभा प्राप्त कर रहे थे॥८१॥

**रक्तं वमन् वदनतो वदनं न किञ्चित् स व्याहरन् हरसुतस्तमसह्यतोदम्।**
**तूष्णीं निगृह्य धृतितस्तुहिनाद्रिसत्वस्तस्थौ क्षमैव हि सतां नितरां निधानम्॥८२॥**

**कृपा टीका**—हिमालय पर्वत के समान धैर्यवाले गणेश जी उस असंह्य पीड़ा को धैर्य से रोकते हुए मुख से वमन करते हुए किन्तु कुछ भी न बोलते हुए शांत भाव से खड़े थे क्योंकि क्षमा ही सज्जनों का सबसे बड़ा धन है॥८२॥

**चक्रन्दुरैक्ष्यतमनर्हमहोरदाधेर्नाथं समे प्रमथभूतपिशाचयक्षाः।**
**हा हा रुषं भृगुपतेर्धिगमुष्यशस्त्रं दुग्धं विषाय फणिनो हि सुदीर्घमन्योः॥८३॥**

**कृपा टीका**—अपने स्वामी गणपति जी को इस दंत पीड़ा के योग्य न देखकर सभी प्रमथ, भूत पिशाच, जोर-जोर से रोने लगे, कहने लगे परशुराम के क्रोध को धिक्कार और उनके शस्त्र फरसे को भी धिक्कार क्योंकि दूध सर्प का विष ही बढ़ाता है। उसके दीर्घकालीन क्रोध को नहीं बढ़ाता है॥८३॥

**यस्तादृशे किल निरागसि लोकनाथे**
**स्वाचार्यपुत्र इह वै विदधेऽरिदण्डम्।**
**तद्धन्यतामयमसत्स्पृहणीयशीलो**
**लीलामयैर्निशितधारतरैस्स्वशस्त्रैः॥८४॥**

**कृपा टीका**—जिस परशुराम ने गणपति जैसे निर्दोष, लोकों के स्वामी आचार्य पुत्र पर शत्रु जैसे दण्ड का प्रयोग किया है इसलिए अपने लीलामय कठोरधारा वाले शस्त्रों से हम सब असज्जनों द्वारा जिसके स्वभाव की प्रशंसा की जाती है ऐसे परशुराम को मार डालें॥८४॥

**इत्थं विवश्यकृत्किल्विषमात्रशस्त्रा**
**नाधावतो मुनिसुतं स्वगणान्जिघांसून्।**
**प्रत्यादिशत् स्वकरधूननतो गणेशः**
**को वा विधित्सितमतिक्रमते विभूम्नः॥८५॥**

**कृपा टीका**—इस प्रकार निश्चय करके अनेक अस्त्र शस्त्र लेकर अपराध करने

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वाले परशुराम को मार डालने के लिए टूट पड़ते हुए अपने भूतगणों को अपनी सूँड हिलाकर गणपति जी ने रोक दिया क्योंकि भगवान की इच्छा का कौन अतिक्रमण कर सकता है॥८५॥

**कोलाहलं तदधिगम्य विभाव्यसूनोर्दुस्संकटं गिरिसुता समगात् सशोकम्।**
**क्रान्तं मृगाधिपतिनास्नुवतीस्तनाभ्यां प्रेम्णा पयः सपदि गौरिव तत्र गौरी॥८६॥**

**कृपा टीका**—इस प्रकार कोलाहल सुनकर अपने पुत्र पर घोर संकट समझ कर सिंह द्वारा आक्रान्त बछड़े को देखकर थनों से दूध गिराती हुई गौ की भाँति पार्वती जी वहाँ शीघ्र आ गईं॥८६॥

**दृष्ट्वा द्विजायुध विभग्नविषाणमास्याद्रक्तं वमन्तमधिकं स्वसुतं प्रशान्तम्।**
**कालीकरालवदनावदनोत्थवह्निर्ज्वालामयेनभृगुनाथमिवामादिधक्षुः॥८७॥**

**कृपा टीका**—शंकर भगवान की गृह लक्ष्मी पार्वती जी तीनों आँखों से भयंकर अग्नि उगलती हुईं पुत्र के शोक से मूर्छित होकर शिवजी के वटु परशुराम जी को डाँटकर क्रोधपूर्वक बोलीं। उस समय क्रोध से उनका आम के पल्लव जैसा ओठ फड़फड़ा रहा था॥८७॥

**नेत्रैस्त्रिभिस्त्रिशिखमुल्वणमुद्वमन्ती कोपेन विस्फुरितसौरभपल्लवौष्ठा।**
**निर्भर्त्स्य रुद्रगृहिणी वटुमात्मभर्तुः सम्मूर्च्छिता सुतशुचा निजगाद रुष्टा॥८८॥**

**कृपा टीका**—शंकर भगवान की गृहलक्ष्मी पार्वती जी तीनों आँखों से भयंकर अग्नि उगलती हुई, पुत्र के शोक से मूर्च्छित होकर शिव जी के वटु परशुराम जी को डाँटकर क्रोधपूर्वक बोलीं। उस समय क्रोध से उनका आम्र के पल्लव जैसा ओठ फड़फड़ा रहा था॥८८॥

**का ते कृता निजगुरोश्चरणाब्जसेवा तत्सूनुदन्तखनिशोणितकोष्णवार्भिः।**
**लोकाहतास्त्वमबता भवता न किं वै साधीयसी प्रणिहिता गुरुदक्षिणा भो॥८९॥**

**कृपा टीका**—पार्वती जी ने कहा- अरे मूर्ख , गुरुपुत्र के दाँत के खड़े से निकलते हुए गर्म गर्म रक्त जलधारा से गुरुदेव के चरणों को धोकर तुमने यह कौन सी गुरुदेव के चरणकमल की सेवा की? क्या तुमने अपनी रक्षा करते हुए अपने अहंकार को संतुष्ट करने के लिए समस्त लोकों को नहीं समाप्त कर दिया, यह तुमने बड़ी सुन्दर गुरुदक्षिणा दी॥८९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्वादृक्सहस्रमधुनैवनिहन्तुमीशो हेरम्ब एव मम वत्सलवारिधीन्दुः।
ब्रह्मण्यवल्लभतयास्वपितुःसुतेन क्षान्तोऽसि जीवसि ततः कृतपापकर्मन्।।९०।।

**कृपा टीका**—अरे पापी मेरे वत्सलरूप सागर को तरंगायित करनेवाला चन्द्रमा यह गणेश तुम जैसे करोड़ों को अभी मार डालने में समर्थ है परन्तु अपने पिता की ब्रह्मकुल में प्रीति के कारण पुत्र ने तुम्हें क्षमा कर दिया इसीलिए तुम अभी जी रहे हो।।९०।।

वंशोद्विधा निगदितः श्रुतिसत्स्मृतीभिः
सद्विद्यया द्विजवरस्य सुजन्मना वै।
त्वं विद्ययैव स भवस्य युगेन वंश्य
स्तस्मात् त्वदस्यगुणतो द्विगुणोऽधिकारः।।९१।।

**कृपा टीका**—श्रुतियों एवं श्रेष्ठ स्मृतियों में विद्या तथा जन्म से ब्राह्मण का दो प्रकार का जन्म कहा है। तुम केवल विद्या से शिव जी के वंशज हो परंतु गणपति तो विद्या एवं जन्म इन दोनों से शिवजी के पुत्र हैं इसलिए तुम्हारी अपेक्षा शिवजी पर गणेश का दुगुना अधिकार है।।९१।।

त्वं मातरं गुरुतरां पितुरप्यहन् भो
आपाततः परिचरन् निगमोक्त धर्मम्।
आचार्यवद् बहुमतेऽपि सुते तदीये
क्रोधान्धधीर्विहितवान् परशुप्रहारम्।।९२।।

**कृपा टीका**—तुमने तो साधारण रूप से वेद धर्म का पालन करते हुए पिता की अपेक्षा श्रेष्ठ होने पर अपनी माँ को ही मार डाला और आचार्य की भाँति ही आदरणीय गुरुपुत्र पर भी क्रोध से अंधे होकर तुमने फरसे का प्रहार कर दिया।।९२।।

एषोऽवगम्य ततो जननीगुरुत्वं,
नैवाभ्यनन्ददबलोऽपि भवातिचारम्।
तच्छूललूननवचन्दिरकन्दरोऽसौ
भेजे गजास्यमिव भूषणमाप्तशान्तिः।।९३।।

**कृपा टीका**—परन्तु गणेश ने पिता की अपेक्षा माँ को श्रेष्ठ मान कर ही निर्बल

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

होने पर भी पिता शंकर के स्वेच्छाचार को नहीं स्वीकारा भरे ही शंकर के त्रिशूल से ही उसका चन्द्रमुख कट गया फिर भी उसने हाथी का सिर आभूषण की भाँति स्वीकार कर लिया और किसी प्रकार की भी अशान्ति नहीं दिखाई।।९३।।

तद्दण्डये प्रबलचण्डप्रचण्डदण्डै
रुद्दण्डमुन्मथितहैहयबाहुदण्डम्।
शापाभिधैरहमुदग्रपराक्रमं त्वां
त्वन्निग्रहस्तु भवतात् भवतो विभूत्यै।।९४।।

**कृपा टीका**—इसलिए हे अत्यन्त क्रोधी वटु यद्यपि तुमने सहस्रबाहु की भुजायें काटीं फिर भी तुम उद्दण्ड हो गये हो इसलिए अब मैं शाप नामक घोर दण्डों से आज तुम्हें दण्डित कर रही हूँ क्योंकि मेरा निग्रह तुम्हारे कल्याण के लिए ही होगा।।९४।।

यस्मादुदूढगुरुगर्वपरश्वधेन
त्वं वै बभङ्क्थ दशनं गणनायकस्य।
तस्मादुपेत्य रघुनन्दनमागधेयौ
लीयाद्घने तडिदिव प्रखरः कुठारः।।९५।।

**कृपा टीका**—हे अहंकारिन्, जिस कारण से तुमने गणेश के दाँत को इसी फरसे से काटा वही यह फरसा श्रीराम लक्ष्मण को प्राप्त करके उनमें उसी प्रकार छिप जायेगा जैसे बिजली बादल में छिप जाती है।।९५।।

त्वद्वीर्यवारिनिधिमन्दरदिव्यसत्वम्
रामं रमार्चितपदाम्बुजमभ्युपेतः।
शेषावमानितचरो निजरूढदर्पम्
त्यक्त्वा समर्पितकललः शमुपैष्यसि त्वम्।।९६।।

**कृपा टीका**—महालक्ष्मी द्वारा जिनके चरणों की पूजा की गई है ऐसे तुम्हारे पराक्रम रूप महासागर को मथने के लिए मन्दराचल के समान पराक्रम वाले श्रीराम को प्राप्त करके पूर्व में लक्ष्मण द्वारा अपमानित होकर श्रीराम को धनुष बाण तथा अपनी ईश्वरीय कलाएँ समर्पित करके तुम शान्ति प्राप्त कर लोगे।।९६।।

धीरेण तीव्रतपसा भवताजिता ये
लोकास्त्रिलोचनविधेयवरेण भव्याः।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ते रामभद्रभवभावनबाणवह्नौ
यास्यन्ति वै शलभतां सह पुण्यपुञ्जैः॥९७॥

कृपा टीका—भगवान शंकर के श्रेष्ठ शिष्य तुम्हारे द्वारा दीर्घ तपस्या से जो लोक जीते गये हैं वे श्रीरामभद्र के बाणाग्नि में पतंगे की भाँति पुण्य पुञ्जों के साथ भस्म हो जायेंगे॥९७॥

त्वं सर्वदा परिभवानलविस्फुलिंगै
र्दन्दह्यमानमनसा भवितास्यशान्तः।
लम्बोदरः प्रथमपूज्यतमः सुराणां
शान्तश्चरिष्यति समोदक एकदन्तः॥९८॥

कृपा टीका—तुम निरंतर अपमान की अग्नि लपटों से जलते हुए मन के कारण सर्वथा आहत रहोगे। परन्तु गणेश देवताओं में प्रथम पूज्य होकर भी मोदक के साथ एकदन्त के रूप में सर्वत्र पूजे जायेंगे और शान्त जैसे रहेंगे॥९८॥

शप्त्वातमित्थमथ कृत्यभयेनभीतं
चण्डी प्रचण्डवचनैरपि तर्जयित्वा।
रामं पुनर्गणपतिं नयनाश्रुनीरैः
प्रेम्णासिचद्गतभयं सुतमेकदन्तम्॥९९॥

कृपा टीका—इस प्रकार अपने ही कृत्य से डरे हुए परशुराम को शाप देकर प्रचंड बचनों से उन्हें फटकार कर चण्डी पार्वतीजी ने एक दंत गणपति को निर्भीक करते हुए अपने नेत्रों के आसुओं से सींच दिया॥९९॥

रामः प्रसाद्य गुरुमातरमद्रिकन्यां
प्रेम्णा गणेशमनुनीय शिवं प्रणम्य।
कैलासतो निरगमन्निजकर्मखिन्न
स्तप्यन्त एव विहिताघभरैर्हि सन्तः॥१००॥

कृपा टीका—इसके अनंतर परशुरामजी पर्वतकन्या गुरुमाता को प्रसन्न करके एवं गणेश जी को मनाकर एवं भगवान शंकर को प्रणाम करके अपने कर्म से खिन्न हुए मन से कैलास पर्वत से निकलकर आश्रम आ गये क्योंकि शान्त लोग अपने किये हुए पापों का प्रायश्चित पश्चात्ताप के रूप में करते हैं॥१००॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इत्थं शुभे भार्गवराघवीये भव्ये महाकाव्य उदारवृत्ते।**
**श्रियै सदा नः कविरामभद्राचार्यप्रणीते नवमोऽस्तु सर्गः॥१०१॥**

**कृपा टीका**—इस प्रकार कल्याणकारी भव्य सुन्दर छन्दोंवाले महाकवि रामभद्राचार्य द्वारा श्रीभार्गवराघवीयम् नामक इस महाकाव्य में प्रस्तुत नवम सर्ग हम लोगों की सम्पत्ति प्रपत्ति और लक्ष्मी के लिए सदैव उपस्थित रहे॥१०१॥ उपजाति।

**इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामिरामभद्राचार्यप्रणीते श्रीभार्गवराघवीये महाकाव्ये "एकदन्तनाशनं" नाम नवमः सर्गः।**

**॥श्रीराघवः शन्तनोतु॥**

इस प्रकार तुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य द्वारा प्रणीत भार्गदराघवीयम् नामक महाकाव्य में 'एकदन्तनाशन' नामक नवम सर्ग सम्पन्न हुआ॥

॥श्री राघवः शन्तनोतु॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीमद्राघवो विजयते ॥

# अथ दशमः सर्गः

निहत्य तं संयति कार्तवीर्यं सपुत्रपौत्रामितसैन्यवीरम्।
रामो रमेशांशकलाकलापो निर्विज्य चापो गिरिमध्युवास॥१॥

**कृपा टीका**—इस प्रकार पुत्रों, पौत्रों, असंख्य सैनिक वीरों के साथ उस प्रतापी कृतवीर्यपुत्र सहस्रार्जुन का युद्ध में वध करके भगवान नारायण की कलाओं के समूह से सम्पन्न परशुराम जी अपनी धनुष की प्रत्यंचा पूर्णरूप से उतारकर महेन्द्र पर्वत पर निवास करने लगे॥१॥ यहाँ श्लोक २४ तक इन्द्रवज्रा छन्द है।

गिरौ वसन् वल्कलवस्त्रवाशी राशीभवन् ब्राह्मणसद्गुणानाम्।
काशीशपादाम्बुजचित्तवृत्तिराशीरिवासीद्द्विजदेवतानाम्॥२॥

**कृपा टीका**—वल्कल वस्त्र धारण किये हुए सभी ब्रह्मणोंचित सद्गुणोंकी राशि जैसे प्रतीत हो रहे काशीश्वर भगवान शंकर के श्रीचरणकमलों में अपनी चित्तवृत्ति लगाये हुए महेन्द्र पर्वत पर निवास कर रहे परशुराम जी ब्राह्मणों और देवताओं के आशीर्वाद के जैसे लग रहे थे।

अव्याहताशम्भुवरप्रसादात् गतिर्गतिज्ञस्य महामहिम्नः।
ब्रह्माण्डकोटिष्विपि नो विजघ्ने भूतेष्विवोत्सङ्गभुवो द्विजेन्दोः॥३॥

**कृपा टीका**—जीवों के गति के वेत्ता महामहिमाशाली परशुरामजी की अव्याहत गति सम्पूर्ण प्राणियों में उत्संग अर्थात् ब्रह्माजी की गोद से उत्पन्न हुए भगवान नारद जी की गति की भाँति ही करोड़ों भुवनों में कहीं भी बाधित नहीं होती थी॥३॥

अनेकशः शुद्धसुविप्रबालान्स शिक्षयन्नास्त समस्तशास्त्रम्।
अध्यापनं वेदमुखं द्विजानां निर्हैतुकं धर्ममुदाहरन्ति॥४॥

**कृपा टीका**—परशुराम जी अनेक शुद्ध श्रेष्ठ ब्राह्मण बालकों को समस्त शास्त्रों की शिक्षा दिया करते थे क्योंकि वेदप्रधान अध्यापन को ही मनीषीगण ब्राह्मणों का निष्कारण धर्म कहते हैं॥४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निःस्वार्थविप्रः सुबटुं कुलीनं प्रध्यापयेच्चेच्छ्रुतिमूलशास्त्रम्।
वैकुण्ठलोके स महीयमानो ब्रह्माप्नुयाच्छास्त्रधनो हि विद्वान्।।५।।

**कृपा टीका**—यदि ब्राह्मण निःस्वार्थ भाव से कुलीन ब्राह्मण वटु को शस्त्र और शास्त्र की शिक्षा देता है तो उसे वैकुण्ठ लोक में पूजा प्राप्त होती है और अन्त में परब्रह्म परमात्मा को प्राप्त कर लेता है क्योंकि विद्वान का शास्त्र ही धन है।।५।।

ये छात्रतः किञ्चिदिहाहरन्ति विप्रा न ते ब्राह्मणलाञ्छनानि।
पुत्रीयतिच्छात्रममोघविद्ये विप्रे श्रुतिर्वर्षति वत्सलाम्भः।।६।।

**कृपा टीका**—जो ब्राह्मण विद्यार्थी से धन लेते हैं वे तो ब्राह्मणकुल के कलंक स्वरूप होते हैं। जो गुरु छात्र को अपना पुत्र समझता है उसकी विद्या अमोघ हो जाती है और श्रुति भगवती भी उस पर वत्सलरस की वर्षा करती हैं।।६।।

अभेदबुद्धिः सुतशिष्ययोर्यः षट्कर्मसन्त्याजित्षड्विकारः।
त्रिकालसन्ध्योविहिताग्निहोत्र स ब्राह्मणो देव इहास्ति साक्षात्।।७।।

**कृपा टीका**—जो पुत्र और शिष्य में अभेदबुद्धि रखता है जिसने यजन याजन अध्ययन अध्यापन दान एवं परिग्रह इन छः कर्मों द्वारा अपने काम क्रोध, लोभ, मोह, मद मात्सर्य इन छः विकारों को समाप्त कर लिया है, जो त्रिंकाल संध्या एवं अग्निहोत्र करता है वह ब्राह्मण साक्षात् पृथ्वी का देवता ही है।।७।।

एवं भृगूणां प्रवरोऽनवद्यो मुखप्रभाव्रीडितपार्वणेन्दुः।
समाचरन् ब्राह्मणवर्णधर्मान् जिगाय लोकान्तपसा समस्तान्।।८।।

**कृपा टीका**—इस प्रकार अपने मुख की कान्ति से पूर्णिमा के चन्द्र को लज्जित करने वाले भृगुवर परशुराम जी ने निंदारहित होकर ब्राह्मणवर्णोचित धर्मों का पालन करते हुए अपनी तपस्या से तीनों लोकों को जीत लिया।।८।।

स ब्रह्मचर्यव्रतिनां वरिष्ठो जितेन्द्रियो ब्राह्मणधर्मनिष्ठः।
गतस्पृहस्त्यक्तसमस्तभोगो रोगानशेषान् विनिनाय चैत्यान्।।९।।

**कृपा टीका**—ब्रह्मचारियों में श्रेष्ठ इन्द्रियों के विजेता एवं ब्राह्मणधर्म में निष्ठा रखने वाले स्पृहारहित तथा समस्त भोगों को त्याग करके अलौकिक आचरण

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

करनेवाले परशुराम जी ने सम्पूर्ण मानसिक रोगों को पहले से ही अपने हृदय से दूर से ही फैंक दिया था॥९॥

**दिने भ्रमस्तापसवृन्दगेहान् लोकान्पुनानः पदपङ्कजाभ्याम्।**
**रात्रौ गिरावास्त स कश्यपाज्ञां सम्मन्यमानो जननीमिवाद्यः॥१०॥**

**कृपा टीका**—आदि पुरुष परशुराम जी दिन में योतपसियों की कुटियों में भ्रमण करते और अपने श्री चरणकमलों से जीवों को पवित्र करते थे तथा रात्रि में अपनी माँ की भाँति कश्यप जी की आज्ञा का सम्मान करते हुए महेन्द्र पर्वत पर ही निवास करते थे॥१०॥

**कदाचिदास्थाय विविक्तदेशं मतिं समाधाय महानुभावः।**
**विचारयन् विग्नमना मनस्वी स्वपूर्वकृत्यं न स साधु मेने॥११॥**

**कृपा टीका**—किसी समय महान प्रभाव वाले मनस्वी परशुराम जी ने उद्विग्न मन से एकान्त में बैठकर बुद्धि को समाहित करके पूर्वकृत्य पर विचार करते हुए उसे उचित नहीं माना॥११॥

**अहो मया कार्यमकारि नूनं क्रोधौर्वसंशुष्कशमार्णवेन।**
**यद् ब्रह्मणःशाश्वतसारभूतां क्षमां जहामिस्म मणिं फणीव॥१२॥**

**कृपा टीका**—अरे क्रोधरूप वडवानल से शान्तिरूप सागर के सोख लिये जाने के कारण मेरे द्वारा बहुत अनुचित कार्य किया गया क्योंकि मैंने सर्प की मणि की भाँति ब्राह्मण की शाश्वत तत्वबोधभूत क्षमा को छोड़ दिया॥१२॥

**क्षमाधनं ब्राह्मणपुङ्गवानां तामत्यजं क्रोधवशंवदोऽहम्।**
**सोऽयं निरस्ताखिलसारसत्वो भस्त्रेव जीवामि मृतो जगत्याम्॥१३॥**

**कृपा टीका**—क्षमा ही श्रेष्ठ ब्राह्मणों का धन है जिसे मैंने क्रोध के वश में होकर छोड़ दिया वही मैं समस्त तत्व एवं सत्वों से रहित होकर जगत में मरा हुआ भी बढ़ई की धौंकनी की भाँति मात्र श्वास लेते हुए जी रहा हूँ॥१३॥

**तातं हतं जीवयितुं क्षमोऽपि यत्क्षत्रियाणां कदनं ह्यकार्षम्।**
**तन्नानुरूपं विमलान्वयस्य धिङ्मां नृशंसं कृतजीवहिंसम्॥१४॥**

**कृपा टीका**—मरे हुए पिताश्री को जीवित करने में समर्थ होते हुए भी जो मैंने क्षत्रियों का निरर्थक वध किया वह मेरे निर्मल कुल के अनुरूप नहीं था। इस

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रकार निरर्थक जीव हिंसा करने वाले मुझ नृशंस को धिक्कार है॥१४॥

**सर्पोऽपि बालेषु दयां करोति क्रूरं प्रकृत्या परमं यमाहुः।**
**गर्भार्भकाणां प्रविधाय हत्यामहं ततः क्रूरतरोऽस्मि जातः॥१५॥**

**कृपा टीका**—जिसे स्वभाव से बहुत निर्दय कहते हैं वह सर्प भी बालकों पर दया करता है अर्थात् उन्हें नहीं डसता, परन्तु गर्भस्थ शिशुओं की हत्या करके मैं तो सर्प से भी अधिक क्रूर हो गया हूँ॥१५॥

**त्रिसप्तकृत्वो जगतीमनिन्द्यां विधाय वीर्याद्विधवामिवाहम्।**
**तदश्रुधाराकलुषीकृतात्मा वाच्यो न किं स्यां भुवनेषु मन्दः॥१६॥**

**कृपा टीका**—अहो मैंने अपने-अपने पराक्रम से यह निर्दोष पृथ्वी इक्कीस बार विधवा जैसी बनाई अर्थात् पृथ्वी के स्वामी राजाओं का इक्कीस बार वध किया। उसी पृथ्वी की अश्रुधारा से सजा हुआ मैं क्या संसार में निंदित नहीं होऊँगा?॥१६॥

**पिताऽपि सप्तर्षिगणं प्रविष्टो दीर्घायुराप्तो विशदप्रतिष्ठः।**
**परं यशश्चन्द्रगतंकलङ्कं निर्दोषहत्याख्यमहं बिभर्मि॥१७॥**

**कृपा टीका**—देखो तो मेरे पिताश्री भी सप्तर्षि मण्डल में प्रविष्ट हुए उन्हें दीर्घ आयु तथा निर्मल प्रतिष्ठा मिली। केवल मैं ही यशश्चन्द्र में कलंक की भाँति निर्दोष हत्या करके यह पाप ढो रहा हूँ॥१७॥

**यद्वा न चैते पतयो धरण्या भारायमाणाः कृतकिल्विषाश्च।**
**तानेव हत्वा निशितैक्षुरप्रैः लघूकृतोभूमिभरो मयाऽयम्॥१८॥**

**कृपा टीका**—अथवा ये राजा पृथ्वी के स्वामी नहीं थे ये तो पाप करके भूमि के भार वन गये थे। उन्हींको नुकीले बाणों से मारकर मेरे द्वारा पृथ्वी का भार ही हल्का किया गया है॥१८॥

**तथापि तत्खेदविनोदनार्थं विनिश्चितो मे परमः प्रयत्नः।**
**भूत्वा परब्रह्म मनुष्यलिङ्गं रामाख्यमेतत्तनयापतिःस्यात्॥१९॥**

**कृपा टीका**—फिर भी इस पृथ्वी के कष्ट को नष्ट करने के लिए मेरे द्वारा एक प्रयत्न निश्चित किया गया है। भविष्य में परब्रह्म भगवान श्रीराम ही मनुष्य शरीर धारण करके पृथ्वीपुत्री सीता जी के पति होंगे॥१९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**भूमेश्च जामातृवराय भूम्ने शस्त्रच्छलेनार्पितकार्यभारः।**
**तं क्षामयन्पूर्वकृतापराधान् वात्सल्यपात्रं भविता क्षमायाः।।२०।।**

**कृपा टीका**—फिर मैं पृथ्वी के जामाता श्रीराम जी को शस्त्रों के समर्पण के बहाने अपना कार्यभार सौंपकर पूर्व किये हुए अपराधों को प्रभु से क्षमा कराकर पृथ्वी का वात्सल्यभाजन बन जाऊँगा।।२०।।

**यद्यप्ययं संयति कार्तवीर्यो नीतो मया वीरगतिं तथापि।**
**भारो हि भूमेरधुनापि जाग्रत् स रावणो रावयति त्रिलोकीम्।।२१।।**

**कृपा टीका**—यद्यपि युद्ध में कार्तवीर्य को मैंने वीरगति दे दी है अर्थात् सहस्रार्जुन का वध कर दिया है फिर भी इस समय भी रावण नामक भूमि का भार जागरूक होता हुआ तीनों लोकों को रुला रहा है।।२१।।

**न रावणो व्यक्तिविशेष एष प्रतीकभूतः खलसंस्कृतेश्च।**
**तन्नाशने नाहमलं लघुत्वात् ध्वान्तं न चोडुः क्षमते निहन्तुम्।।२२।।**

**कृपा टीका**—यह रावण कोई व्यक्ति विशेष नहीं है यह तो राक्षस संस्कृति का ही प्रतीक है इसका नाश मैं छोटा सा अंश नहीं कर सकता। इसे तो पूर्ण ब्रह्म श्रीराघव ही मार सकते हैं। क्योंकि अंधकार को छोटा सा तारा नहीं नष्ट कर सकता।।२२।।

**रामः स्वरूपं हि मनुष्यताया राष्ट्रस्य वै मङ्गलनामधेयम्।**
**स एव हत्वा दशकण्ठमाजौ लोकान्समस्तान्सुखिनो विदध्यात्।।२३।।**

**कृपा टीका**—क्योंकि श्रीराम मनुष्यता के स्वरूप एवं राष्ट्र के परम मंगल हैं, वे ही युद्ध में रावण को मारकर तीनों लोकों को सुखी कर सकते हैं।।२३।।

**हे राम हे राघव रावणारे हे जानकीनेत्रचकोरचन्द्र।**
**हे दीनबन्धो करुणैकसिन्धो त्रायस्व लोकं ननु राक्षसेन्द्रात्।।२४।।**

**कृपा टीका**—हे राम हे राघव हे रावण के शत्रु हे जानकी जी के नेत्रचकोर के चन्द्रमा हे दीनों के बंधु हे करुणा के एकमात्र सागर इस राक्षसेन्द्र रावण से संसार की रक्षा कर लीजिए।।२४।। इन्द्रवज्रा।

**इति व्यवस्यात्मनि भार्गवेन्द्रः प्रणम्य रामं प्रभविष्णुमीशम्।**
**तेपे तपस्तापितषड्विकारस्तपःप्रधानं किल विप्रमाहुः।।२५।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तस्मिन् हते संयति कार्तवीर्ये कुठारहस्तेन च भार्गवेण।**
**लङ्केश्वरोऽपास्तसमस्तशङ्को निरङ्कुशो मत्तकरीव जातः।।२६।।**

**कृपा टीका**—इस प्रकार निश्चय करके तथा सर्वसमर्थ प्रभु श्रीराम को प्रणाम करके परशुराम जी ने छहों विकारों को तपाते हुए घोर तप किया क्योंकि ब्राह्मण को तपस्या प्रधान कहते हैं। कुठारपाणि परशुराम जी द्वारा युद्ध में कार्तवीर्य का वध किये जाने पर सभी आशंकाओं से मुक्त रावण मतवाले हाथी की भाँति हो गया॥२५-२६॥ यहाँ से श्लोक ५५ तक उपजाति छन्द है।

**क्रीडामृगो येन कृतोऽङ्गनानां वन्दीकृतो भग्नबलावलेपः।**
**तस्मिन्मृते राक्षसराजराजो निष्कण्टकं लोकमिमं स मेने।।२७।।**

**कृपा टीका**—जिस सहस्रबाहु ने रावण के बल अहंकार को चूण कर उसे बंदी बनाकर अपनी पत्नियों का क्रीड़ामृग बना लिया था उसी सहस्रबाहु के मर जाने पर राक्षसराज ने सारे संसार को अपने लिए निष्कंटक मान लिया॥२७॥

**हते प्रतिद्वन्द्विनि हैहयेशे स रावणो घोरतरो बभूव।**
**राहूपरागापगमे पपीर्वापापी प्रभावोद्धतभूरिबाहुः।।२८।।**

**कृपा टीका**—अपने प्रतिद्वन्द्वी हैहयराज के मारे जाने पर प्रताप के कारण उद्धत बाहुओं वाला वह पापी रावण राहु के ग्रहण से मुक्त सूर्य की भाँति पूर्व की अपेक्षा अधिक भयंकर हो गया॥२८॥

**पुलस्त्यवंशामलचन्द्रमोऽङ्कः पौलस्त्यपुत्राम्बुधिनीचपङ्कः।**
**विरिञ्चसृष्टीन्दुकलाकलङ्को लोकान्समस्तान्स्मरुजत्यशङ्कः।।२९।।**

**कृपा टीका**—पुलस्त्य वंशरूप चन्द्रमा की कालिमारूप तथा पुलस्त्य के पुत्र विश्रवारूप समुद्र का कीचड़ एवं ब्रह्मसृष्टिरूप चन्द्रकला का कलंक यह रावण निर्भीक होकर लोगों को सताता था॥२९॥

**मन्दोदरीकम्रकलत्रकान्तः स्ववीर्यसंक्षोभितदिग्दिगन्तः।**
**उत्खातदिक्कुञ्जरदिव्यदन्तो दशाननोऽभूद् बलवान् दुरन्तः।।३०।।**

**कृपा टीका**—मंदोदरी जैसी अपूर्व सुन्दरी जिसकी पत्नी थी तथा जिसने अपने पराक्रम से सम्पूर्ण दिग्दिगंत को क्षुब्ध कर दिया था और जिसने दिग्गजों के भी दिव्य दाँतों को उखाड़ लिया था ऐसा वह रावण सहस्रबाहु के वध के पश्चात्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इतना अधिक बलवान हो चुका था कि उसका अन्त भी जीवमात्र के लिए अत्यन्त दुष्कर हो गया था॥३०॥

**विरिञ्चितोलब्धवरोऽतिधृष्टः स्वमौलिमालार्चितचन्द्रचूडः।**
**प्रवृद्धपंक्तिद्वयबाहुदण्डसिन्धुष्वमर्त्यान् जलयाम्बभूव॥३१॥**

**कृपा टीका**—ब्रह्माजी से वरदान पाकर रावण अत्यन्त धृष्ट हो गया था उसने अपने शिररूप भाला से भगवान शंकर की पूजा की थी और अपने बढ़े हुए भुजारूप बीस महासागरों में मरणधर्म से मुक्त देवताओं को भी डुबा दिया था।३१॥

**सकुम्भकर्णानुजवीर्यविश्वविश्वासकृच्छक्रसपत्नपुत्रः।**
**रेजे विषाणद्वयदत्तदर्पो दशाननो दानकरीव मत्तः॥३२॥**

**कृपा टीका**—रावण कुम्भकर्ण जैसे छोटे भाई के पराक्रम पर सम्पूर्ण विश्वास करता था तथा इन्द्र का विजेता मेघनाथ उसका पुत्र था। वह कुम्भकर्ण और मेघनादरूप दो वीरों से इतना गर्वीला हो चुका था जैसे दो दाँतों से युक्त मदोन्मत्त पागल हाथी॥३२॥

**जहार यक्षामरनागकन्या लुलुण्ठ रत्नानि दिवौकसां सः।**
**विरावयन् रावण आर्तलोकान् तृणाय मत्वा विबुधान् बबाधे॥३३॥**

**कृपा टीका**—रावण ने यक्ष देवता एवं नागकन्याओं का हरण किया। देवताओं के रत्न लूटे। सम्पूर्ण प्राणियों को रुलाते हुए देवताओं को तिनका समझकर उन्हें बहुत सताया॥३३॥

**राजद्भवानीभवभूतभव्यं कैलासमुत्तोल्य कुतूहलेन।**
**स्वकन्दुकीकृत्यकलंकराग्रैः खेलन् सखेलं भ्रमयाम्बभूव॥३४॥**

**कृपा टीका**—रावण ने खेल खेल में, पार्वती भगवान् शंकर एवं भूतगणों की भव्यता से सुशोभित कैलास पर्वत को कौतुक से उठाकर उसे गेंद की भाँति खेलते हुए बार बार घुमाया॥३४॥

**एवं विजित्यामरराजलोकं सबाधमानोऽखिलजीवलोकम्।**
**दशाननावग्रहउग्रवीर्यः संशोषयामास मरुत्सुशस्यम्॥३५॥**

**कृपा टीका**—इस प्रकार इन्द्र लोक को जीतकर मर्त्यलोक को कष्ट देते हुए रावण नामक उग्र दुष्काल ने देवगण रूप हरी फसलों को सुखा दिया॥३५॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**निर्मथ्य देवान् स विजित्य राज्ञो निहत्य वीरान् दशतीव्रधन्वा।**
**लङ्केश्वरो रोषणविक्रमोऽयं सुधर्मशीलान् व्यथयाम्बभूव॥३६॥**

**कृपा टीका**—दश कठोर धनुष धारण करने वाला क्रोध एवं पराक्रमी लंकापति रावण देवताओं को पराजित करके राजाओं पर विजय प्राप्त कर वीरों की हत्या करके धर्मशीलों को सताने लगा अर्थात् धार्मिकों को धर्माचरण से रोकने लगा॥३६॥

**नैनं प्रकामं सविता तताप तदङ्गनामण्डनतान्तिभीरुः॥**
**रात्रौ निशेषोऽपि निशाचरेशं सुधामयूखैः शिशिरैः सिषेवे॥३७॥**

**कृपा टीका**—रावण की पत्नियों के पुष्प आभूषणों की शिथिलता के डर से सूर्यनारायण भी रावण के सामने बहुत कम तपा करते थे और रात्रि में चन्द्रमा भी अपनी शीतल अमृतमयी किरणों से राक्षसराज की सेवा करते थे॥३७॥

**अशोकपत्रावलिपातभीत्या मन्दं ववौ वायुरतीव तस्य।**
**निजातपत्रप्रहितःप्रचेताः तं वारयामास सदातपेभ्यः॥३८॥**

**कृपा टीका**—अशोक वन के पत्ते गिर न जायें इस डर से रावण के यहाँ वायु बहुत धीरे धीरे बहता था और वरुण देवता अपना छत्र भेजकर रावण की सदा धूप से रक्षा करते थे॥३८॥

**न यज्ञयागा न च धर्मचर्या न वा पुराणानि न वेदपाठः।**
**अधर्ममूलां जगतीं विधाय धर्मस्य चक्रे निरपेक्षवादम्॥३९॥**

**कृपा टीका**—रावण के यहाँ यज्ञ याग नहीं होते थे उसके शासनकाल में कहीं भी धर्माचरण नहीं होता था न ही पुराणवाचन और न ही वेदपाठ होता था। इस प्रकार उसने संसार को अधर्मभय बनाकर धर्म का निरपेक्षवाद फैला रखा था॥३९॥

**तस्मिन् प्रधावत्यभिदेवलोकं वीर्योद्धते रावण उग्रवेगे।**
**भूमिर्जलेमत्तगजेन्द्ररुढ़ा प्रकम्पिता नौरिव वातमूढा॥४०॥**

**कृपा टीका**—उग्रवेद वाले पराक्रम से उद्धत रावण के देवलोक पर आक्रमणार्थ दौड़ते समय मतवाले हाथी से युक्त वायु से झकझोरी हुई तीव्र धारावाले जल में पड़ी छोटी नौका के समान पृथ्वी काँप उठती थी॥४०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जाता यदा धर्ममयस्य हानिः सुदुःसहाकारणपूरुषस्य।
तदैव गोरूपधराधरित्री श्रृङ्गं सुमेरो रुदती जगाम॥४१॥

**कृपा टीका**—जब कारण पुरुष सनातन धर्म की भयंकर हानि हुई तब पृथ्वी गौ का रूप धारण करके रोती हुई सुमेरु पर्वत के शिखर पर गयी॥४१॥

ब्रह्मा तया साकमथेन्दुमौलिं निवेद्य तेनापि सहाजगाम।
साकेतलोकं विरजं विशोकम् करीव तप्तश्च सुधातडागम्॥४२॥

**कृपा टीका**—ब्रह्मा जी पृथ्वी के साथ भगवान शंकर से चर्चा करके रजोगुण एवं शोक से रहित साकेतलोक उसी प्रकार गये जैसे ग्रीष्मऋतु की धूप से तपा हुआ हाथी अमृत के तालाब में जाता हो॥४२॥

स रत्नसिंहासनमादिदेवं देवाधिदेवं श्रितसर्वसेवम्।
ददर्श नीलाब्जघनावदातं सीतापतिं सेवकपारिजातम्॥४३॥

**कृपा टीका**—ब्रह्मा जी ने साकेतलोक में रत्नसिंहासन पर आसीन सभी के सेव्य नीले कमल एवं बादल के समान श्यामल अपने भक्तों के लिए कल्पवृक्ष स्वरूप सीतापति श्रीराम के दर्शन किये॥४३॥

दूर्वादलाम्भोजतमालकन्दकलिन्दजातीसिमयूरकण्ठैः।
दत्तोपमाम् कोटिमनोजशोभाम् प्रबिभ्रतं श्यामलमूर्तिमीड्याम्॥४४॥

**कृपा टीका**—दूर्वादल, कमल, तमाल, मेघ, यमुना जी, तीसी के फूल एवं मोर के कण्ठ से जिनको उपमा दी जाती रही हैं ऐसे करोड़ों कामदेवों की शोभा को चुराने वाली मनोहर श्यामल मूर्ति धारण किये हुए भगवान श्रीराम को ब्रह्माजी ने देखा॥४४॥

मुनीन्द्रसन्मानसराजहंसनीडायितं रामपदारविन्दम्।
मन्दाकिनी यन्मकरन्दभूता पूता समस्तं भुवनं पुनाति॥४५॥

**कृपा टीका**—जिनकी मकरन्दरूप परम पवित्र गंगाजी सम्पूर्ण संसार को पवित्र करती हैं ऐसे प्रभु श्रीराम के चरणारविन्द अनेक मुनियों के निर्मल मनरूप राजहंसों के नीड अर्थात् घोंसले बन गये थे॥४५॥

वसन्तबालार्ककराभिरामं कदम्बकिञ्जल्कलसल्ललामम्।
सुकिङ्किणीमण्डितचारुकट्या पीतंवसानं पटमप्रमेयम्॥४६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—वसंतकालीन बालसूर्य की किरणों के समान सुन्दर तथा कदम्ब पुष्प के पराग के समान एवं पद्मराग जैसे दिव्य पीताम्बर को रत्नजटित मेखला से सुशोभित कटिप्रदेश में धारण करते हुए प्रत्यक्षादि प्रमाणों से भी परे भगवान श्रीराम के ब्रह्मा जी ने दर्शन किये।।४६।।

**कलिन्दजावर्तसमाननाभिं स्वल्पोदरं तं त्रिवलीमनोज्ञम्।**
**निगूढ़जत्रुं हतसर्वशत्रुं निसर्गदृक् स्वस्त्ययनं सुराणाम्।।४७।।**

**कृपा टीका**—यमुना जी के भ्रमर के समान गंभीर नाभि वाले अल्प उदर तथा तीन रेखाओं से सुन्दर छिपी हुई अस्थियों से युक्त, सम्पूर्ण शत्रुओं के नाशक एवं देवताओं के स्वाभाविक सौन्दर्य के पिपासु नेत्रों के लिए स्वस्त्ययन स्वरूप श्रीराम को ब्रह्माजी ने निहारा।।४७।।

**सीतासमालिङ्गनलब्धरोम श्रीवत्सलक्ष्माङ्कितविप्रपादम्।**
**वक्षे लसत् कौस्तुभसक्तकण्ठं केयूरमालादि विभूषणाढ्यम्।।४८।।**

**कृपा टीका**—श्री सीताजी के समालिङ्गन से रोमांचित श्रीवत्सलांछन एवं ब्राह्मण के चरणचिन्ह से विभूषित वक्षस्थल तथा कौस्तुभ से युक्त कण्ठ एवं केयूरमाला आदि विभूषणों से सुसज्जित भगवान् श्रीराम को ब्रह्माजी ने देखा।।४८।।

**आजानुबाहुं रिपुचन्द्रराहुं शुभे निषङ्गेऽसुरदर्पभङ्गे।**
**दधानमिभ्यारिसमप्रभावस्कन्धं यथा वीररसं धृताङ्गम्।।४९।।**

**कृपा टीका**—शत्रुरूप चन्द्रमा के राहु एवं आजानबाहु राक्षसों के अहंकार को नष्ट करने वाले दो तरकश धारण किये हुए सिंह के समान प्रभावशाली स्कन्ध वाले एवं शरीरधारी वीर रस जैसे भगवान श्रीरामको ब्रह्माजी ने निहारा।।४९।।

**सुवर्णपुङ्खाशुगमण्डिताभमधिज्यचापं स्वकरे दधानम्।**
**सुरेन्द्रचापाश्रितसौभगश्री प्रावृट्पयोवाहमिवात्तदेहम्।।५०।।**

**कृपा टीका**—सुवर्ण के अग्र भाग वाले श्रेष्ठ बाण से शोभायमान चढ़ी हुई प्रत्यंचा से युक्त सुन्दर धनुष श्रीहस्तकमल में धारण किये हुए मानो इन्द्रधनुष की शोभा से युक्त शरीरधारी मेघ के समान भगवान् श्रीराम को देखा।।५०।।

**कठोरराकेन्दुसमाभिरामं समुल्लसत्कुण्डलसत्कपोलम्।**
**नवीनराजीवदृगाननं यन्मन्दस्मितं तस्य जनस्पृहार्हम्।।५१।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—भगवान् श्रीराम का पूर्णिमा के पूर्णचन्द्र के समान सुन्दर सुशोभित कुंडल से अलंकृत कपोलवाले नवीन कमल के समान नेत्रयुक्त जो भगवत भक्तों की स्पृहा का केन्द्र था ऐसे मुखारविन्द को ब्रह्माजी ने निहारा॥५१॥

**लसल्ललाटे रुचिरोर्ध्वपुण्ड्रं श्रीमध्यगं सादरमादधानम्।**
**नीलाद्रिमुच्चैः कलितत्रिवेणीं सम्भावयन्तं ननु तीर्थराजम्॥५२॥**

**कृपा टीका**—आदरपूर्वक मध्य में लालश्री के साथ ऊर्ध्वपुंड की दो रेखाओं को श्रेष्ठ ललाट में धारण करते हुए गंगा यमुना सरस्वती की धाराओं से युक्त तीर्थराज प्रयाग कों ही सम्मानित करते हुए मानो विशाल नीले पर्वत को ही ब्रह्माजी ने नेत्र का विषय बनाया॥५२॥

**किरीटमध्यादथ तस्य केशाश्चकासिरे वक्रतयाभिरामाः।**
**मन्ये सुधालोभत एव भृङ्गाः अभीन्दुमेते चटुला बभूवुः॥५३॥**

**कृपा टीका**—भगवान श्रीराम के घुँघराले होने से सुन्दर काले काले केश कुछ मुख की ओर लटककर बहुत सुन्दर लग रहे थे। मैं मानता हूँ कि चन्द्रमा के अमृतपान के लालच से ही भ्रमरवृन्द पूर्ण चन्द्र के समक्ष चञ्चल होकर मँडरा रहे थे॥५३॥

**विराजमानामथवामभागे सीतां लसच्चम्पकचारुशोभाम्।**
**नीलाम्बुदं भूषयितुं च शम्पां स्थितामिवाश्रित्य सुतारकालीम्॥५४॥**

**कृपा टीका**—चम्पा की शोभा को भी सुशोभित करने वाली भगवान श्रीराम के वाम भाग में विराजमान सीता जी इस प्रकार विराजमान हो रही थीं मानो तारागणों से युक्त नीले मेघ को विभूषित करने के लिए उससे चिपककर बिजली स्थित हो, ऐसी शोभा से युक्त भगवान श्रीराम को ब्रह्माजी ने निहारा॥५४॥

**निरीक्ष्य तं योगिदुरापमूर्तिं सीताभिरामं नरदेवलिङ्गम्।**
**ब्रह्मा चतुर्भिर्वदनैश्च भक्त्या प्रचक्रमे स्तोतुमनल्पवृत्तैः॥५५॥**

**कृपा टीका**—इस प्रकार योगिजनों के लिए दुर्लभ सीताजी से सुन्दर लगने वाले मनुष्य वेश में वर्तमान प्रभु श्रीराम के दर्शन करके ब्रह्माजी भक्तिपूर्ण हृदय से चारों मुखों द्वारा प्रभु की सुन्दर चरित्रों के साथ सुन्दर छन्दों में स्तुति करने लगे॥५५॥ यहाँ तक उपजाति छन्द है।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**जय जय जानकीनयन नीरजमेषरवे**
**चरितसुधाब्धिमग्न मुनिसिद्धसुरेन्द्रकवे।**
**जहि जहि रावणं समिति पादनमत्रिदशम्**
**हर हर भूतलस्य भरमीश निरस्तरसम्॥५६॥**

**कृपा टीका**—हे जानकी जी के नेत्रकमल के लिए मेष संक्रान्ति के पवित्र सूर्य आपकी जय हो, जिनके चरित्ररूप अमृत महासागर में मुनि, सिद्ध, श्रेष्ठ देवता और कविमग्न रहते हैं ऐसे हे चरित्रनायक आपकी जय हो जय हो। संग्राम भूमि में देवताओं को भी अपने चरण में झुका देने वाले ऐसे अजेय रावण को आपने मार डाला। हे ईश्वर जिसने जीव के आनन्द को नष्ट कर डाला ऐसे पृथ्वी के भार को आप हर लें, हर लें॥५६॥ यहाँ से श्लोक ८६ तक नार्कुटिक छन्द है।

**जय जय जानकीवदनचन्द्रचकोर विभो**
**जय जय जाह्नवीजनकपादपयोज प्रभो।**
**तव चरणारविन्दशरणान् मरणाभिमुखा-**
**नव भव भाववश्यविबुधान्हृतसर्वसुखान्॥५७॥**

**कृपा टीका**—हे जानकी मुखचन्द्र के चकोर सर्वव्यापक परमात्मा आपकी जय हो जय हो। अपने चरणकमल से गंगा जी को प्रकट करने वाले सर्वसमर्थ आपकी जय हो, जय हो। हे भगवान शंकर के भाव के वशीभूत प्रभो मरणासन्न एवं आपके चरणारविन्द की शरण आये हुए सभी सुखों से शून्य देवताओं की रक्षा कीजिए॥५७॥

**जय जय जानकी हृदयहर्षपयोधि विधो**
**त्रिदिवमनाथमात्मशरणं हृदि विद्धि विधो।**
**सदय विधत्स्व धत्स्व करुणां नृपमौलिमणे**
**दमय दशाननंदमितदूषणघोररणे॥५८॥**

**कृपा टीका**—हे श्री जानकी जी के हृदय के हर्ष सागर के लिए पूर्ण चन्द्रमा आपकी जय हो जय हो। हे श्रीवत्सलांछन आप सम्पूर्ण स्वर्ग को अनाथ और अपनी ही शरण में आया हुआ हृदय में समझें। हे राजाओं के मुकुटमणि हे दयालु आप हृदय में करुणा धारण करके हम सब पर उसका प्रयोग करें। हे दोषों के नाशक आप घोर संग्राम में रावण का दमन कर दें॥५८॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**जय जय जानकीश करुणावरुणालय हे**
**त्रिजगदिदं विनष्टविभवं परिपालय हे।**
**विततमनाथनाथविरुदं विनिभालय हे**
**धरणिमुपेहि दीनजनतामनुलालय हे।।५९।।**

**कृपा टीका**—हे जानकीपते आपकी जय हो, करुणा के महासागर आपकी जय हो। हे प्रभो धनधान्य से शून्य इस त्रिलोकी का पालन कीजिए। हे अनाथों के नाथ संसार में व्याप्त अपने अनाथ यश को संभाल कीजिए। हे परमेश्वर अब भारत वसुन्धरा पर अवतार लेकर दीन जनता को दुलारिये।।५९।।

**जय जय जानकीरमणमाधवमाधिपते**
**निजजनशोकसिन्धुघटजव्रतमञ्जुमते।**
**सुरकुलशालिमम्बुभिरलंसुजनैकगते**
**भुवमभिवर्षतर्षमभितोहरहाररते।।६०।।**

**कृपा टीका**—हे जानकीरमण हे मायापति हे महालक्ष्मी के स्वामी हे व्रत के कारण सुन्दर बुद्धिवाले, हे अपने भक्तों के शोकसागर के लिए अगस्त्य, हे सज्जनों के एकमात्र गन्तव्य स्थान, हे गणपति जी के प्रेमास्पद करुणा करके देवकुल रूपधान से युक्त पृथ्वी पर अपने कृपा जलधारा की वर्षा कीजिए और सर्वत्र व्याप्त दर्शन की पिपासा को दूर कीजिए।।६०।।

**जय जय जानकीसरसिजाननभृङ्गमनः**
**कुरु करुणां सुरेषु भवतात्तव तेषु मनः।**
**अलमधमेषु राम दयया दमयस्व खलम्**
**निशितशरैर्निहत्य निशिचारिणमात्तबलम्।।६१।।**

**कृपा टीका**—हे जानकी जी के वदनकमल के भ्रमरमन आपकी जय हो जय हो। हे प्रभो आप देवताओं पर करुणा करें और आपका मन उन पर सक्रिय हो जाए। हे श्रीराम अधमों पर दया करना उचित नहीं है अब तो तीखे वाणों से मारकर इस बलशाली एवं राक्षस रावण का दमन कीजिये।।६१।।

**जय जय जानकीहरिवधूवरवीर हरे**
**त्वयि वयमाश्रिता सुरवरे रणधीरवरे।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जहि जहि जिह्ममेनमिवजम्भममर्त्यपतिः
पुनरुदियात्सुरेषु तव पादसरोजरतिः॥६२॥

**कृपा टीका**—हे जानंकीरूप सिंहिनी के परमप्रेमास्पद पति वीर सिंह आपकी जय हो जय हो। हम अब तो आप जैसे देवश्रेष्ठ परमवीर पर आश्रित हैं जिस प्रकार जंभासुर को इन्द्र ने मारा था उसी प्रकार आप इस कपटी रावण का वध कीजिए जिससे देवताओं में एक बार फिर आप के श्रीचरणकमल के प्रति प्रेमभक्ति उदित हो जाये॥६२॥

जय जय जानकीमधुरमानसमन्दिर हे
भव भवभीमवारिनिधिमङ्गलमन्दर हे।
प्रणत पदाब्जदेवनिकरे करुणा क्रियताम्
शितशरतीर्थमेत्य दशमौलिरयं म्रियताम्॥६३॥

**कृपा टीका**—हे जानकी जी के मधुर मनमंदिर के देवता आपकी जय हो जय हो। हे भयंकर भवसागर के मथनार्थ मंगलमय मन्दराचल आप संसार की रक्षा करें। अपने चरणकमलों में प्रणतदेव समूह पर कृपा कीजिए। आपके तीक्ष्ण बाणरूप तीर्थ को प्राप्त कर यह दशसिर रावण शीघ्र मर जाये यही हमारी प्रार्थना है।६३॥

अगुणमलेपमेकरसमद्वयमेकमजम्
तदिहविदुःसरूपगुणधाममुपास्तगुणम्।
भिदमुभयोर्वदन्ति यदिहाश्रुतिसारविदः
नरकममी पतन्ति परमेश्वरभेददृशः॥६४॥

**कृपा टीका**—जिनको निर्गुण निर्लेप एकरस अद्वय अर्थात् माता पिता के संयोग से निरपेक्ष जन्मवाले अद्वितीय अजन्मा कहते हैं उन्हीं परमात्मा को शास्त्रज्ञ समस्त रूप गुणों के धाम और उपासनीय कल्याण गुणगणों से युक्त जानते हैं अर्थात् अगुण और सगुण में कोई भेद नहीं है। जो वेदतत्व से अनभिज्ञ मूर्ख लोग निर्गुण और सगुण में भेद कहते हैं वे परमेश्वर में भेददृष्टि वाले नरक में ही पड़ते हैं॥६४॥

जलहिमतुल्यमेकमुभयं सगुणं ह्यगुणम्
यदगुणमेकमनादि तत्सगुणमप्यमलम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रकटगुणं सगुणं वदन्ति भवकन्तममी
अगुणमतस्तिरोहितगुणं कथयन्ति बुधाः॥६५॥

**कृपा टीका**—वास्तव में तो जल और बर्फ के समान ही सगुण और निर्गुण दोनों एक ही हैं जो अद्वितीय अनादि और निर्गुण हैं वही निर्मल सगुण भी है जैसे जब जल अपने शीतलता गुण को पूर्णतः प्रकट कर लेता है और तापमान शून्य कक्षा से भी नीचे चला जाता है तब वही जल शीतलता गुण से जमकर बर्फ हो जाता है और जब तापमान के बढ़ने से जल का शीतलता गुण दब जाता है तब वह तरल जल बन जाता है पर दोनों परिस्थितियों में जल ही रहता है। ठीक उसी प्रकार जब आप परमात्मा अपने वात्सल्यादि गुणों को प्रकट करते हैं तब आपको विद्वान लोग सगुण कहते हैं और जब आप अपने गुणों को छिपा लेते हैं उस समय आपको निर्गुण कहा जाता है परन्तु दोनों ही अवस्थाओं में आपका परमात्मतत्व एकरस और अक्षत रहता है॥६५॥

यदि सगुणो भवान् सकलसद्गुणवान् न भवेत्
वयमिव तन्महाभवसमुद्रनिमग्ननराः।
कथमुतरेयुरीयुरथपारमपारनिधेः
किमु खलु कोऽपि कूपमपि रज्जुमुपेक्ष्य तरेत्॥६६॥

**कृपा टीका**—यदि सम्पूर्ण सद्गुणों के निधान आपश्री सगुण साकार न होते तो संसार महासागर में डूबे हम जैसे पामर प्राणी इस अपार संसार सागर से कैसे पार होते और इसका तट कैसे प्राप्त करते। हे नाथ क्या प्राणी कोई भी व्यक्ति बिना रस्सी के कुएँ को भी पार कर सकता है॥६६॥

यदगुणमस्तसर्वगुणकं प्रलपन्त्यबुधा
स्तदिह न जानते विमलवेदनिगूढगिरः।
यदगुणकं तदेव सगुणं द्वयमेकमहो
द्रुतघनयोर्जलस्य वपुषोः किमु तत्त्वभिदा॥६७॥

**कृपा टीका**—जो मूर्ख लोग अगुण शब्द का समस्त गुणों से शून्य अर्थ करते हुए प्रलाप करते हैं वे वास्तव में वेद की विमल वाणी की यथार्थता नहीं जानते वास्तव में जो निर्गुण है वही सगुण है क्या जल के तरल और घनरूप में तत्त्वतः कोई भेद है?॥६७॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रकटयसे यदा स्वजनभावरिरक्षिषया
गुणनिकरांस्तदैव सगुणं समुयन्ति जनाः।
भवसि यदा निलीनगुणकस्त्वमहेतुतया
विबुधगणास्तदाहुरगुणं भवकन्तमिमे॥६८॥

**कृपा टीका**—जब अपने भक्तों की भावना से वशीभूत होकर आप दिव्य गुणों को प्रकट् करते हैं तब आपको सगुण कहा जाता है और जब किसी भी हेतु के अभाव में आप अपने सभी गुणों को छिपा लेते हैं तब विद्वान लोग आपको निर्गुण कहते हैं॥६८॥

त्वमसि समाकृतिमांस्त्वमेव च निराकृतिक
स्त्वमगुणकस्त्वमेवसगुणः श्रुतिसारमिमम्।
इति मुनयो विभाव्य भगवंस्तवपादयुग–
प्लवमधिरुह्य तेरुरथघोरनिधिं मुदिताः॥६९॥

**कृपा टीका**—हे भगवन् आप ही समस्त आकारों के निधान सगुण साकार हैं तथा आप ही निर्गुण निराकार। इस प्रकार इस वेदसार को समझ कर मुनिगण आपश्री के युगल चरणकमलरूप जहाज पर चढ़कर इस घोर संसारसागर से पार हो गये॥६९॥

नहि खलु मायिका भवति देव समस्तगुणाः
भुवनभवाय भान्ति भवतीव नभस्युडवः।
गुणगुणिनोस्वरूपमनुबन्धमयुः श्रुतयः
प्रजहति नो भवन्तमिव वारिरसः सुगुणाः॥७०॥

**कृपा टीका**—हे परमेश्वर आपके गुण मायाकृत नहीं हैं जिस प्रकार आकाश में ताराधीश चन्द्रमा विराजते हैं उसी प्रकार ये समस्त गुणगण जगत के कल्याण के लिए आपमें विराजे हैं। श्रुतियों ने गुण और गुणी का आपश्री के साथ स्वरूपसम्बन्ध कहा है। श्रेष्ठ सद्गुण आपको उसी प्रकार कभी भी नहीं छोड़ते जैसे जल को रस॥७०॥

त्वयि सगुणत्वमेव भगवंस्त्वयि चागुणता
द्वयमपि मङ्गलाय भवतः पदकञ्जजुषाम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सगुणतनौ तथापि रमते मम राम मनः
किमु मधुपो विहाय वनजं मधुकेऽभिरमेत्।।७१।।

**कृपा टीका**—हे भगवन् आप में ही सगुणत्व तथा आपमें ही निर्गुणत्व शोभित होता है। क्योंकि आपके ये दोनों सगुणनिर्गुण स्वरूप आपके श्रीचरणकमल के सेवकों के लिए मंगलप्रद ही होते हैं तथापि हे भगवान राम, मेरा मन तो आपके सगुण साकार रूप में ही रमता है। भला बताइये, कहीं भँवरा कमल के मकरन्द को छोड़कर महुआ के फूल में रम सकता है?।।७१।।

अकलमयुर्दुरूहमगुणं सुलभं सगुणम्
तदिह वयं भजाम सगुणं भवभीतिमयाः।
भवसि यदा निरस्त परिहेयगुणोऽप्यगुणः
पुनरथ भासि दिव्य सुगुणैर्भगवन् सगुणः।।७२।।

**कृपा टीका**—विद्वान लोग निर्गुण रूप को कलारहित और अत्यंत दुरूह कहते हैं आपका सगुण रूप बहुत सुलभ है। इसलिए भवसागर से डरे हुए हम लोग तो आपके सगुण रूप का ही भजन करते हैं। जब आप हेय गुणों से दूर हो जाते हैं तब आप सगुण दशा में निर्गुण कहलाते हैं और जब दिव्य दयादि गुणों से युक्त होते हैं तब आपको सगुण कहा जाता है।।७२।।

तव विहितावतारमपि रूपमखण्डमजम्
विकृतिमुपैति नैव भगवन् क्वचिदप्यनघम्।
नहि विरजञ्च नीरमपिनीरजसंकुलितम्
कमलमलं जलं प्रकुरुतेऽमलमालिकुलम्।।७३।।

**कृपा टीका**—हे परमेश्वर अवतार लेने पर भी आपका स्वरूप अखंड और अजन्मा ही रहता है। आपका वह निष्पाप रूप कहीं से भी विकृत नहीं होता। हे भगवन् कमल से मंडित जल कभी भी मलिन नहीं होता प्रत्युत भ्रमरों से व्याप्त कमल तो जल को निर्मल ही बनाता है।।७३।।

अवतरणञ्च ते यदरणं भवभीतिमताम्
यदि न भवेत् भवाय भगवन्मघवानघवान्।
कथमिव पालयेज्जगदसौ खलभग्नबलो
वयमपि किं भवेम सुखिनो हृतगेहधनाः।।७४।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे भगवन् सम्पूर्ण प्राणियों को जो भवसागर से भयभीत हैं शरण देने वाला यदि आपका अवतार न होता तो फिर जगत्कल्याण के लिए दुष्टों की सेना से जिनके बल और सैनिक नष्ट कर दिये गये ऐसे दुःखयुक्त इन्द्र इस संसार का रक्षण कैसे करते और हम देवगण भी अपने सभी गृह कुटुम्बी धन से रहित होकर कैसे सुखी होते॥७४॥

**अनवतरन् भवानहह! वेत्तु किमार्तजनान्**
**कथमथ तारयेत् पतितलोकमशोकमनाः।**
**चरितमहामृतामरनदीमवगाह्य कथं**
**वयमथ रामभद्र भवतोऽभिभवेम रुजम्॥७५॥**

**कृपा टीका**—हे रामभद्र आप बिना अवतार लिये हुए आर्तजनों को कैसे समझ पाते और अवतार के बिना प्रसन्न मन से आप पतितों को भवसागर से कैसे तारते और हे रामभद्र हम लोग भी आपके चरित्रसुधा गंगा में स्नान करके इस संसार सागर से अपने मानसिक रोगों को कैसे दूर कर पाते॥७५॥

**नहि तव जन्मकर्मपरिपाकवशं भगवं**
**स्त्वमथ न लिप्यसे वियदिवाखिलकर्मफलैः।**
**इति सुधियो धिया धृतभवत्करुणैकबला**
**स्तृणमिव कर्मबन्धमपि भङ्क्तुमिभाप्रभवः॥७६॥**

**कृपा टीका**—हे भगवन् आपका जन्म और कर्म किसी कर्मफल के बस में नहीं होता क्योंकि आप आकाश की भाँति सम्पूर्ण कर्मफलों से लिप्त नहीं होते इस प्रकार विद्वान लोग आपकी करुणा का एकमात्र बल प्राप्त करके तिनकेको हाथी की भाँति संसारबंधन को नष्ट करने में समर्थ हो जाते हैं॥७६॥

**नहि तव नामरूपगुणजन्मचरित्रकथाः**
**कथयितुमीष्ट एष जन ईष्टनिसर्गतया।**
**यदि शतकोटिशेषशिवनारदवेदगिरो**
**गदितुमलं रजांसि धरणेर्ननु को गणयेत्॥७७॥**

**कृपा टीका**—हे परमेश्वर प्रकृति से ही कामी मैं आपके नाम, रूप, गुण, कर्म तथा चरित्रों की कथाएँ कहने में समर्थ नहीं हूँ। यदि करोड़ों शेष शिव नारद

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं वेदवाणी, आपका गुणानुवाद कदाचित् कर सकें तो कोई आपत्ति नहीं किन्तु असम्भव है क्योंकि पृथ्वी की धूल कणिकाओं को भला कौन गिन सकता है॥७७॥

**भवदवतारचारुचरितं श्रुति सोममयम्**
**सकृदपि ये पिबन्ति महदिन्दुमुखाद्गलितम्।**
**तृणमिव ते जहत्यहह मोक्षमुत त्रिदिवम्**
**क्वचिदपि किं चकोर इह निम्बरसे रुचिमान्॥७८॥**

**कृपा टीका**—हे परमात्मन् महापुरुषों के मुख चन्द्र से निर्गलित कानों के लिए अमृत के समान आपश्री के चारु चरित्रामृत जो महानुभाव एक बार भी पी लेते हैं वे स्वर्ग एवं मोक्ष को तिनके की भाँति छोड़ देते हैं। अहह क्या कभी चकोर नीम के रस में स्वाद का अनुभव कर सकता है॥७८॥

**तदलमहो विलम्ब्य करुणाघनसोमयघटा**
**घटयतु वृष्टिसृष्टिमभिभारतशस्यकुलम्।**
**दमय दशास्यनामदुखग्रहकं भगवन्**
**शामय शुचातपं तपनवंशकृतप्रभवः॥७९॥**

**कृपा टीका**—इसलिए हे प्रभो अब विलम्ब करना उचित नहीं है अब तो आपकी करुणासुधा घनघटा भारतवर्ष रूप फसल पर अपनी वृष्टि की सृष्टि कर दे। हे भगवन् रावण नामक दुष्ट दुष्काल का दमन कर दीजिए। हे सूर्यवंश में अवतार लेने के इच्छुक आप ग्रीष्मकालीन आतप को शान्त कीजिए॥७९॥

**तव करुणा न चेद्द्रवति देवगणे भगवन्**
**कथमथमुच्यतां सुरचयो दशकण्ठवशात्।**
**शरणमुपेत्य किं विबुधवृक्षमनाप्तफलो**
**म्रियत इलाभयाप्तविभवैः परिभूतमनाः॥८०॥**

**कृपा टीका**—हे प्रभो यदि देवगण पर आपकी शीघ्र कृपा नहीं हो जायेगी तो फिर देवताओं का समूह दशानन के चंगुल से कैसे छूट सकेगा। हे परमेश्वर कल्पवृक्ष की शरण में आकर भी मनोवांछित फल न पाकर भी संसार के भय विभव से दबे हुए मनवाला यह जीव क्या मर रहा है॥८०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भवदवतारहेतुरधिमर्त्यमनार्यवधः
इति य इहा मनन्ति किल तेऽज्ञशिरोमणयः।
भृकुटिविलासमात्रविहिताण्डकटाहलयः
किमु मशकंजिघांसुरवनावथ सोऽवतरेत्।।८१।।

कृपा टीका—हे प्रभो पृथ्वी पर आपका अवतार अनार्यों के वध के लिए होता इस प्रकार जो कहते हैं वे मूर्ख हैं क्योंकि जिनके भृकुटि के विलास से सारे संसार का प्रलय हो जाता है क्या वह परमात्मा मच्छरों को मारने के लिए संसार में अवतार लेगा?॥८१॥

निजजनकञ्जभावमकरन्दपिपासुरलं
मधुपवरोऽवतीर्य तनुषे विरुदं विशदम्।
तव चरितानिमेषसरिति प्रनिमज्य जनाः
सुखमुपयन्ति भग्नभवभानुशुचः शुचयः।।८२।।

कृपा टीका—वस्तुतस्तु अपने भक्तों के भाव मकरन्द के पिपासु बनकर भ्रमर की भाँति आप अवतार लेकर दिव्य यश का विस्तार करते हैं। आपके चरित्र रूप भगवती गंगा में स्नान करके संसार के भेद भ्रमरूप उष्णता को नष्ट करके पवित्र हो जाते हैं॥८२॥

अवसि जनान् जनार्दन जगद्विषयानलतः
पतितकुलञ्च तारयसि घोरभवाम्बुनिधेः।
इममवतारसारमवधार्य वयं विबुधा
स्तवपदपद्ममेत्य निभृता विगताभिभवाः।।८३।।

कृपा टीका—हे जनार्दन आप अपने भक्तों को विषय की दावाग्नि से बचाते हैं और पतित समूहों को संसार सागर से तारते हैं। आप के इस अवतार सारसर्वस्व को समझकर ही हम लोग आपके श्रीचरण कमलों को प्राप्त करके अब शान्त हैं और हमारे मन में किसी भी प्रकार का अपमान नहीं है॥८३॥

रघुवर रामभद्रभवभावनभावनिधे
त्वमसि पिता त्वमेव जननी त्वमथासि सखा।
सदय दयस्व दत्स्व विभयं पदपद्मजुषां
त्वमसि कृपानिधानशरणं भवभीतिमताम्।।८४।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे रघुकुल में श्रेष्ठ हे भगवान शंकर को भी भाने वाले, हे भावों के खजाने आप ही हमारी माता पिता और प्रिय सखा हैं। हे दयासिन्धो! अब हम लोगों पर दया कीजिए और अपने चरण के सेवकों को अभय दान दीजिए। हे कृपानिधान संसार के भय से भयभीत लोगों के लिए आप ही शरण हैं॥८४॥

**जलधरनीलशीलसुषमासमतासदनम्**
**शरदमलेन्दुवारिजविभाविलसद्वदनम्।**
**अशरणसिद्धयोगिमुनिनाकसदांशरणम्**
**चरणसरोजमेत्य विनता समजाहरणम्॥८५॥**

**कृपा टीका**—नवीन बादल के समान नीलवर्ण, शील, सुषमा और समता के आगार तथा शरद्कालीन निर्मल चन्द्रमा के समान मुखारविन्द शरणरहित सिद्ध मुनीन्द्र योगियों के लिए एकमात्र आश्रय, अजन्मा ब्रह्मा के द्वारा प्रार्थना करने पर अवतार लेने वाले ऐसे हे प्रभो आपकी शरण में हैं॥८५॥

**अवतर भारतेऽपहर भूतलभूरिभरम्**
**विघटय कुञ्जरारिरिव वैरिगजेन्द्रघटाम्।**
**दशमुखमौलिमञ्जुतरमस्तकमालिकया**
**गिरिशमपीह पूजयतु ते रणताण्डवकम्॥८६॥**

**कृपा टीका**—हे प्रभो भारत में अवतार लीजिए और पृथ्वी का विशाल भार हर लीजिए। हे नाथ आपका युद्ध ताण्डव आपका यह रणताण्डव रावण के शिरों की मंगलमय मालिका से भगवान शंकर की पूजा करे॥८६॥ श्लोक ५६ से ८६ तक नार्कुटिक छन्द हैं।

**इति निगद्य गिरो गिर ईश्वरो**
**रुचिररोचिषमम्बुदसुन्दरम्।**
**प्रणिनमाम ननाम मरुद्गणो**
**गणितरावणबाणतनुव्रणः॥८७॥**

**कृपा टीका**—इस प्रकार क्रोध से रमणीय कमल के समान सुन्दर भगवान श्रीराम के प्रति वाणी निवेदित करके वाणी के पति ब्रह्मा जी ने प्रभु को प्रणाम किया एवं भगवान राम के द्वारा जिनके शरीर पर रावण के बाणों द्वारा किये हुए

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

असंख्य व्रणों की गणना की जा रही थी ऐसे देवगण ने भी श्रीराम को प्रणाम किया॥८७॥ यहाँ से श्लोक ९८ तक द्रुतविलम्बित छन्द है।

**तमगदद्गदिताक्षरगद्गदं**
**गतसुखं सुखमुक्तचतुर्मुखम्।**
**विधिमलोकितरावणभीविधिं**
**बुधमिवाथ विधुर्विहसन् विधुः॥८८॥**

**कृपा टीका**—इस प्रकार रावण के भय का विधान न देखते हुए सुख से रहित तथा जिनके चारों मुख दुःख के कारण सूख गये थे ऐसे ब्रह्मा जी से बुध को प्राप्त कर चन्द्रमा की भाँति हँसते हुए श्रीवत्सलाञ्छन भगवान गद्गद स्वर बोले॥८८॥

**दशनदीधितिभिर्विदिशो दिशो**
**वितिमिरा विदधत् करुणालयः।**
**स्मितमिषेण समास्त्रिदशानसौ**
**विमृडयन् सुधयेव जगत्पतिः॥८९॥**

**कृपा टीका**—अपने दाँतों के किरणों से दिशा और विदिशा को प्रकाशित करते हुए अपने मन्द मन्द मुस्कुराने के व्याज से आज भी देवताओं को मानो अमृत पिलाकर सुखी करते हुए करुणा के महासागर जगत्पति भगवान बोले॥८९॥

**अलमहो विबुधा परिदेवनै**
**र्भवतलब्धसुखा मयि तिष्ठति।**
**पितरि जीवति सत्यपि सूनवो**
**भययुता यदि धिक् पितरं तदा!॥९०॥**

**कृपा टीका**—हे देवताओ अब अधिक शोक करने से क्या लाभ? मेरे रहते हुए सुखी हो जाओ। पिता के जीवित रहने पर यदि बेटे भयभीत हुए तो पिता को धिक्कार है॥९०॥

**भवत विज्वरका ज्वरकातरा**
**स्तरत भीषणशोकमहाम्बुधिम्।**
**सपदि पश्यत पांशुविगुण्ठितं**
**दशमुखं मुखभिन्नशिलीमुखम्॥९१॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे शोकचिन्ताकुल देवताओ अब निश्चिन्त हो जाओ और अब भयंकर शोकसागर को पार कर लो तुम लोग रावण को धूलि में लोटते हुए और मेरे बाणों से उसके दशों सिरों को कटे हुए शीघ्र देखो॥९१॥

**अहमजोऽपि निरस्तमलोपि सन्**
**प्रकृतिमास्थित एव गुणाश्रयः।**
**अगुणकोऽपि मुदा सगुणो भवन्**
**अवतरेयमहो ह्यधिकोसलम्॥९२॥**

**कृपा टीका**—मैं अजन्मा होकर भी मन के मल से दूर रहकर भी अपने स्वरूप में सुस्थिर रहकर भी कल्याण गुणगणों का आश्रय लेकर निर्गुण होकर भी सगुण होता हुआ कोसलपुर में अवतार लूँगा।९२॥

**भरतलक्ष्मणशत्रुनिषूदनै**
**स्त्रिभिरथो स्वशुभांशकविष्णुभिः।**
**समवतीर्य च भारतमेदिनीं**
**धवलयेयमलं गुणरश्मिभिः॥९३॥**

**कृपा टीका**—मैं अपने अंशरूप क्षीरसागरविहारी विष्णु, वैकुण्ठविहारी विष्णु एवं श्वेतद्वीपविहारी विष्णु के अवतार भरत, लक्ष्मण, शत्रुघ्न के साथ अवतार लेकर भारतभूमि को अपनी गुणकिरणों से धवलित करूँगा॥९३॥

**दशरथस्य गृहे गतविग्रहे**
**नरपतेश्च लसद्गुणसंग्रहे।**
**समवतीर्य तदीयसुतो भवन्**
**निहतरावणको भवितास्मि भोः॥९४॥**

**कृपा टीका**—विग्रह से रहित श्रेष्ठ गुणों के समूह से सुशोभित महाराज दशरथ के घर में अवतार लेकर उन्हीं के पुत्र होकर मैं कुछ वर्षों के पश्चात् रावण का वध करूँगा॥९४॥

**सपदि मामनुशक्तिमयी मम**
**प्रियतमेव विधुं किल रोहिणी।**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अवतरिष्यति भूजननी भुवि
जनकृतेऽशिथिला मिथिलापुरे।।९५।।

**कृपा टीका**—अत्यन्त शीघ्र ही चन्द्रमा का अनुगमन करती हुई रोहिणी की भाँति मेरी प्रियतमा आदिशक्ति सीता जी पृथ्वी को माँ बनाकर मिथिलापुर में भक्तों के लिए सक्रिय होकर अवतार लेंगी।।९५।।

व्रजत मेऽनुचरा ससुखाः सुराः
भवत वानरदेहभृतो वने।
मम सदागमनं प्रतिपाल्यतां
मकरभानुरिवोत्तमवासरैः।।९६।।

**कृपा टीका**—हे मेरे अनुचर! ब्रह्म में रमण करने वाले देवताओ जाओ, और वन में वानर शरीर धारण करो मेरे आगमन की उसी प्रकार प्रतीक्षा करो जिस प्रकार वड़े दिन मकर संक्रान्ति के सूर्य की प्रतीक्षा करते हैं।।९६।।

परिविभूषयितुं च मनुष्यतां
सपदि दूषयितुं खलसंस्कृतिम्।
अवतरामि चरामि च भूतलं
प्रविचरामि चरामि सुखं सताम्।।९७।।

**कृपा टीका**—मानव संस्कृति को सुशोभित करने के लिए, खलसंस्कृति को नष्ट करने के लिए मैं शीघ्र ही अवतार लूँगा। पृथ्वी पर भ्रमण करूँगा एवं वन में विचरण करते हुए सज्जनों को सुख प्रदान करूँगा।।९७।। श्लोक ८७ से ९८ तक द्रुतविलम्बित छन्द है।

अवधधाम्नि सुधाम्नि धराशिरो
वरललाम्नि सुनाम्नि शिशुर्भवन्।
सुखयितास्मि ततं जननीं तथा
विमलभारतवर्षवसुन्धराम्।।९८।।

**कृपा टीका**—सुन्दर भवनों से युक्त पृथ्वी के शिरोरत्न सुन्दर नाम वाले अवध धाम में वालक वनकर मैं माता, पिता और विमल भारत वसुन्धरा को सुखी करूँगा।।९८।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति रघुपतिवाक्सुधासनाथाः
कमभिनतामृतजीविताः सुरास्ते।
चरणनलिनसौरभाभितृप्ता
दिवस इवालय आगता स्वधाम्नः।।९९।।

**कृपा टीका**—इस प्रकार भगवान राम की वाणी सुधा से सनाथित होकर ब्रह्मा की भाँति प्रभु को प्रणाम करके अमृत से जीवित होकर देवगण प्रलय के विश्राम के दिन की भाँति साकेत से लौट आये।।९९।। पुष्पिताग्रा।

श्रीरामः सह सीतया स भगवान् सम्मन्त्र्य साध्व्यारहो
संहर्तुं दुखग्रहं गुरुभरं रक्षोमयं रावणम्।
कर्तुं चापि विनिश्चिकाय जननीभूमीमयोध्यां जनैः
कौसल्यां सह नीरदस्य तडिता विभ्रद् विरेजे श्रियम्।।१००।।

**कृपा टीका**—सती सीताजी के सहित भगवान राम ने एकान्त में मन्त्रणा करके राक्षसराज रावणरूप दुष्कालग्रह समाप्त करने के लिए पूज्य अयोध्या को जन्मभूमि एवं कौसल्या जी को माता बनाने का निश्चय कर लिया। उस समय विद्युत के सहित बादल के समान प्रभु की शोभा हो रही थी।।१००।। शार्दूलविक्रीडित।

इत्थं शुभे भार्गवराघवीये भव्ये महाकाव्य उदारवृत्ते।
सर्गः प्रणीते कविरामभद्राचार्येण भूयाद्दशमः श्रियै नः।।१०१।।

**कृपा टीका**—इस प्रकार कल्याणकारी भव्य श्रेष्ठ छन्दों से युक्त महाकवि स्वामी रामभद्राचार्य द्वारा प्रणीत श्रीभार्गवराघवीयम् नामक महाकाव्य में प्रस्तुत दशम सर्ग हमारी प्रपत्ति सम्पत्ति लक्ष्मी के लिए होवे।।१०१।। उपजाति।

**इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामिरामभद्राचार्यप्रणीते श्रीभार्गवराघवीये महाकाव्ये "श्रीराघवाविर्भावो" नाम दशमः सर्गः।।**

**।।श्रीराघवः शन्तनोतु।।**

इस प्रकार धर्मचक्रवर्ती महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामी रामभद्राचार्य द्वारा प्रणीत श्रीभार्गवराघवीय महाकाव्य में 'श्रीराघवाविर्भाव' नामक दशम सर्ग पूर्ण हुआ।

।।श्री राघवः शन्तनोतु।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीमद्राघवो विजयते ॥

# अथ एकादशः सर्गः

धर्मोत्तराधिधरमुत्तरदिग्विभागे
पुष्यत्परागपरिपंकजपद्मरागे।
पायोजपौत्रिपयउज्झितपापरागे
भातीन्द्रनम्रनगरी नगरी अयोध्या॥१॥

**कृपा टीका**—पराग से मंडित कमलों एवं पद्मराग मणियों से युक्त ब्रह्मा जी की पौत्री सरयू के पवित्र जल से जिसके पाप नष्ट हो गये हैं ऐसे पृथ्वी के उत्तर विभाग में विराजमान इन्द्रनगरी अमरावती के द्वारा भी प्रणम्य धर्मप्रधान अयोध्या नाम की नगरी अनादिकाल से सुशोभित हो रही है॥१॥ इस सर्ग में श्लोक संख्या १ से ६४ तक वसन्ततिलका छन्द है।

साकेतधाम्नि समनाम्नि लसत्प्रतिष्ठा
गन्धर्वनागनरकिन्नरलब्धनिष्ठा।
वैकुण्ठतोऽपि विशदा विरजावरिष्ठा
या मोक्षदायकपुरां पुरतः प्रथिष्ठा॥२॥

**कृपा टीका**—जो अयोध्यापुरी समान नामवाले साकेत धाम में प्रतिष्ठित है तथा गन्धर्व, नाग, मनुष्य एवं किन्नरों द्वारा जिसके प्रति निष्ठा व्यक्त की गई है, वैकुण्ठ की अपेक्षा भी विशाल एवं स्वच्छ है तथा मोक्षदायक पुरियों में सबसे प्रथम पंक्ति में विराजमान है॥२॥

विज्ञातरामरमणीयनरावतारा
त्रेतायुगे भरतभूमिमिनञ्चपूर्वम्।
ऊर्जे सितेऽभिनवमीमगमत्सरज्वा
प्रत्युद्ययियाषुरिव सेवकधर्म एषः॥३॥

**कृपा टीका**—त्रेतायुग में कार्तिक शुक्ल नवमी को (जिसे अक्षय नवमी भी कहते हैं) श्रीरामजी का भारतभूमि में आगामी मनुष्यावतार जानकर प्रभु के आगमन

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

से पहले उनकी आगवानी की इच्छा करती हुई सी अयोध्यापुरी भारत भूमि पर आ गई। यही तो सेवक धर्म है॥३॥

**वैवस्वतेन मनुनार्पितवाससीमा**
**सीमन्तिनीव लसितामित सल्ललामा।**
**सत्यव्रतेन महिता शुचिसत्यनामा**
**मातङ्गवाजिरथरोचितदिव्यधामा॥४॥**

**कृपा टीका**—श्री अयोध्या जी जिनकी सीमा का निर्धारण वैवस्वतमनु ने किया था और जो अनेक रत्नों से सुशोभित होती हुई दिव्य सौभाग्यवती ललना की भाँति प्रतीत होती हैं सत्यव्रत मनु ने जिसकी पूजा की, जो सत्या नाम से प्रसिद्ध है और जिसके दिव्य भवन हाथी घोड़े और रथ से सुशोभित रहते हैं॥४॥

**या चायता तपनसंख्यकयोजनानि**
**शर्वाक्षियोजनसुविस्तरमण्डिताशा।**
**सुव्यक्तचत्वरमहापथराजरथ्या**
**वीथीव मस्तकमयी ललिता धरण्याः॥५॥**

**कृपा टीका**—जो अयोध्या जी बारह योजन आयत एवं तीन योजन विस्तृत तथा सम्पूर्ण दिशाओं को सुशोभित करती हैं जिसके चबूतरे बड़ी सड़कें तथा राजमार्ग एवं सुन्दर गलियाँ स्पष्ट और सुन्दर हैं, जो पृथ्वी के मस्तक के समान विराजमान हो रही हैं॥५॥

**आदित्यवंश जनुषां क्षितिपेश्वराणाम्**
**वैवस्वतादथ मनोः प्रभृति प्रतीता।**
**प्रीतात्मनां स्वगुणजीवितजीवधानी**
**याभूदपास्तरजसां शुभराजधानी॥६॥**

**कृपा टीका**—वह अयोध्या वैवस्वत मनु से लेकर रजोगुणरहित सूर्यवंश में उत्पन्न होने वाले पवित्र मन वाले सभी राजर्षियों की शुभ कल्याणमयी राजधानी रही हैं और जिसने अपने गुणों से पृथ्वी को भी जीवनदान दिया है॥६॥

**या सूर्यकेतनविनिन्दित सूर्यबिम्बा**
**व्रीड्यच्छशांककलशालयसत्कदम्बा।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कादम्बिनीव जगतीं स्वयशः पयोभिः
नित्यं निषिञ्चति निरस्तनिसर्गदोषा॥७॥

**कृपा टीका**—जो अपनी सूर्य पताका से सूर्यमंडल को भी लज्जित कर देती है तथा जिसके भवनों के कलशसमूहों से चन्द्रमा लज्जित हो जाते हैं ऐसी वह अयोध्या स्वयं सम्पूर्ण दोषों से रहित होकर मेघमाला की भाँति समस्त संसार को अपने यशरूप जलधारा से निरंतर सींच रही हैं॥७॥

यस्या गृहान् रचितवानजविश्वकर्म
स्थापत्यनैपुणकलाकुलकौशलानि।
हर्म्याणि रत्नखचितानि हिरण्मयानि
स्वर्ग्याणि चापि जहसुर्दिनकृद्विभानि॥८॥

**कृपा टीका**—जिस अयोध्या के भवनों की ब्रह्मा जी ने ही विश्वकर्मा का अवतार लेकर रचना की है जिसकी स्थापत्यकला निपुणता एवं कौशल से युक्त रत्न जटित सूर्य के समान प्रकाशवाले स्वर्ण राजमहलों ने सूर्यनारायण के प्रकाश की भी हँसी उड़ाई थी॥८॥

कीराश्च पञ्जरगताः सह सारिकाभि
र्नित्यं जगुःश्रुतिप्रमाणमुदाहरन्तः।
सीतापतेः पतितपावननित्यलीला
लीलायिताः श्रितसुधाकरसारवाचः॥९॥

**कृपा टीका**—जिस अयोध्या के पिंजड़ों में विराजमान मैनाओं के साथ खेलते हुए अमृत के समान वाणीवाले तोते वेदों के प्रमाणों को उद्धृत करते हुए सीतापति भगवान श्रीराम की पतितपावनी लीला का निरंतर गान करते रहते थे॥७॥

यस्यामयोवदचलीकृतदेहचिन्ता
ध्यायन्ति राममनघं नृपतोकरूपम्।
यायो हरिद्रुहिणशम्भुभिरात्तभावै
र्ध्यातावुधा अत इमां निगदन्त्ययोध्याम्॥१०॥

**कृपा टीका**—इस श्लोक में अयोध्या जी की व्युत्पत्ति पर विचार किया गया

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

है—जिस अयोध्या में अय अर्थात् लोहे के समान शरीर और चित्त को स्थिर करके भक्तजन राजकुमार रूप श्रीराम का ध्यान करते हैं और जो अ अर्थात् विष्णु य अर्थात् ब्रह्मा उ अर्थात् शिव इन तीनों ब्रह्मा विष्णु शंकर द्वारा सतत ध्यान में लाई जाती है इसलिए इसे बुधजन अयोध्या कहते हैं॥१०॥

**इक्ष्वाकुवंश्यरणचण्डमहीपमुख्यै–**
**र्या पालिता विरतमाप्तमहाप्रयासैः।**
**नायोध्यते तत इयं सुदुरासदत्वा**
**च्छत्रूञ्जयैररिभिरस्तपराक्रमैश्च॥११॥**

**कृपा टीका**—निरंतर युद्ध में प्रचण्ड इक्ष्वाकुवंशीय राजाओं द्वारा यह निरंतर पाली जाती रही है। इसीलिए शत्रुओं के विजेता असुर राजा भी दुर्धर्ष अयोध्या में पराक्रम नष्ट हो जाने के कारण इस पर प्रहार नहीं कर पाते इसीलिए इसे अयोध्या कहा जाता है॥११॥

**ब्रह्मेन्दुशेखरकृपावरतीक्ष्णदर्पः**
**पौलस्त्यवंशवरवैणववन्यवह्निः।**
**यां रावणोऽपि न शशाक तिरोवधातुं**
**श्रीराघवैः कृतदुरत्ययभीममार्गाम्॥१२॥**

**कृपा टीका**—पुलस्त्य कुल रूप बाँस के वन को जलाने के लिए वन की अग्नि के समान ब्रह्मा जी एवं भगवान शंकर के वरदान से मत्त रावण भी रघुवंशियों द्वारा बनाये हुए दुर्भेद्य फाटकों के कारण जिस अयोध्या को द्वार खोलकर अपमानित नहीं कर पाया॥१२॥

**तस्या उदीचिदिशिभाति सदा सुधाम्बुः**
**श्रीशाम्बकाब्जमकरन्दमयी मनोज्ञा।**
**शाश्वत् प्रसन्नसलिला सरयूः सदाया**
**संसारचक्रविनिवर्हणलब्धदीक्षा॥१३॥**

**कृपा टीका**—उसी अयोध्या के उत्तर दिशा में निरंतर अमृत जलवाली अत्यन्त रमणीय भगवान नारायण के नेत्र कमल की मकरंद रूप स्वच्छ वह सरयू विराजी हैं जो संसारचक्र को नष्ट करने की विधि में दीक्षित हैं॥१३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यस्यास्तटेषु यतयोऽरतयो जगत्या
धीरा सदा परमहंसगणा गरिष्ठाः।
निर्माय पर्णतृणचारुकुटीरयूथम्
प्रेम्णा वसन्ति भगवन्तमुपाश्रयन्तः॥१४॥

**कृपा टीका**—जिन सरयू जी के तटों पर संसार से विरक्त धीर, परमहंस गण अन्य श्रेष्ठ महात्मा जन पत्तों और घास की कुटिया बनाकर भगवान का आश्रय करते हुए निवास करते हैं॥१४॥

यस्यां जनो निजकलेवरकं कथञ्चित्
त्यक्त्वा पुनर्भवभयानकसिन्धुमुग्रम्।
भूयो नहि प्रपतति प्रपितामहस्य
सामीप्यमेति विनतासुतपक्षवाह्यः॥१५॥

**कृपा टीका**—जिस सरयू में किसी भी प्रकार अपना शरीर छोड़कर साधक भवभय से भयानक इस संसार में नहीं पड़ता प्रत्युत गरुड़देव के पंख पर आरूढ़ होकर भगवान विष्णु का सामीप्य प्राप्त कर लेता है॥१५॥

तस्यां बभूव नृपऐन्दुमतेय आजि
राजावथाप्यतिरथः स सखा बलघ्नः।
दानी दमी दशरथो दशमस्तकोऽपि
यन्मस्तकं नमयितुं न शशाक यत्नात्॥१६॥

**कृपा टीका**—उसी अयोध्या में इन्दुमती एवं अज के पुत्र युद्ध में अतिरथ दानी दमनशील दशरथ नामक राजा हुए रावण प्रयास करके भी जिसके मस्तक को नहीं झुका सका॥१६॥

स्वायम्भुवो मनुरधिश्रित दाशरथ्यः
पत्न्या च कोसलजया शतरूपयाद्यः।
कौसल्यया कृतविवाहविधिर्विधिज्ञो
रेमे महेश इव मामयमैरवेय्या॥१७॥

**कृपा टीका**—विधि के बेला स्वाम्भुव मनु ही दशरथ के भाव में आकर कोसलराज की पुत्री कौसल्या का अवतार ली हुई पत्नी शतरूपा से वैदिक विधि से विवाह

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

करके भैरवी मैना की पुत्री पार्वती जी के साथ भगवान शंकर की भाँति प्रसन्नतापूर्वक रमण करने लगे॥१७॥

**भूयोऽपि कैकयनरेन्द्रसुतां सुभामां**
**सौन्दर्यसारचकितीकृतकामवामाम्।**
**वामोरुमम्बुजदृशं वनितां व्युवाह**
**प्रीत्या शशीव सुदतीं ननु रोहिणीं सः॥१८॥**

**कृपा टीका**—इसके अनन्तर सुन्दर शोभावाली अपने सौन्दर्य से कामपत्नी रति को भी चकित करने वाली, सुन्दर ऊरु वाली, कमलनयनी, कैकेयराजपुत्री कैकेयी को महाराज ने उसी प्रकार विवाहित किया जैसे चन्द्रमा ने परमसुन्दरी रोहिणी को॥१८॥

**राजा सुमित्रतनयां वनितां सुमित्राम्**
**गङ्गामिवामलधियं गुणतः पवित्राम्।**
**तामग्रहीन् मगधवैभववैजयन्तीम्**
**देवीमिवादितिमसौ च मरीचिपुत्रः॥१९॥**

**कृपा टीका**—गंगा जी के समान निर्मल बुद्धिवाली, गुण से पवित्र, मगध के वैभव की वैजयन्ती पताका, सुमित्रराज की पुत्री सुमित्रा देवी को महाराज दशरथ ने अदिति जी को कश्यप की भाँति पत्नी के रूप में ग्रहण किया॥१९॥

**इत्थं मुदा स तिसृभिर्गृहमेधिनीभि**
**स्तुल्यान्वयाभिरनघाभिरमन्दभाभिः।**
**राजा रराज रुचिताभिरिवात्तसारो**
**नव्योनयः समुदितः किल शक्तिभिः सः॥२०॥**

**कृपा टीका**—इस प्रकार समान वंशवाली पापरहित अपूर्व शोभासम्पन्न अपनी तीनों गृहलक्ष्मी से युक्त महाराज तीन शक्तियों से युक्त राजनीति प्रयोग के समान सुशोभित हो रहे थे॥२०॥

**ताभिर्बभौ स रघुपौत्र उदारवृत्तो**
**भार्याभिरात्मसदृशीभिरनुव्रताभिः।**
**गङ्गादिनेशतनयान्तरिताम्बुभिर्वै**
**युक्तः प्रशस्तमहिमेव परः पयोधिः॥२१॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—उन अपने अनुरूप स्वभाववाली अनुकूल आचरणशीला उन तीन पत्नियों के साथ रघु जी के पौत्र महाराज दशरथ गंगा यमुना सरस्वती से युक्त महासागर जैसे सुशोभित हो रहे थे॥२१॥

**कौसल्यया स शुशुभे मघवानिवैन्द्र्या**
**स्वामीव केकयजया पयसां प्रतीच्या।**
**राजा सुमित्रसुतयोत्तरयेव शैवो**
**भावं गतो दशरथस्तिसृभिस्त्रयाणाम्॥२२॥**

**कृपा टीका**—महाराज दशरथ कौशल्या जी के साथ पूर्व दिशा से युक्त इन्द्र की भाँति सुन्दर लग रहे थे तथा कैकेय जी के साथ पश्चिम दिशा से वरुण की भाँति लग रहे थे एवं सुमित्रा जी के साथ उत्तर दिशा से युक्त कुबेर की भाँति सुशोभित हो रहे थे। इस प्रकार तीनों पत्नियों के साथ महाराज दशरथ त्रय से इन्द्र, वरुण और कुबेर के भाव को प्राप्त हो गये थे॥२२॥

**अष्टाभिरीड्यचरितैर्नयवर्त्मविद्भि-**
**र्विज्ञैरनृपानुगमनैः सुमहानुभावैः।**
**वित्तो विनीत सचिवैः स सुमन्त्रमुख्यै-**
**रष्टाभिरात्मप्रतिमाभिरिवाष्टमूर्तिः॥२३॥**

**कृपा टीका**—महाराज दशरथ उदार चरित्रों वाले राजनीति में कुशल महाराज के प्रति समर्पित महान प्रभावशाली धृष्ट, जयंत विजय, सुराष्ट्र, राष्ट्रवर्धन, अकोप, मंत्रपाल एवं सुमंत्र इन मंत्रियों के द्वारा महाराज दशरथ जल अग्नि यजमान दिन रात्रि हवि एवं वायु इन आठ मूर्तियों से युक्त भगवान शंकर जैसे लग रहे थे॥२३॥

**जित्वा दिशो दशरथो दशदस्युतापी**
**तापिच्छनीलरुचिमच्युतमेव बिभ्रत्।**
**चित्तेऽचिरेण भुवनानि चतुर्दशाप्त्वा**
**यश्चक्रवर्तिपदवीं पुरुहूततोऽगात्॥२४॥**

**कृपा टीका**—दस्युओं को दण्ड देनेवाले अपने हृदय में तमाल के समान नील वर्ण भगवान श्रीराम को हृदय में धारण करते हुए दशरथ जी ने चौदहों भुवनों

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एवं दशों दिशाओं को जीतकर देवाधिराज इन्द्र से ही चक्रवर्ती पद को प्राप्त कर लिया॥२४॥

**आस्थाय देवमहितां निजराजधानीम्**
**ऋद्धां प्रसन्नजनतां नगरीमयोध्याम्।**
**भूपो बुभोजभुवनानि भुजप्रताप–**
**प्रोत्तप्तशत्रुनिकरो रविवंशकेतुः॥२५॥**

**कृपा टीका**—देवताओं से वंदनीय धनधान्य से समृद्ध प्रसन्न जनसमूह से संकुलित अयोध्या नामक अपनी राजधानी में विराजमान होकर अपने भुजा के प्रताप से शत्रुगणों को प्रतप्त करते हुए सूर्यवंश के केतु महाराज दशरथ चौदहों भुवनों का पालन करते थे॥२५॥

**वव्रे पुरोहितमृषिं स वसिष्ठमीड्यम्**
**यो ब्रह्मणोऽष्टमसुतः प्रथमेऽन्तरेऽभूत्।**
**आथर्वणिः प्रथयिता प्रथमोऽग्निहोत्र–**
**शश्वद्विधेः सकलयज्वशिरोमणिश्च॥२६॥**

**कृपा टीका**—जो प्रथम मन्वन्तर में ब्रह्मा जी के आठवें पुत्र थे ऐसे अथर्ववेद के साक्षात्कर्ता सर्वप्रथम अग्निहोत्र विधि के प्रचारक ब्राह्मणों में शिरोमणि थे, ऐसे ब्रह्मर्षिवर्य वसिष्ठ जी को महाराज दशरथ जी ने पुरोहित वरण किया॥२६॥

**मन्त्री सुमन्त्रसदृशः सुगुरुर्वसिष्ठः**
**पत्न्यश्च कोसलसुताप्रमुखाः सुकोषः।**
**एकातपत्रवसुधातलराज्यमृद्धम्**
**शक्रः सखा महति सर्वमपि ह्यपूर्वम्॥२७॥**

**कृपा टीका**—महाराज दशरथ के यहाँ सुमंत्र जैसे मंत्री वसिष्ठ जैसे दिव्य गुरु कौसल्या जैसी अलौकिक पत्नी समृद्ध कोष पृथ्वी का एकछत्र समृद्धराज्य एवं साक्षात् इन्द्र जैसे सखा इस प्रकार महापुरुष के यहाँ सब कुछ अपूर्व ही अपूर्व होता है॥२७॥

**राजा जुगोप सुतवत् प्रकृतीः पितेव**
**वर्णाश्रमानुमतधर्मरताः प्रसन्नाः।**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

काले ववर्ष मघवा मघवत् सहाये
तस्मिन् रघुप्रवर राजनि राजमाने।।२८।।

**कृपा टीका**—महाराज दशरथ वर्णाश्रम से अनुमोदित धर्म में लगी हुई अपने पुत्र के समान प्रिय प्रजा को पिता के समान पाल रहे थे। इन्द्र के मित्र रघुवंशियों में श्रेष्ठ ऐसे महाराज दशरथ के विराजमान रहने पर इन्द्र भी समय समय पर वर्षा करते थे।।२८।।

इत्थं प्रजासमनुपालयतो जितारे–
धर्मात्मनो दशरथस्य महारथस्य।
जग्मुः समा अहह! षष्टि सहस्रसंख्या
राज्ञः सदा स्पृहयतः सुतलालनाय।।२९।।

**कृपा टीका**—इस प्रकार शत्रुविजेता धर्मात्मा महारथ महाराज दशरथ के प्रजापालन करते करते साथ ही पुत्र को दुलारने की स्पृहा करते हुए जीवन के साठ हजार वर्ष बीत गये। अहह यह कैसी विडम्बना है।।२९।।

सोऽप्येकदा समनवाप्तसुतः फलर्द्धे–
र्हीनं यथा द्रुममिवावसथं विदीपम्।
शून्यं सरोवरमिवाम्बुजसम्पदेव
प्राणं विना तनुमसौ स्वमथो शुशोच।।३०।।

**कृपा टीका**—एक बार महाराज दशरथ पुत्ररूप फल प्राप्त न होने से फल से हीन वृक्ष की भाँति दीपक से रहित घर के समान, कमल से शून्य सरोवर की भाँति, प्राण के बिना मृतक शरीर की भाँति पुत्र के अभाव में अपने ही प्रति चिन्ता करने लगे।।३०।।

दीर्घप्रजागरजडीकृतपक्ष्मपंक्ति–
रारक्तनेत्रनलिनो मलिनाम्बुजास्यः।
पद्भ्यां जगाम गुरुमेव गुरुत्वमाप्तुम्
सत्सङ्गमो हि जनवाञ्छितपारिजातः।।३१।।

**कृपा टीका**—बहुत काल तक निद्रा न आने से महाराज की पलकें जड़ हो गयीं थीं उनके नेत्र लाल एवं मुखकमल मलिन हो गया था गुरुत्व की प्राप्ति अर्थात्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पिता बनने के लिए महाराज पैदल ही चलकर गुरुदेव के पास आये क्योंकि महापुरुषों का संगम ही सेवकों के लिए कल्पवृक्ष होता है॥३१॥

**तं चारुचन्द्ररुचमाननचन्द्रहास–**
**पीयूषसीकरकरैर्हठतो हरन्तम्।**
**श्रद्धावतां त्रिविधतापमथो कलापम्**
**घोरैनसां गुरुमुपोटजमभ्यपश्यत्॥३२॥**

**कृपा टीका**—महाराज दशरथ जी ने पूर्ण चन्द्रमा के समान शोभावाले अपने मुखचन्द्र के हास अमृत की शीकरों से श्रद्धालुजनों के दैहिक, दैविक, भौतिक, तीनों तापों को एवं घोर पापों के समूहों को हठपूर्वक हरण करते हुए श्री गुरुदेव भगवान को कुटी के बाहर अग्निहोत्र करते हुए देखा॥३२॥

**सिञ्चन्तमाम्रविटपान् सरयूपयोभिः**
**पूर्णेन मृन्मय घटेन च वत्सलत्वात्।**
**सानन्दमीड्यचरितं गृहिणीसहायम्**
**पश्यन्तमादरदृशा तमरुन्धतीं च॥३३॥**

**कृपा टीका**—वात्सल्य के कारण सरयू जी के जल से पूर्ण मिट्टी के घड़े से आम्र के छोटे वृक्षों को सींचते हुए आनंदयुक्त अग्निकार्य में पत्नी की सहायता लेते हुए आदरपूर्ण दृष्टि से अरुन्धती जी को ही निहारते हुए उन गुरुदेव जी को दशरथ जी ने देखा॥३३॥

**आजानुलम्बिवरबाहुमदीनसत्त्वम्**
**दिव्योपवीतकलितं शुचिनिम्ननाभिम्।**
**त्यूढोरसं सुवदनं ललितोर्ध्वपुण्ड्र**
**प्रोद्यल्ललाटपटलं श्रमबिन्दुभूषम्॥३४॥**

**कृपा टीका**—वसिष्ठ जी की बाहें घुटने से नीचे लटक रही थीं उनका आकार प्रसन्न था स्कन्ध पर सुन्दर यज्ञोपवीत विराज रहा था। नाभि निम्न थी मस्तक पर उर्ध्वपुण्ड्र विराज रहा था वक्षस्थल चौड़ा था मुख की कान्ति सुन्दर थी पसीने की बूँद से सुशोभित मस्तक उन्नत था॥३४॥

**तं चक्रवर्तिनमसौ नृपचक्रवर्ती**
**स ब्रह्मणामनुपमं परिवीक्ष्य दूरात्।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मोदं ययौ दशरथो विगताध्वखेदः
सद्दर्शनं सफलयत्यभिलाषमारात्।।३५।।

**कृपा टीका**—इस प्रकार उपमारहित पंक्तिपावन ब्राह्मणों के चक्रवर्ती वसिष्ठ जी को दूर से ही देखकर महाराज दशरथ प्रसन्न हुए और उनका मार्ग श्रम जाता रहा क्योंकि सन्तों का दर्शन जीव की सम्पूर्ण अभिलाषाओं को सफल कर देता है॥३५॥

पृच्छानि सिञ्चति गुरौ च तदंघ्रियुग्मं
नूनं व्रजामि शरणं तनयाभिलाषी।
देवो मदीप्सिततरुं कृपयाभिसिञ्चेत्
सन्तानचारुफलमित्यभवत् प्रसन्नः।।३६।।

**कृपा टीका**—महाराज दशरथ जी ने सोचा बड़ा अच्छा अवसर है, वृक्ष सींचते समय ही गुरुदेव से पूछूँ और पुत्र की इच्छा से गुरुदेव के श्रीचरणों की निश्चय ही शरण में जाऊँ जिससे वे मेरे अभिलाषरूप वृक्ष को कृपा करके सींच दें और उसमें संतानरूप श्रेष्ठ फल दें ऐसा सोचकर महाराज बहुत प्रसन्न हुए॥३६॥

यावद् विलोक्य नृपतिं गुरुरुज्झितस्व–
व्यापार इच्छति सभाजयितुं महीपम्।
तावदद्रुतं दशरथोऽपि तदंघ्रिरेणुं
मूर्ध्ना दधार हि महान् विनयी प्रकृत्या।।३७।।

**कृपा टीका**—चक्रवर्ती जी को देखकर जब तक वसिष्ठ जी अपना वृक्षसेचन, व्यापार छोड़कर उनका सम्मान करने की इच्छा कर रहे थे कि तब तक महाराज दशरथ ने शीघ्र ही प्रणाम करके गुरुदेव की चरणधूलि को अपने मस्तक पर धारण कर लिया क्योंकि महान लोग स्वभाव से ही विनयी होते हैं॥३७॥

तं वन्द्यमानचरणं समुवाच वाचम्
वाचंयमो महिपमौलिमणिं मनस्वी।
स्वस्त्यस्तु ते नरपते भवपूर्णकामः
सत्याशिषोऽप्यथ फलाढ्यगिरो हि सन्तः।।३८।।

**कृपा टीका**—इस प्रकार अल्पभाषी मनस्वी वसिष्ठ जी ने अपने चरणों की वंदना

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

करते हुए राजाओं के मुकुटमणि दशरथ जी से कहा हे महाराज आपका कल्याण हो आपकी कामनायें पूर्ण हों। क्योंकि सन्तजनों का आशीर्वाद सत्य होता है और उनकी वाणी फलपूर्ण होती हैं॥३८॥

**आनीय नीपनिचितां निजपर्णशालाम्**
**वेदीप्रदीप्तबलिवल्गितदीपमालाम्।**
**दिव्याञ्च देवगविगोमयलिप्तभूमिम्**
**विप्रो नृणामिनमनामयमभ्यपृच्छत्॥३९॥**

**कृपा टीका**—यज्ञवेदी पर दीप्त होती हुई दधि पुष्प अक्षत से पूजित दीपमाला से सुशोभित अलौकिक तथा कामधेनु के गोबर से लिपी हुई भूमिवाली कदम्ब वृक्षों से घिरी हुई अपनी पर्णशाला में चक्रवर्ती जी को ले जाकर वसिष्ठ जी ने उनसे अनामय पूछा॥३९॥

**दिष्ट्या विवर्धस इनावनिमण्डलस्य**
**राज्ये गृहे वपुषि कच्चिदनामयन्ते।**
**हेमन्ततामरसकोषमिवाप्तशोषम्**
**पश्यामि ते वदनमत्र वदस्व हेतुम्॥४०॥**

**कृपा टीका**—हे सम्पूर्ण भूमंडल के स्वामी सौभाग्य से आपकी वृद्धि हो रही है। आपके राज्य, गृह और शरीर में स्वस्थता है। महाराज हेमन्त ऋतु कमलकोष की भाँति आज आपका मुख शुष्क देख रहा हूँ मुझे इसका कारण बताइये॥४०॥

**तं पृष्टवार्तमिदमार्ततरं बभाषे**
**भास्वत् कुलाम्बुरुहभास्कर उष्णवीर्यैः।**
**आचार्यशीतलपदाब्जयुगं सतापम्**
**सन्तापयन् नयननिर्झरवारिपूरैः॥४१॥**

**कृपा टीका**—इस प्रकार वसिष्ठ जीं के कुशल क्षेम पूछने पर सूर्यकुल कमल के सूर्य महाराज दशरथ अत्यन्त गर्म अपने नेत्र से निर्झरित अश्रुओं से तपाते हुए मानसिक संताप के साथ इस प्रकार आर्तवाणी बोले॥४१॥

**सर्वत्र कोसलगुरो भवतः कृपाख्या**
**कादम्बिनी समनुवर्षति कौशलाम्बु।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एकं ममैव भवनं दुरवग्रहेण
ग्रस्तं निदाघ इव शून्य सरो न भाति।।४२।।

**कृपा टीका**—हे अयोध्या के राजगुरो, आपकी कृपा कादम्बिनी सर्वत्र कुशलता रूपजल की वर्षा कर रही है एक मेरा ही भवन दुष्काल से ग्रस्त है अर्थात् उसमें आपकी कृपा वर्षा नहीं कर रही है अतः मेरा घर ग्रीष्मकालीन सूखे सरोवर की भाँति सुशोभित नहीं हो रहा है।।४२।।

आचार्यदेव! महितासु तव स्नुषासु
तुल्यान्वयासु तिसृषु ह्यनवाप्तपुत्रः।
चेखिद्य एष जन आप्तसुरापगोऽपि
सिन्धुर्यथा विरहितोऽहमनल्परत्नैः।।४३।।

**कृपा टीका**—हे आचार्यदेव समान वंशवाली परम सम्मानित आपकी तीनों पुत्रवधुओं में पुत्र न प्राप्त करके मैं गंगाजी को प्राप्त करके भी रत्नों से रहित सागर की भाँति बहुत दुःखी हो रहा हूँ।।४३।।

किं तेन देवतरुणा बुधवन्दितेन
स्निग्धप्रसूतिरहितेन निरर्थकेन।
किं कृष्णया विरलया घनमालयाभो
या नो प्रवर्षति जलं स्तनति प्रघोरम्।।४४।।

**कृपा टीका**—हे भगवन् देवताओं से भी वंदित उस निर्थक कल्पवृक्ष से क्या लाभ जिसमें सुन्दर फल न हो। हे महाराज उस काली काली घनी मेघमाला से क्या प्रयोजन जो मात्र गरजती है बरसती एक बूँद भी नहीं।।४४।।

एकोऽपि चेत् समनुवंशवधूप्रसूतः
श्राद्धं सुतः प्रकुरुतां मुदितो गयायाम्।
उद्धृत्य घोरनरकात् पितरं स पुत्रः
स्वर्गे प्रमोदयतु मोदत आप्तकीर्तिः।।४५।।

**कृपा टीका**—हे प्रभो मनुवंश की वधू में एक भी पुत्र उत्पन्न हो जाये तो वह प्रसन्न होकर गया में पितरों का श्राद्ध कर दे। पिता को घोर नरक से निकालकर प्रसन्नता के सहित वह यशस्वी पुत्ररत्न स्वर्ग में भी अपने पिता को अलभ्य लाभ दिला सकता है।।४५।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तस्मादहं विगतपुत्रसुखो भृशार्तः
श्रीमत्पदाब्जशरणं समुपैमि दीनः।
त्रायस्व मां करुणया विधिवंशकेतो
त्वं भास्करान्वयपयोरुहरश्मिराशिः।।४६।।

**कृपा टीका**—इसलिए पुत्र सुख से रहित अत्यन्त आर्त दीन मैं आपके श्रीचरणों की शरण में आया हूँ। हे ब्रह्मवंश के केतु आप मेरी रक्षा करें क्योंकि आप ही सूर्यकुलकमल के लिए सूर्य हैं।।४६।।

इत्थं निवेद्य गुरवे गुरुताभिलाषम्
बाष्पायमाणनयनो नयनाभिरामम्।
निष्पन्दितेऽन्तरधरे रसपल्लवेऽसौ
ज्योत्स्ना इवामृत जुषोथ जगाम जोषम्।।४७।।

**कृपा टीका**—इस प्रकार पुत्र प्राप्ति की अभिलाषा को गुरुदेव वसिष्ठ से कहकर नेत्रों से आँसू बहाते हुए चन्द्रमा की किरणों को आम्रपल्लव की भाँति कँपाते हुए ओठ के भीतर वाणी को समेटकर स्मरणीय परिस्थिति में महाराज चुप हो गये।।४७।।

जोषं गते धरणियोषिति तीव्रचिन्ते
चिन्तामणिः पदजुषां सविचिन्त्य चित्ते।
चिन्तां हरन् हरिसखस्य वचो बभाषे
विद्वान् हरेर्हरिकुले मनुजावतारम्।।४८।।

**कृपा टीका**—इस प्रकार महाराज के मौन हो जाने पर उन्हें तीव्र चिन्तामग्न देखकर सूर्यकुल में श्रीहरि का अवतार जानते हुए अपने सेवकों के चिन्तामणि विद्वान् वसिष्ठ इन्द्र के मित्र दशरथ की चिन्ता दूर करते हुए यह वाणी बोले।।४८।।

राजन् प्रसीद मृदुमानस मा विषीद
धैर्यं धरस्व श्रृणु मद्‌गिरमादरेण।
क्षिप्रं जगद्‌गुरुगुरुर्भवितासि भूयो
विष्णोरिवादिति पतिः पतिताघहर्तुः।।४९।।

**कृपा टीका**—हे राजन! प्रसन्न हो जाओ मन में दुःखी मत हो। मेरी बात आदर

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

से सुनो। धैर्य धारण करो, जिस प्रकार पतितपावन विष्णु के कश्यप जी पिता बने थे उसी प्रकार शीघ्र ही भगवान श्रीराम के आप पिता बनेंगे॥४९॥

राजन् तिसृष्वपि भवद्गृहिणीषु साक्षात्
कृत्वा तनूरथ शुभा भगवांश्चतस्रः
पुत्रत्वमेत्य तव भूतलभूरिभारम्
हर्ता हरिर्हरिसुहृद् भववीतशङ्कः॥५०॥

**कृपा टीका**—हे राजन, आपकी तीनों पत्नियों में साक्षात् परब्रह्म परमात्मा चार शरीर धारण करके चार रूपों से आपके पुत्र बनकर पृथ्वी का विशाल भार समाप्त कर देंगे। हे इन्द्र के मित्र अब तुम सन्देह छोड़ दो॥५०॥

एवं विसृज्य विधिजो विधिनामपुत्र-
माहूय होमविधिवित्तं ऋष्यशृङ्गम्
आयोजयन्निजसुतोत्तरतीर आर्षं
यज्ञं महेन्द्रसखपुत्रफलं स यज्वा॥५१॥

**कृपा टीका**—इस प्रकार यज्वा ब्रह्मापुत्र वसिष्ठ जी नें पिता ब्रह्मा के पर्यायवाची नाम वाले महाराज अज के पुत्र दशरथ जी को घर लौट जाने की आज्ञा देकर अपनी पुत्री सरयू जी के तट पर इन्द्र के मित्र दशरथ जी के पुत्रफल के लिए वैदिक यज्ञ का आयोजन किया॥५१॥

कौसल्यया दशरथः सह दीक्ष्यमाण
श्चक्रेऽश्वमेधमधिराजमथो मखानाम्।
येनैनसः प्रमुमुचेऽस्य सखा पुरैव
त्वाष्ट्रप्रणाशजनितात् तुहिनात् पपीर्वा॥५२॥

**कृपा टीका**—कौसल्या जी के साथ दीक्षित होकर महाराज दशरथ जी ने सभी यज्ञों के राजा अश्वमेघ यज्ञ का अनुष्ठान किया जिस यज्ञ से महाराज़ के मित्र इन्द्र कुहरे से सूर्य की भाँति वृत्रासुर वध के पाप से मुक्त हो गये थे॥५२॥

बभ्राम वर्षमधिभूतलमस्य वाजी
श्रीचक्रवर्तिजयसूचकपत्रकण्ठः।
यं रावणोऽपि न शशाक बलान्निरोद्धुम्
संकल्पसर्गमिव भक्तिमतो नरादः॥५३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—चक्रवर्ती जी के विजय पत्र से बँधे कण्ठवाला दशरथ जी का अश्वमेघ यज्ञ का घोड़ा सम्पूर्ण पृथ्वी पर एकवर्षपर्यन्त भ्रमण करता रहा। भक्त की संकल्प सृष्टि को मनुष्यभक्षी राक्षस की भाँति जिस घोड़े को स्वयं रावण भी बलपूर्वक नहीं पकड़ पाया॥५३॥

**भूयोऽगमत् समभिभूपति ह्रेषमाणः**
**श्रीचक्रवर्तिविजयस्य यथा प्रमाणम्।**
**पूर्णोऽभवद्दशरथस्य मखोऽश्वमेधो**
**विप्रेन्द्रमन्त्रविधिविश्रुतदिग्विभागः॥५४॥**

**कृपा टीका**—एक वर्ष के अनंतर महाराज चक्रवर्ती के विजयप्रमाण जैसा हिनहिनाता हुआ अश्वमेघ यज्ञ का घोड़ा महाराज दशरथ के पास पहुँच गया। ब्राह्मणों के वैदिक मंत्रों से दिग्दिगन्तरों में अपनी प्रसिद्धि फैलाता हुआ महाराज दशरथ का अश्वमेघ यज्ञ पूर्ण हो गया॥५४॥

**ईजे स विश्वजितमेव च राजसूयम्**
**संतोष्य विप्रचयमर्पितदानभूयम्।**
**यज्ञैस्त्रिभिर्निहतपापकलापतापो**
**राजा रराज विरजा मघवानिवस्वः॥५५॥**

**कृपा टीका**—इसी प्रकार महाराज दशरथ जी ने विश्वजित यज्ञ एवं राज़सूय यज्ञ भी कि-T। इस प्रकार ब्राह्मणों को विपुल दान दक्षिणा से संतुष्ट करके अश्वमेघ विश्वजित तथा राजसूय यज्ञ से पाप ताप को नष्ट करके महाराज दशरथ स्वर्ग में इन्द्र की भाँति विराजमान हुए॥५५॥

**भूयो वसिष्ठ मतमेत्य स ऋष्यशृङ्गः**
**पुत्रेष्टिमारभत पुत्रफलां फलेप्सुः।**
**भक्त्या जुहाव हुतहव्यभुजां वरिष्ठो**
**मन्त्रैरथर्वशिरसो हविषेव धाता॥५६॥**

**कृपा टीका**—फिर वसिष्ठ जी का मत समझकर ऋष्यशृंग जी ने फल की प्राप्ति की इच्छा से पुत्र फल देने वाली पुत्रेष्टि यज्ञ का विधान किया और ब्रह्मा जी की ही भाँति अथर्वशीर्ष में प्रयुक्त मंत्रों से हवन किया॥५६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तस्मिन्मखे हविषि मन्त्रिणि हूयमाने
वह्निर्विशिष्टवपुषा प्रकटो बभूव।
मन्दस्मितं दशरथं परिवीक्ष्यमाणः
संसूचयन्निव समीप्सितकार्यसिद्धिम्।।५७।।

**कृपा टीका**—मंत्रपूर्वक उस यज्ञ में शृंगी ऋषि द्वारा हवन किये जाने पर मन्द मन्द मुस्कुराते हुए दशरथ जी को उनकी अभीष्ट पुत्र की सूचना देते हुए मधुर मधुर मुस्कुराकर विशिष्ट शरीर से अग्निदेव प्रकट हुए॥५७॥

आरक्तवर्णवसनो दशनप्रभाभि
र्निन्दन्निवेन्दुममलं तपनीयवर्णः।
उत्सेधलज्जितहिमाचलशैलकूटः
कूटं हरन्निव निसर्गनिरीक्षणेन।।५८।।

**कृपा टीका**—लालवर्ण का वस्त्र धारण करते हुए अपनी दन्तावलि की शोभा से निर्मल नवीन चन्द्रमा को निन्दित करते हुए, स्वर्ण के समान तेजोमय तथा अपने शरीर की दीर्घता से हिंमालय के शिखर को लज्जित करते हुए स्वाभाविक चितवन से सभी कपटसमूहों को हरण करते हुए से अग्निदेव प्रकट हुए॥

दोर्भ्यां वहन् कनकभाजनमप्रमेयम्
दिव्यान्नपायसयुतं रजतच्छदञ्च।
यस्मिन्पुराणपुरुषः षडनूत्तमांशैः
साक्षाद् रराज भगवान् नभसीव नादः।।५९।।

**कृपा टीका**—अग्निदेव अपने दोनों हाथों से एक विशाल दिव्य पायस से युक्त चाँदी के ढक्कन से ढका हुआ सुन्दर स्वर्णपात्र लिए हुए थे जिसमें आकाश में शब्द के समान साक्षात् परमेश्वर भगवान् श्रीरामचन्द्र अपने श्रेष्ठ ऐश्वर्य धर्म यश श्री ज्ञान एवं वैराग्य इन छहों अंशों के साथ विराज रहे थे॥५९॥

तं वीक्ष्य वीक्षणमहाक्षणमक्षणाना
मग्र्यं हिरण्यगुरुमग्रजमग्रजानाम्।
नाथो नृणामनमदग्रजपुंगवानां
ज्येष्ठं ससांसदगणैः सह पुण्यकीर्तिम्।।६०।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—नेत्रों के लिए महोत्सवस्वरूप देवताओं के अग्रणी सुवर्ण के पिता ब्राह्मणों के बड़े भ्राता श्रेष्ठ ब्राह्मणों से भी अवस्था में बड़े पवित्र कीर्तिवाले अग्निदेव के दर्शन करके अपने सभासदों के साथ महाराज दशरथ ने उन्हें प्रणाम किया॥६०॥

**पूर्णा मखा द्विजगणैः परियाज्यमानाः**
**पूर्णोऽभवन्मनुजराज मनोरथस्ते।**
**पूर्णो विलोकयसि भोः सुततां गतानां**
**पूर्णेन्दुसम्मितमुखानि सुरोत्तमानाम्॥६१॥**

**कृपा टीका**—हे महाराज, श्रेष्ठ ब्राह्मणों द्वारा कराये गये तुम्हारे चारों यज्ञ पूर्ण हो गये। हे राजेन्द्र, आपका मनोरथ भी पूर्ण हो गया तुम भी पूर्ण हो चुके हो और शीघ्र ही चार रूपों में अवतार ले रहे तुम्हारे पुत्रत्व को प्राप्त किये हुए महाविष्णु भगवान चार चार पूर्ण चन्द्रमुखों को तुम शीघ्र ही निहारोगे॥६१॥

**यद्यद्वसिष्ठ इहते मनसा भविष्यत्**
**कार्यं व्यभावयदहो विबुधैरचिन्त्यम्।**
**तत्तद् विलोकय नरेन्द्र निसर्गसिद्धम्**
**संकल्पसिद्धमहतो ह्यनुयाति सिद्धिः॥६२॥**

**कृपा टीका**—हे महाराज देवताओं के भी चिन्तन से दूर जिस जिस अग्रिम कार्य का महर्षि वशिष्ठ जी ने चिन्तन किया है उसे उसे तुम शीघ्र ही सिद्ध होते देखोगे क्योंकि सिद्धियाँ संकल्पसिद्ध महात्माओं का अनुगमन करती हैं॥६२॥

**एतं चरुं कलितपूरुषसत्वमीड्यं**
**पत्नीसु भूप विभजस्व यथानुपूर्व्यम्।**
**आस्वेव लप्स्यस इमांश्चतुरस्सुपुत्रान्**
**त्रैयाम्पुमानिव पुमर्थचतुष्टयं त्वम्॥६३॥**

**कृपा टीका**—हे महाराज परमेश्वर के आविर्भाव से युक्त इस चरु को अपनी तीनों पत्नियों में आनुपूर्वी के क्रम से विभक्त करके बाँट दीजिए। इन्हीं तीनों पत्नियों में आप चार पुत्रों को उसी प्रकार प्राप्त करेंगे जिस प्रकार साधक पुरुष वेदत्रयी में अर्थ, धर्म, काम, मोक्ष को प्राप्त करता है॥६३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इत्येवमादि रघुवंशमणिं निदिश्य**
**सोऽन्तर्दधे दहन एषु पवित्रकर्मा।**
**पश्यत्सु सत्सु विवुधेष्वभितः प्रसूनै**
**र्वर्षत्सु लब्धचरुरास्त नृपः कृतार्थः।।६४।।**

**कृपा टीका**—इस प्रकार चारों ओर से पुष्पवर्षा करते हुए देवताओं के देखते देखते महाराज दशरथ को निर्देश देकर पवित्रकर्मा वे अग्निदेव अन्तर्धान हो गये और महाराज दशरथ भी चरु को प्राप्तकर कृतार्थ हुए॥६४॥

**लब्ध्वा वैश्वानराच्छ्री हविरिवनृपतिः श्रोत्रियाद् ब्रह्मबोधं**
**जिज्ञासुः प्रीतचेता अधिमखभवनं पूजितब्रह्मपुत्रः।**
**ऋत्विग् विप्रर्षिवृन्दैः कृतसकलविधिं ब्रह्मगर्भं प्रियासु**
**प्रीत्या धित्सुर्गुरूक्त्या शकलितविभवं भक्तितस्तद् विभेजे।।६५।।**

**कृपा टीका**—जिस प्रकार जिज्ञासु श्रोत्रिय सद्‌गुरु से ब्रह्मज्ञान प्राप्त करता है उसी प्रकार अग्निदेव से हवि प्राप्त कर प्रसन्न होकर यज्ञशाला में वसिष्ठ जी की पूजा करके ऋत्विजों एवं ब्रह्मणों के साथ सम्पूर्ण विधि की पूर्णता से युक्त विभुवों के अनुसार वसिष्ठ जी के निर्देश से तीनों प्रियाओं में गर्भाधान की इच्छा से प्रेम और भक्ति के साथ महाराज ने उस हवि को तीनों रानियों में बाँट दिया॥६५॥ श्लोक संख्या ६५ से ८२ तक स्रग्धरा छन्द है।

**कौसल्यायै तदर्धं सहरिदशरथः प्रादिशत् तच्चतुर्थं**
**कैकेय्यै चेश्वराढ्यं कृतशकलयुगं तूर्यमाढ्यं विकाभ्याम्।**
**कौसल्याकैकयीभ्यां प्रकृतिबहुमतां भोजयिष्यन् सुमित्रां**
**विद्याभ्यां ब्रह्मणीद्वे मतिमिव मतिमान् राजराजो रराज।।६६।।**

**कृपा टीका**—भगवान श्रीराम से युक्त हविष्य का अर्धांश महाराज दशरथ ने कौसल्या जी को दिया, फिर ईश्वर के अंश से युक्त चरु का चतुर्थांश कैकेयी को दिया, पुनः विश्व और हिरण्यगर्भ से युक्त चतुर्थांश को दो भागों में विभक्त करके कौसल्या एवं कैकेयी के द्वारा उसे अपनी स्वाभाविक प्रियतमा सुमित्रा जी को खिलाते हुए महाराज उसी प्रकार सुशोभित हो रहे थे जैसे बुद्धिमान व्यक्ति परा और अपरा विद्याओं द्वारा शब्द ब्रह्म और परब्रह्म का बुद्धि से संयोग कराकर प्रसन्न होता है॥६६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**विशेष**–"विकाभ्याम्" यहाँ 'वि' शब्द का विश्व अर्थ है और 'कं' शब्द का हिरण्यगर्भ अर्थ है।

**इत्थं राज्ञो महिष्यः सुचरितचरुतो लब्धगर्भाबभूवुः।**
**रेजू राजीवनेत्रा नरपतिमणिना दत्तसौभाग्यभारा।।**
**यज्ञं सम्पाद्य चेष्ट्वा रघुकुलतिलको ब्राह्मणान् ऋत्विजांश्च**
**मन्त्राशीर्वादवाद्यैरनुनदितनभा राजगेहं प्रतस्थे।।६७।।**

**कृपा टीका**—इस प्रकार राजश्रेष्ठ दशरथ जी द्वारा जिन्हें विपुल सौभाग्य दिया गया था ऐसी महारानियाँ वैदिक विधान से अग्निदेव द्वारा दिये हुए चरु का भक्षण करके सगर्भा एवं बहुत प्रसन्न हुईं। रघुकुलशिरोमणि महाराज दशरथ ने भी यज्ञ सम्पन्न करके ब्राह्मणों एवं ऋत्विजों की पूजा करके मंत्रों आशीर्वादों तथा मंगल वाद्यों से नभोमंडल को शब्दायमान करते हुए राजभवन को प्रस्थान किया।।६७।।

**कौसल्या त्यक्तशल्या जगदुदयकरं गर्भदेशे दधाना**
**क्षौमं वासो वसाना नरपतिमणिना दत्तमाना ददाना।**
**दानं मानं द्विजेभ्यो मगधनृपसुता कैकयीभ्यामुपेता**
**रेजे राजीववक्त्रा त्रिदिवमभिगता देवमातेव मान्या।।६८।।**

**कृपा टीका**—गर्भवेदना से रहित एवं जगत के अभ्युदयकारी परमात्मा को गर्भ में धारण करती हुई, रेशमी परिधान से युक्त, महाराज द्वारा सम्मानित होती हुई स्वयं भी ब्राह्मणों को दान एवं सम्मान देती हुईं सुमित्रा कैकेयी के साथ कमलमुख वाली माननीय बड़ी रानी कौसल्या जी स्वर्ग में विराजमान देवमाता अदिति की भाँति सुशोभित हो रही थीं।।६८।।

**देवाश्चाप्याप्तसेवाः प्रमुदितमनसः शार्ङ्गिणस्त्यक्तभोगा**
**स्तिर्यग्योनिं प्रपन्ना धृतकपिवपुषो वन्यवृत्या चरन्तः।**
**वीर्योद्रेकाल्लसन्तो रघुपतिपदवीं मार्गयन्तो वसन्तः।**
**सन्तः सौभाग्यवन्तः कृतविपुलबलाः शैलवृक्षप्रहाराः।।६९।।**

**कृपा टीका**—अब देवता भी शार्ङ्गधन्वा भगवान श्रीराम की सेवा प्राप्त करके स्वर्गीय भोग छोड़कर पशुयोनि में आकर वानर शरीर धारण करके वन्यवृत्ति से भ्रमण करते हुए पराक्रम के आधिक्य से सुशोभित होते हुए भी अनेक सेनाएँ

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बनाकर वृक्ष और पर्वत को धारण किये हुए श्रीराम जी की बाट जोहते हुए परम सौभाग्यशाली हनुमान अंगद आदि संतों की भूमिका में अवतीर्ण हुए॥६९॥

**शम्भुः श्रीरामसेवासुलभकपितनुं सादरं स्वीकरिष्यन्**
**त्यक्त्वा कैलासवासं परमपशुपतिर्मारुतादञ्जनायाम्।**
**जातो जाम्बूनदाभो भुवनहितकरो जातरूपाद्रिदेहो**
**गेहः सौशील्यधाम्नोर्दनुजकुलरिपुर्वज्रसारो हनूमान्॥७०॥**

**कृपा टीका**—परमपूज्य पशुपति भगवान शंकर भी भगवान श्रीराम की सेवा के लिए उपयुक्त वानर शरीर को स्वीकार करते हुए कैलास छोड़कर पवन देवता के संयोग से अंजना जी में स्वर्ग के समान कान्ति से सम्पन्न तथा सुमेरु पर्वत के समान विशाल आकार वाले सौशील्य एवं तेज के भवन, राक्षसों के शत्रु बजरंगी हनुमान जी के रूप में प्रगट हुए॥७०॥

**श्रीरामं पूर्णकामं खलकुलहतये भारतीमाव्रजन्तम्**
**ज्ञात्वा साकेतधाम्नो गुणगणमहितां ब्रह्मबोध्यामयोध्याम्।**
**पुष्पैराशैः सहासैः नवकिसलयकैः फुल्लराजीवराजी**
**प्रत्युद्यातुं समायान् मलयजमरुतामोदकान्तो वसन्तः॥७१॥**

**कृपा टीका**—राक्षसों को मारने के लिए साकेत धाम छोड़कर भारतवर्ष की नित्य सम्वर्धनी वेद के द्वारा जानने योग्य श्री अयोध्या में सगुण साकार भगवान् श्रीराम को जानकर उनका स्वागत करने के लिए आशायुक्त विकसित पुष्पों द्वारा नवीन पल्लवों मलय मारुत एवं सुगंध से सुन्दर तथा विकसित कमल समूह का उपहार लेकर सुरभित वसन्त स्वयं अयोध्या में आ गया॥७१॥

**प्रातः पाथोजपुञ्जप्रथितरसमदा मञ्जुभृङ्गा जुगुञ्जु-**
**स्तिष्ठन्नाम्रे नताम्रो मधुरतरगिरा कोकिलोना चुकूज।**
**मन्दं मन्दं समीरःशिशिरितसरयूनीरधीरो गभीर**
**स्तीरे तीरे कुटीरे निखिलमुनिगणान् सेवमानः स्म वाति॥७२॥**

**कृपा टीका**—प्रातःकाल कमलसमूह के मकरंद से मतवाले होकर भंवरे मधुर गुंजार करते थे आम्र पल्लव पर बैठकर काले पुंस्कोकिल कुहू कुहू करते थे एवं सरयू जी के जल को अतीव शीतल करने वाला बुद्धि को भी चलायमान करता

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हुआ यह प्रातःकालीन वायु धीरे धीरे बहता हुआ सरयू के प्रत्येक तट पर बनाये हुए कुटीरों में रहने वाले मुनिगणों की सेवा करता हुआ बहता था॥७२॥

**कौसल्यागर्भसिन्धौ विलसितवपुषः सत्यसन्धस्य जिष्णोः**
**सानन्दं संव्यतीताः ससुखमिव विधोर्द्वादशैते हि मासाः।**
**योगो लग्नं च वारो ग्रहकलिततिथिः सर्वमेवानुकूलम्**
**श्रीरामस्यावतारे दनुजवनभिदो भूमिभारापहारे।।७३।।**

**कृपा टीका**—सत्यप्रतिज्ञ, परमविजयी, राक्षस समूह को मारने वाले, सुन्दर शरीर की शोभा से सम्पन्न एवं कौसल्या जी के गर्भ महासागर में चन्द्रमा की भाँति सुख और आनन्द से निवास करते हुए भगवान श्रीराम के बारह महीने आनंद से बीत गये और पृथ्वी का भार नष्ट करने वाले रामावतार के समय योग नक्षत्र वार यह सब अनुकूल होगया॥७३॥

**मेषे श्रीमान् विवस्वान् मकरगतकुजो भानुपुत्रस्तुलायाम्**
**कर्कस्थोऽतर्कसंस्थो विबुधकुलगुरुर्गीष्पतिश्चापि रेजे।**
**शुक्रो मीनेऽप्यदीनो दनुजकुलगुरुः सोच्चसंस्थाग्रहा वै**
**आगच्छत्याप्तकामे दशरथभवनं सर्वमासीत् प्रशस्तम्।।७४।।**

**कृपा टीका**—श्री दशरथ जी के राजभवन में आप्त काम भगवान श्री राम के अवतार लेते समय सब कुछ प्रशस्त हो गया था। भगवान मेष के सूर्य, मकर के मंगल, तुला के सूर्यपुत्र शनिश्चर, कर्क में तर्क से शून्य देवताओं के कुलगुरु बृहस्पति एवं मीन के दैत्यगुरु शुक्राचार्य। इस प्रकार भगवान श्रीराम के अवतार के समय पाँच ग्रह उच्च के थे॥७४॥

**चैत्रे शोभार्कजैत्रे कुभुवि मधुमये शुक्लपक्षे नवम्याम्**
**मध्याह्ने सन्निधाने वियति दिनमणौ लोकविश्रामकाले।**
**स्वेष्टापूर्ते मुहूर्तेऽभिजिति स भगवान्ब्रह्मसाक्षाददिवैन्द्र्याम्**
**कौसल्यायां मृगाङ्कः प्रकटितविभवो राम आविर्बभूव।।७५।।**

**कृपा टीका**—परमशोभायमान चैत्र, मंगल दिन, मधुमास शुक्ल पक्ष नौमीतिथि मध्याह्न तथा आकाश की मध्यरेखा पर सूर्यनारायण के उपस्थित होने पर लोगों के विश्राम के समय इष्टापूर्ति से युक्त अभिजित् मुहूर्त में परब्रह्म भगवान साक्षात् कौसल्यारूप पूर्व दिशा में श्रीरामरूप चन्द्र आविर्भूत हुए॥७५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**श्रीरामः कामकामो नवजलदरुची रत्नराजत् किरीटः**
**केयूरासक्तबाहुर्दशवदनविधो राहुरुद्यत् प्रतापः।**
**श्री शार्ङ्गं सन्निषङ्गं खलकुलकदनं चण्डबाणं दधानः**
**कौसल्यापुण्यराशिः स्मितवदनशशी मञ्जुमूर्तिर्बभासे।।७६।।**

**कृपा टीका**—प्रकट होने के पश्चात् कामदेव की भी कामनाओं के आश्रय नवीन बादलों के समान कान्ति वाले रत्नमंडित मुकुटधारण किये हुए भुजाओं में केयूर से समलंकृत रावणरूप चन्द्रमा के राहु परम प्रतापी तरकश के साथ साङ्गं धनुष एवम् राक्षसकुल के संहारक तीखा बाण धारण किये हुए कौसल्या जी के पुण्यों के पुञ्जीभूत मंद मुस्कान से युक्त मुखचन्द्र मधुर मूर्ति भगवान श्रीराम सुशोभित हुए।।७६।।

**श्रीवत्सांङ्कं मृगाङ्कं सुमसृणसुषमं भानुजागर्भसिन्धोः**
**पूर्णं पूर्णावतारं प्रणतभयहरं कोटिकन्दर्पकान्तम्।**
**दर्शं दर्शं सहर्षं विनिमिषनयना नागरीनम्रमूर्धा**
**कौसल्या भग्नशल्या सुतमतिरुचिरं नैव तृप्तिं जगाम।।७७।।**

**कृपा टीका**—श्रीवत्सलाञ्छन तथा भानुजा अर्थात् कौसल्या जी के गर्भ क्षीर सागर के पूर्ण चन्द्रमा पूर्णावतार भक्तभयहारी करोड़ों कामदेवों के समान सुन्दर ऐसे अत्यन्त रमणीय अपने वात्सल्यभाजन श्रीराम को बारम्बार निहारती हुई निर्निमेष नेत्रवाली समस्त दुःखों से रहित शीश झुकाई हुई कौसल्या चतुर होती हुई भी आज तृप्त नहीं हो रही थी।।७७।।

**आहैनं भक्तिनम्रा जय जय भगवन् ब्रह्मपूर्णावतारिन्**
**जानामि त्वां पुराणं सकलविभु महाविष्णुमीड्यावतारम्।**
**संहृत्यैतत् स्वरूपं जननयनसुखं बालरूपं भजस्व**
**स्निग्धा ते बाललीला सततमथ बुधैर्गीयतां कोसलेन्दो।।७८।।**

**कृपा टीका**—अब कौसल्या जी ने भक्ति से नम्र होकर कहा, हे ब्रह्म, हे परिपूर्ण हे सबके अवतारी भगवन् आपकी जय हो। मैं आपको जानती हूँ। आप पुराण पुरुषोत्तम सभी विभुओं के व्यापक महाविष्णु एवं स्तुति करने योग्य पूर्णावतार हैं। हे प्रभु इस स्वरूप को छोड़कर भक्तों के नयनानन्ददाता बालरूप को स्वीकार

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कर लीजिए हे कोसलेन्दो आपकी यह स्निग्ध बाललीला निरंतर विद्वानों द्वारा गायी जाये॥७८॥

श्रुत्वा मातुर्वचोऽसौ स्मितमुखकमलो भक्तभावानुगामी
भूत्वा बालोऽप्यबालः स्रुधितकलगिरं मन्दमन्दं रुरोद।
कौसल्याङ्के विराजन् लघुघनवपुषा बाललीलां वितन्वन्
ब्रह्माण्डानेककर्ता सदयहृदयया चुम्बितास्यो जनन्या॥७९॥

**कृपा टीका**—माँ का वचन सुनकर भक्तों के भाव का अनुगमन करने वाले भगवान श्रीराम पहले तो कमलमुख से मन्द मन्द मुस्कुराये, पश्चात् सारे संसार के पिता होकर भी बाल लीला करते हुए कोमल स्वर में रोने लगे। कौसल्या जी की गोद में विराजते हुए छोटे बादल के समान शरीर से उपलक्षित अनेक ब्रह्माण्डों के कर्ता प्रभु को रोते देखकर दयापूर्ण हृदयवाली माँ ने उनके श्रीमुख चन्द्र का चुम्बन किया॥७९॥

कौसल्यायां स रामो धृतमनुजतनुर्बाल आविर्बभूव
पश्चाच्छ्रीकैकयीतः शुभरतभरतो जन्म लेभे सुशीलः।
एका देवी सुमित्रा जनयदथ सुतौ लक्ष्मणं लक्ष्मभाजं
शत्रुघ्नं भूपवर्योऽभवदतिमुदितः पुत्रकैस्तैश्चतुर्भिः॥८०॥

**कृपा टीका**—कौसल्या जी में परब्रह्म श्रीराम मनुष्यावतार धारण करके प्रगट हुए। इसके अनंतर कैकेयी जी से जगत कल्याण में लगे हुए भरत जी का आविर्भाव हुआ। अकेली सुमित्रा देवी जी ने सुलक्षणसम्पन्न लक्ष्मण तथा शत्रुहन्ता शत्रुघ्न को जन्म दिया। इस प्रकार राजा दशरथ चार पुत्रों से युक्त होकर बहुत प्रसन्न हुए॥८०॥

तूर्यं शङ्खाश्च भेर्यः पणवसुपटहादुन्दुभिश्चापि नेदुः
भक्त्या गायन् व्यनृत्यन् विबुधकुलबधूकिन्नरायक्षनागाः।
दिव्यैः पुष्पैरसंख्यैर्ववृषुरतितरां उत्सवोऽभून्महान् वै
प्रादादद्दानञ्च राजा धनमणिकनकं पुत्रतीर्थे प्रसन्नः॥८१॥

**कृपा टीका**—तुरही, शंख, पणव, ढोल और नगाड़े स्वयं बज उठे। देववधुएँ किन्नर गाने लगे और यक्ष नागादि प्रसन्नता से नाचने लगे। सबने दिव्य पुष्पों की

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वर्षा की। अयोध्या में अपूर्व उत्सव हुआ और महाराज ने पुत्रोत्सव की प्रसन्नता में धन, स्वर्ण, मणि आदि का ब्राह्मणों को दान दिया॥८१॥

**कुर्वन् दिव्यामयोध्यां पदकमलरजोराशिभिर्भूरिभाग्याम्**
**उर्वीं गुर्वीं वितन्वन् नवनलिनदृशा पापतापं विधुन्वन्।**
**श्यामः कन्दाभिरामो रमितदशरथो भ्रातृभिश्चिन्त्यमानः**
**कौसल्यास्तन्यपायी स इह विजयते राघवो रूपराशिः॥८२॥**

**कृपा टीका**—अपने चरणकमल की रजोराशि से अयोध्या को सौभाग्यशालिनी बनाते हुए और पृथ्वी को गौरवशालिनी बनाते हुए एवं अपने कमलनेत्र से जीव के पाप और ताप को नष्ट करते हुए अपने चरित्रों से महाराज दशरथ को रमाते हुए भरत लक्ष्मण शत्रुघ्न की स्मृति के पात्र बने हुए नीले मेघ के समान श्यामल सबके सुखदाता कौशल्या जी के पुण्य की राशि, ऐसे शिशुरूप राघव सरकार सबसे उत्कृष्ट हैं। ऐसे रूपराशि कौसल्या का स्तनपान करने वाले श्रीराघव सरकार की जय हो॥८२॥

**अथ ध्याने रामो विदितरघुरामावतरणो**
**गिरौ हृष्टो दृष्टोत्तमपुरुषबालानुचरितः।**
**प्रभुं दर्शं दर्शं नयनजलवर्षं प्रबलयन्**
**जगौ द्व्यष्टौ भक्त्या रघुतिलककीर्तीः शिखरिणीः॥८३॥**

**कृपा टीका**—इसी बीच भगवान शंकर का ध्यान करते हुए परशुराम जी ने श्रीरामचन्द्र भगवान का अवतार जान लिया और उन्होंने प्रभु श्रीराम के बालचरित का साक्षात्कार किया। उनका शरीर पुलकित हो उठा। प्रभु को बार बार देख देख अपने नेत्रों से आँसू बरसाते हुए भक्ति से शिशुरूप श्रीराम राघव सरकार की कीर्ति से युक्त सोलह शिखरिणी छन्द गाए॥८३॥ श्लोक संख्या ८३ से ९९ तक शिखरिणी छन्द है।

**विमुष्णंस्तापिच्छं शिरसि शिखिपिच्छं विलसयन्**
**कदम्बं रोलम्बं चिकुरनिकुरम्बैर्विगणयन्।**
**अहो दृग्भ्यां वर्षन्नमृतमथ चित्तं चपलयन्**
**मयूरेण श्यामः क इह पुरतः खेलति शिशुः॥८४॥**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—(श्री परशुराम जी ध्यान में बालराघव को निहारकर प्रश्न करने लगे) अहो तमाल की शोभा को चुराता हुआ सिर पर मोरपंख सुशोभित करता हुआ एवम् अपने घुंघुराले केशों से भ्रमरों के समूह को तिरस्कृत करता हुआ अपने नेत्रों से अमृत की वर्षा करता हुआ मेरे चित्त को चपल करता हुआ मोर के बच्चे के साथ मेरे समक्ष यह कौन श्यामल शिशु खेल रहा है॥८४॥

**म्रदिम्ना पाथोजं शतशतमनोजं तनुरुचा**
**शुचा लिम्पन् लिम्पन् वपुरतसिनीलं सुरजसा।**
**रजोधुन्वन् मातुर्मनसि परमानन्दजलधिम्**
**विधुस्तन्वन् रिंगन् क इह पुरतः खेलति शिशुः॥८५॥**

**कृपा टीका**—अहो अपनी कोमलता से कमल को, शरीर की कान्ति से कोटि कोटि कामदेवों को, चिन्ता से लिप्त करता हुआ एवं तीसी के फूल के समान नीले अपने श्रीविग्रह को, धूल से धूसरित करता हुआ तथा उसी से जीव के रजोभाव को नष्ट करता हुआ और माँ के हृदय हर्ष महासागर को चन्द्रमा की भाँति उल्लसित करता हुआ मेरे सामने रेंगता हुआ यह कौन बालक खेल रहा है?॥८५॥

**रुचां राशिः किं वा किमुत निचयोऽयं सुमहसाम्**
**श्रुतीनां सारो वा किमुत कलहारः सुमनसाम्।**
**सुखं पुञ्जीभूतं किमुत कृतिनः कोसलपते-**
**रहोहोरातो मे क इह पुरतः खेलति शिशुः॥८६॥**

**कृपा टीका**—परशुराम जी आश्चर्य में कहते हैं अहो एकान्त में एक घंटे से मेरे समक्ष यह कौन बालक खेल रहा है क्या यह प्रकाशों की राशि है क्या यह तेजों का समूह है अथवा क्या यह वेदों का सारसर्वस्व है अथवा क्या यह निर्मल मन वाले महापुरुषों के हृदय का मधुर हार है अथवा क्या यह अयोध्यापति महाराज दशरथ का निरतिशय आनंद ही इकट्ठा होकर बालक बन गया है॥८६॥

**चमत्कुर्वन् किञ्चित् तडिदिव मुहुर्योगिमनसि**
**स्फुरंश्छ्यामो रामो रमितजितकामः कमलदृक्।**
**नमस्कुर्वन्नुर्वीपतिगृहिणिभाग्यं जलभुवं**
**तिरस्कुर्वन् कान्त्या क इ पुरतः खेलति शिशुः॥८७॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—अहो अत्यन्त रमणीय तथा अपनी बाललीला से काम को भी जीतने वाला योगियों के मन में एक क्षण के लिए स्फुरित होता हुआ स्वयं चमत्कार करता हुआ तथा महाराज दशरथ की पत्नी कौसल्या जी के भाग्य को नमस्कार करता हुआ एवं अपनी कान्ति से कमल का तिरस्कार करता हुआ यह कौन साँवला बालक मेरे सामने खेल रहा है॥८७॥

**क्षणं नृत्यन्नङ्गं क्षणमथ रजोभिश्च रजयन्**
**क्षणं लुण्ठन् धावन् क्षणमथ पतन् सस्मितमुखः।**
**क्षणं काकैर्हंसैः क्षणमथ मयूरैस्स्वसखिभिः**
**क्षणं पंकक्लिन्नः क इह पुरतः खेलति शिशुः॥८८॥**

**कृपा टीका**—अहो किसी क्षण नाचता हुआ किसी क्षण अपने शरीर को धूल से धूसरित करता हुआ किसी क्षण लोटता हुआ किसी समय दौड़ता हुआ किसी क्षण मुस्कुराकर गिरता हुआ कभी कौवों से कभी मयूरों से कभी हंसों से कभी मित्रों के साथ कभी कीचड़ से सना हुआ यह कौन बालक मेरे साथ खेल रहा है?॥८८॥

**प्रभाते सुस्नातः सुरभिपयसा कज्जलकलाः**
**कपोले विभ्राणः कमपि सकलङ्कं विधुमिव।**
**विभूषार्हो भूषामणिगणसमालंकृततनु**
**र्विकर्षन् मे चेतः क इह पुरतः खेलति शिशुः॥८९॥**

**कृपा टीका**—प्रभात काल में विधिवत् स्नान करके गाय के दूध से निर्मित कज्जल कला को कलंकसहित चन्द्रमा की भाँति कपोलों पर धारण करते हुए आभूषणों के योग्य होते हुए आभूषणों तथा मणिगणों से अलंकृत शरीरवाला मेरे चित्त का आकर्षण करता हुआ यह कौन बालक मेरे समक्ष खेल रहा है॥८९॥

**क्षिपन् स्वीयां छायां किमपि कमनीयां मणिमये**
**गतो रोषं तोषं कमपि सुखकोषं पदजुषे।**
**किरन् क्रीडन् भावैर्मधुररसमूर्तिः स्मररिपो**
**र्मनो विन्दन् नन्दन् क इह पुरतः खेलति शिशुः॥९०॥**

**कृपा टीका**—मणिजटित दीवार पर आती हुई अपनी ही छाया को बाल स्वभाव से कुछ कुछ डाँटते हुए कभी प्रसन्न होते हुए कभी रुष्ट होते हुए कभी अपने

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

चरणसेवकों को सुख का खजाना लुटाते हुए भिन्न भिन्न भावों से खेलते हुए भगवान शंकर के मन को रसमयी मूर्ति का लाभ कराते हुए आनंदित होते हुए यह कौन बालक खेल रहा है॥९०॥

कलं कौसल्याया मुदममृतवल्लीं सुफलयन्
पितुर्मोदामोदं मलयमिव वातः परिवहन्।
अयोध्या सौभाग्यं विधुरिव पयोधिं प्रगुणयन्
कवीनां सर्वस्वं क इह पुरतः खेलति शिशुः॥९१॥

**कृपा टीका**—अरे कौसल्या जी की प्रसन्नतारूप कल्पवृक्ष की लता को सफल बनाता हुआ एवं पिता के हर्ष सौरभ कोमलयानिल की भाँति धारण करता हुआ अयोध्या के सौभाग्यसागर को चन्द्रमा की भाँति तरंगायित करता हुआ कवियों का सर्वस्व यह कौन बालक मेरे समक्ष खेल रहा है॥९१॥

वितन्वन् वैराग्यं किमपि कलभाग्यं स्थितिमतां
तृषस्तर्षं तर्षन् हृदयमथ कर्षन् कृतिमताम्।
सतां माधुर्याम्भोरुहरुचिपरागान्तरगतो
मरन्दो मानन्दो विलसति पुरो राघवशिशुः॥९२॥

**कृपा टीका**—(अब अपने ही ध्यान में किये हुए आठ प्रश्नों का परशुराम जी स्वयं ही ध्यान में उत्तर दे रहे हैं) साधना में स्थिर रहने वाले महापुरुषों का सांसारिक विषयों से उत्पन्न हुआ वैराग्य बढ़ाते हुए एवं अपूर्व सौभाग्य जगाते हुए और कर्मठ महानुभावों की नयनों की पिपासा को तीव्र करते हुए हृदय को आकर्षित करते हुए ऐसे सन्तों के माधुर्य रूप कमल के पराग में विराजमान साक्षात् मकरंदरूप महालक्ष्मी को भी आनंद देनेवाले बालरूप राघव सरकार ही मेरे समक्ष विराजमान हैं॥९२॥

अयं मेघश्यामो मुनिदृगभिरामो रमयतां
वरो वारां राशिः सुखसुयशसोश्चामलरुचाम्।
रुचं मुष्णन् पुष्णन् परमसुषमामोषधिपुषः
पुरारातेः पूज्यो विलसति पुरो राघवशिशुः॥९३॥

**कृपा टीका**—ये देखो। मेघ के समान श्यामल स्वजनों के नेत्रों को आनंद देने वाले एवं सुखद व्यक्तित्वों में सबसे श्रेष्ठ सुख एवं सुयश के महासागर निर्मल

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कान्तिवाले मानकों की भी कान्ति चुराने वाले तथा चन्द्रमा की अपूर्व शोभा का पोषण करने वाले भगवान शंकर के भी पूज्य बालरूप राघव सरकार मेरे समक्ष सुशोभित हो रहे हैं॥९३॥

**असौ सौन्दर्याब्धेश्छविशुचिसुधापार्वणविधु**
**र्द्विषत्कान्तारागिनः प्रणतकुलपाथोरुहरविः।**
**सृजन् शोभासर्गं सुरभयविसर्गं परिसृजन्**
**नवं कन्दं निन्दन् विलसति पुरो राघवशिशुः॥९४॥**

**कृपा टीका**—यह देखो सौन्दर्य महासागर की छवि सुधा से युक्त परमशोभामय पूर्णिमा के चन्द्ररूप शत्रुरूप वन के लिए दावाग्नि तथा भक्तकमलों के लिए सूर्यनारायण के समान शोभा की सृष्टि रचते हुए तथा देवताओं के भय को विनष्ट करते हुए नीले बादल को भी निंदित करते हुए श्रीराम शिशुराघव मेरे समक्ष विराज रहे हैं॥९४॥

**नमन्तो यं सन्तो नयनचषकैः सौभगसुधां**
**पिबन्तो माद्यन्तो मधुलिह इवार्या दिशि दिशि।**
**भ्रमन्तो भ्राम्यन्तो रचितभवभंगा विदधते**
**जगत्स्वीयं सोऽयं विलसति पुरो राघवशिशुः॥९५॥**

**कृपा टीका**—जिनको नमन करते हुए संतजन अपने नयनों के प्यालों से सुन्दरता रूपी सुधा का पान करते हुए प्रत्येक दिशा में भ्रमर की भाँति मतवाले हो, होकर सर्वत्र भ्रमण करते हुए संसार के भय से विमुक्त होकर सर्वत्र विचरण करते हुए सारे संसार को अपना बना लेते हैं वे ही मुन्ना सरकार मेरे सामने विराजमान हो रहे हैं॥९५॥

**क्वचित्क्रीडन् नृत्यन् क्वचिदथ मयूरैश्चलचटैः**
**क्वचिद् धावन् काकैः क्वचिदथ मरालैर्मृदुपदः।**
**महिम्ना मानिन्या विदधदुरुमानं किल भुवो**
**मुनीनां मानार्हो विलसति पुरो राघवशिशुः॥९६॥**

**कृपा टीका**—कहीं पर खेलते हुए कहीं पर नृत्य करते हुए कहीं पर मयूरों चञ्चल गौरैयों कौवों तथा हंसों के साथ दौड़ते हुए कोमल चरणों वाले अपनी महिमा से माननीया पृथ्वी का अधिक सम्मान बढ़ाते हुए मुनियों के लिए भी माननीय बालरूप राघव जी मेरे समक्ष विराज रहे हैं॥९६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पिबन् कौसल्यायाः स्नुतमथ पयोदं कररुहैः
स्पृशन् सव्यं सव्यैर्जनित जननीमोदमहिमा।
मुकुन्दः कन्दाभो भवभवभवानीभवभवो
भवन् भव्यो नव्यो विलसति पुरो राघवशिशुः॥९७॥

**कृपा टीका**—अहो कौसल्या जी के दुग्धक्षरित स्तन का पान करते हुए और बायें हाथ की उँगलियों से माँ के बायें स्तन को स्पर्श करते हुए शिशु लीला से मांताश्री को मोद महिमा को बढ़ाते हुए मन्द मन्द मुस्कुराते हुए नवीन बादल के समान सुन्दर जगत की उत्पत्ति तथा पार्वती भगवान शंकर के भी कल्याणकर्ता भव्य नव्य स्वरूप में सुशोभित हो रहे शिशु राघव सरकार मेरे दृष्टिगोचर हो रहे हैं॥९७॥

तमालाभोलाभो मुनिजनयतिन्द्रामलदृशां
पटं पीतं प्रीतो रविकरनिभं बिभ्रदनघः।
घनश्यामो रामो जनदृगभिरामो रघुवरो
ममायं सर्वस्वं विलसति पुरो राघवशिशुः॥९८॥

**कृपा टीका**—तमाल के समान सुन्दर एवम् मुनिजन यतिजनों की निर्मल आँखों के एकमात्र लाभस्वरूप, निष्पाप परम प्रसन्न सूर्य के पीताम्बर धारण किये हुए नीले बादल के समान श्यामल भक्तों के नयनों के आनन्ददाता, रघुकुल में श्रेष्ठ, सर्वव्यापी, मेरे सर्वस्व, श्रीराम शिशुरूप राघव मेरे नयनों के सामने विराज रहे हैं॥९८॥

महत् पुञ्जीभूतं परममथपूतं सुकृतिनाम्,
सुखं मूर्तं स्फूर्तं विमलमनुरागं स्ववपुषा।
वहन् मन्दं मन्दं कल मृदुवदन् वै चिदचितो
विशिष्टाद्वैतं तद् विलसति पुरो राघवशिशुः॥९९॥

**कृपा टीका**—सुकृतजनों के इकट्ठे हुए तेज तथा सज्जनों के मूर्तिमान स्फुरित सुख एवं निर्मल अनुराग को अपने शरीर से धारण करते हुए मधुर मधुर तोतली वाणी में बोलते हुए चित् और अचित् से विशिष्ट ऐसे विशिष्टाद्वैत प्रतिपाद्य परब्रह्म श्रीराम ही शिशुराघवरूप में सामने से मुझे दर्शन दे रहे हैं॥९९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कौसल्यास्तनपानलालसमना मन्दस्मितोऽव्यक्तवा
गेकं ब्रह्मगुडालकावृतमुखाम्भोजो घनश्यामलः।
खेलन् पंक्तिरथाजिरे रघुवरो बालानुजैः सुन्दरो
देवो धूलिविधूसरो विजयते रामो मुकुन्दः शिशुः॥१००॥

**कृपा टीका**—कौसल्या जी के स्तनपान के लिए ललचाये हुए, मनवाले, मंद मंद मुस्कुराते हुए तोतली बोली बोलते हुए एकमात्र अपने घुंघराले बालों से श्रीमुखारविन्द को ढके हुए, बादल के समान श्यामल, धूलि से धूसरित तथा शिशुराघव के रूप में अवतार लिए हुए ऐसे देवाधिदेव भगवान श्रीराम की जय हो जय हो॥१००॥ शार्दूलविक्रीडित छन्द।

इत्थं शुभे भार्गवराघवीये भव्ये महाकाव्य उदारवृत्ते।
सर्गः शिवाख्यः कविरामभद्राचार्यप्रणीतेऽस्तु सतां श्रियै शम्॥१०१॥

**कृपा टीका**—इस प्रकार महाकवि रामभद्राचार्य द्वारा प्रणीत परम भाष्य उदार छंदों वाले श्रीभार्गवराघवीयम् नामक महाकाव्यं में प्रस्तुत ग्यारहवाँ सर्ग सज्जनों का कल्याण करे और उनकी श्रीवृद्धि करे॥१०१॥ उपजाति।

**इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामिरामभद्राचार्यप्रणीते श्रीभार्गवराघवीये महाकाव्ये "श्रीराघवावतरणं" नाम एकादशः सर्गः॥**

**॥श्रीराघवः शन्तनोतु॥**

इस प्रकार धर्मचक्रवर्ती महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामी रामभद्राचार्य विरचित श्रीभार्गवराघवीय महाकाव्य में 'श्रीराघवावतरणम्' नामक ग्यारहवाँ सर्ग सम्पन्न हुआ॥

॥श्रीराघवः शन्तनोतु॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीमद्राघवो विजयते ॥

# अथ द्वादशः सर्गः

**रामोऽथ कौमारमतीत्यहारं सभ्रातृकः कल्पितकाकपक्षः।**
**क्रीडन्नयोध्येशगृहाजिरेषु क्रमेण पौगण्डवयः प्रपेदे॥१॥**

**कृपा टीका**—बाललीला के अनंतर भगवान श्रीराम कुमारावस्था को पूर्ण करके शिर पर काकपक्ष धारण करते हुए अपने तीनों भ्राताओं के साथ अयोध्यापति दशरथ जी के घरों और आंगनों में खेलते हुए क्रमशः पौगण्डावस्था को प्राप्त हो गये अर्थात् छठे वर्ष में प्रवेश कर गये॥१॥ इस सर्ग में प्रायशः उपजाति छन्द है।

**षड्भिः शरद्भिः शरदिन्दुवक्त्रो निदर्शयिष्यन्निव षड्भगानि।**
**मन्ये षडैश्वर्यमयत्वमेवावतारयन् षष्ठमगात् स वर्षम्॥२॥**

**कृपा टीका**—शरच्चन्द्र के समान मुख वाले प्रभु श्रीराम ने अपने जीवन के छः वर्षों के द्वारा क्रमशः ऐश्वर्य धर्म यश श्री ज्ञान वैराग्य नामक छहों ऐश्वर्यों को देखते हुए से छठे वर्ष में प्रवेश किया। मुझे ऐसा लगता है कि अपने छः ऐश्वर्यों को ही मनुष्य लोक में उतारते हुए प्रभु ने छठे वर्ष में प्रवेश किया॥२॥

**तं चक्रवर्ती व्रतबन्धनाम्ना संस्कारयामास विधानकेन।**
**सुसंस्कृतं सानुजमीश्वरस्य लोकोपदेशार्थं हि मर्त्यलीलाः॥३॥**

**कृपा टीका**—"षड्वर्षम् क्षत्रियम् बलकामः" अर्थात् बल की कामना से क्षत्रिय कुमार का छठे वर्ष व्रतबन्ध कर देना चाहिए इस सिद्धान्त के अनुसार चक्रवर्ती दशरथ जी ने भाइयों सहित प्रभु श्रीराम का व्रतबन्ध संस्कार किया यद्यपि परमात्मा सर्वथा पवित्र हैं उनकी यह संस्कारलीला तो लोकशिक्षण के लिए है॥३॥

**शोभापरीतः कनकोपवीतो मौञ्जीधरो लब्धपलाशदण्डः।**
**गायत्र्यमास्थाय महानुभावो व्रतं व्रतज्ञः स गुरावुवास॥४॥**

**कृपा टीका**—व्रत की विधि जानने वाले महा प्रभाव सम्पन्न प्रभु श्रीराम स्वर्ण

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

का यज्ञोपवीत, मौञ्जी मेखला तथा पलाशदण्ड धारण करके असीम शोभा से युक्त हो रहे थे अनन्तर उन्होंने तीनो भाइयों के सहित गायत्री व्रत का अनुष्ठान करके गुरुकुल में निवास किया।।४।।

**अल्पेन कालेन समस्तविद्या आसादिताः सादविवर्जितेन।**
**भावा इव प्राक्तन् जन्मनिष्ठा उद्‌बोधिता बोधकसाहचर्यात्।।५।।**

**कृपा टीका**—जैसे स्मरण कराने वाली सामग्री के संयोग से पूर्व जन्म के संस्कार स्वयं ही जग जाते हैं उसी प्रकार प्रभु के मन में भी उन्हीं की इच्छा से प्रसुप्त सारी विद्याएँ जगकर सक्रिय हो गयीं।।५।।

**विद्याव्रतस्नानविधाविनीतो रामः स वीथीष्वपराजितायाः।**
**भ्राम्यन् धनुर्बाणधरो धराया भारावतारं स्म विशंसतीव।।६।।**

**कृपा टीका**—इस प्रकार विद्या और व्रत की विधाओं में विनीत अत्यन्त निपुण श्रीराम धनुष बाण धारण करके अयोध्या की वीथियों में भ्रमण करते हुए पृथ्वी के भार के अवतरण की सूचना सी दे रहे थे।।६।।

**स सप्तमं बालकसप्तमोऽब्दं प्रविश्य बालैर्भरतादिभिश्च।**
**क्रीडन् सरय्वाः पुलिनेषु लोकं रामोऽभिरामो रमयाम्बभूव।।७।।**

**कृपा टीका**—श्रेष्ठ बालक भगवान श्रीराम सातवें वर्ष में प्रवेश करके सरयू जी के तटों पर भरत आदि बालकों के साथ खेलते हुए स्वयं लोकाभिराम प्रभु समस्त लोकों को रमाने लगे।।७।।

**सीतापि भूमानमथानुगन्तुमियेष धर्तुं ललनावतारम्।**
**देवी विदेहेषु वसुन्धरातो वीचीं विना वारि कथं हि तिष्ठेत्।।८।।**

**कृपा टीका**—अब भगवती सीता जी ने भी प्रभु श्रीराम का अनुगमन करने के लिए मिथिलापुरी में पृथ्वी से नारी अवतार लेने की इच्छा की क्योंकि तरंग बिना जल के रह ही कैसे सकती है।।८।।

**साकेतलोकस्य च याधिदेवी सौन्दर्यसंव्रीडितकामवामा।**
**सा शिक्षयन्ती पतिदैवताख्यं व्रतं भुवश्चावततार साक्षात्।।९।।**

**कृपा टीका**—जिसके सौन्दर्य से कामदेव की पत्नी रति भी लज्जित हो गयी ऐसी साकेतलोक की अधिदेवता साक्षात् भगवती सीता लोक में पतिव्रत धर्म

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

की शिक्षा देती हुई पृथ्वी से अवतीर्ण हुईं। उनका तात्पर्य यह था कि पत्नी की दृष्टि में पति परमेश्वर होता है अतः भगवान राम आकाश से प्रकट हो रहे हैं तो उन्हें विनम्रता के कारण धरातल से अवतार लेना चाहिए॥९॥

**पद्भ्यां धरण्यामटतीह नाथो वन्द्या ततोमे वसुधानवद्या।**
**मूर्ध्ना निवोढुं प्रभुपादरेणुं सीतेति भूमेः प्रकटा बभूव॥१०॥**

**कृपा टीका**—यहाँ उत्प्रेक्षा की गई है कि भगवती सीता जी ने विचार किया कि मेरे प्राणपति श्रीराम इस पृथ्वी पर निरावरण चरणाविन्द से पर्यटन करते रहते हैं अतएव यह पृथ्वी मेरे लिए वन्दनीय है प्रभु की चरण धूलि को अपने सिर पर धारण करने के लिए ही सीताजी पृथ्वी से प्रकट हुईं॥१०॥

**न मे पतिः स्यात् कुपतिः कदाचित् पालो भुवोऽप्यस्तु पतिर्ममेति।**
**सापत्न्यमस्या इव वारयन्ती चकार सीता जननीं महीं स्वाम्॥११॥**

**कृपा टीका**—मेरा पति कभी कुपति अर्थात् पृथ्वी का पति न बने और पृथ्वी का पालक (राजा) मेरा पति न बने इस प्रकार पृथ्वी का अपने प्रति सापत्न्य अर्थात् सौतन का भाव दूर करती हुई सीताजी ने पृथ्वी को अपनी माँ बना लिया॥११॥

**सीरध्वजो नाम महान् महात्मा विदेह वंश्यो मिथिलाधिपोऽभूत्।**
**यं याज्ञवल्क्यो विधिनानुशिष्य संसारभोगाद् विरतञ्चकार॥१२॥**

**कृपा टीका**—विदेह वंश में उत्पन्न सीरध्वज नामक महान् महात्मा मिथिलापुर के राजा बने, जिन राजा जनक को महर्षि याज्ञवल्क्य ने विधिवत् शिक्षा और दीक्षा देकर संसार के भोगों से विरक्त कर दिया था॥१२॥

**आसन् भविष्यन्ति नृपाश्च सन्ति मिथ्याभिधाना वसुधाधिनाथाः।**
**यथार्थ नामा जनकस्तथैकः प्रमाणयिष्यत्यचिरेण सीता॥१३॥**

**कृपा टीका**—इस पृथ्वी के शासक अर्थात् स्वामी राजा अनेक हैं और अनेक होंगे किन्तु सभी राजाओं को झूठे ही पृथ्वीपति कहा जाता है। यथार्थ में पृथ्वी के पति तो महाराज जनक ही हुए। जिसे अग्रिम कथा में सीता जी शीघ्र ही प्रमाणित करेंगी। क्योंकि पत्नी से संतान की प्राप्ति होती है। यदि सीताजी जनकराज की पुत्री हैं और वह पृथ्वी से प्रकट हुई हैं तो पुत्री की माँ पत्नी ही

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कहलायेगी इस दृष्टि से पृथ्वी जनक जी की वास्तविक पत्नी हैं॥१३॥

**भूमिं स भूपो विभराम्बभूव पत्नीमिवार्यां बहु मन्यमानः।**
**प्रलस्यतेऽतः प्रथमां प्रसूतिं सीताभिधानां श्रियमादिशक्तिम्॥१४॥**

**कृपा टीका**—योगिराज जनक ने श्रेष्ठ पत्नी की ही भाँति बहुत सम्मान करते हुए पृथ्वी का पालन किया क्योंकि इसी से महाराज सीता नामक आदिशक्ति महालक्ष्मी जी को प्रथम संतान के रूप में प्राप्त करेंगे॥१४॥

**यो याज्ञवल्क्याब्जपदप्रसादाद्देहे सुगेहेऽप्यभवद् विदेहः।**
**नारी कुचे हव्यभुजस्फुल्लिङ्गे किञ्चिद् विशेषं न विवेद विद्वान्॥१५॥**

**कृपा टीका**—जो योगिराज जनक महर्षि याज्ञवल्क्य जी के चरणकमल के प्रसाद से देह और अपने राजभवन में रहते हुए भी इतने विदेह हो चुके थे अर्थात् शरीर धर्म से इतने ऊपर उठ चुके थे कि ब्रह्मवेता जनक को अब नारी के वक्ष और अग्नि के लपट में कोई अंतर नहीं समझ पड़ता था अर्थात् उन्हें सुनयना के वक्ष पर न तो शीतलता का अनुभव होता था और न ही अग्नि की लपट में हाथ डालने पर उष्णता का॥१५॥

**यं ब्रह्मवेत्तारमदभ्रबोधं सर्वे प्रणेमुर्भुवि योगिवर्याः।**
**शुकोऽपि यद्वक्त्रविधुप्रसादसुधां प्रपीयाप विमुक्तिमीड्याम्॥१६॥**

**कृपा टीका**—जिन योगिराज जनक को ब्रह्मवेत्ता, एवं अगाध ज्ञान सम्पन्न जानकर सभी योगिजन साष्टांग प्रणाम करते थे योगीन्द्र शुकाचार्य जी भी जिनके मुखचन्द्र की प्रसादरूप ज्ञानसुधा का पान कर मुक्त हो गये॥१६॥

**एवं प्रजाः पालयतः सतोष्य त्रेतायुगेऽप्यास्त कृतो महिम्ना।**
**वेदान्तशास्त्रार्थगभीरपंक्तीर्धीरो जगादास्य गृहे सुकीरः॥१७॥**

**कृपा टीका**—इस प्रकार महात्मा के प्रजापालन करते हुए त्रेता युग में भी महिमा से कृतयुग हो गया था यहाँ तक कि वेदान्त शास्त्रार्थ की गंभीर पंक्तियों को मिथिला महाराज के राजभवन का धीरबुद्धिवाला तोता भी सुलझा दिया करता था॥१७॥

**यस्याः सभा ब्राह्मणवृन्दजुष्टा पुर्यास्तुरीयं स्म मनत्युदारा।**
**मिथेन क्लृप्तां मिथिलापुरीं तां सोऽपालयद् दुग्धमती प्रतिष्ठाम्॥१८॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—विद्वान ब्राह्मणों से युक्त जिस मिथिलापुरी की सभा परब्रह्म परमात्मा का मनन करती थी उसी महाराज मिथि के द्वारा बसाई हुई दूध मती के तट पर विराजमान मिथिलापुरी का योगिराज जनक पालन करते थे॥१८॥

**भोगी बहिश्चान्तरतोवियोगी रागी बहिश्चान्तरतो विरागी।**
**यो योगभोगामलसम्पुटस्थं अजूगुपद्राघवभक्तिरत्नम्॥१९॥**

**कृपा टीका**—जनक जी बाहर से योगी और भीतर से वियोगी अर्थात् सांसारिक सम्बंधों से दूर थे वे बाहर से रागी और भीतर से परम वैराग्यवान थे उन्होंने योग और भोग के निर्मल सम्पुट में श्रीराम भक्तिरत्न को छिपा रखा था॥१९॥

**स एकदा कल्पितसोमयागः सीरध्वजो हस्तगृहीत सीरः।**
**पत्नीद्वितीयो नृपतिश्च पुण्यारण्यं कृतारण्यमथाजगाम॥२०॥**

**कृपा टीका**—वन में बन होने पर भी एक बार सीरध्वज जनक सोम यज्ञ का संकल्प करके हाथ में हल लेकर सुनयना जी के साथ पुष्पारण्य गये जिसे आजकल पुनोरा कहते हैं यह बिहार सीतामढ़ी जनपद में स्थित है॥२०॥

**वप्तुं वशी सोमलतां धरण्यां सौम्यः शुचिः सोमसमानशीलः।**
**क्षेत्रं समाक्रष्टुमना मनस्वी जग्राह जाम्बूनदलाङ्गलं सः॥२१॥**

**कृपा टीका**—परम संयमी सोमरस के पीने की पात्रता से युक्त चन्द्र के समान मधुर स्वभाववाले प्रशस्त मनवाले योगिराज जनक पृथ्वी में सोमलता बोने के लिए क्षेत्र को जोतने की इच्छा से हाथ में सोने का हल ले लिया॥२१॥

**कृषीवलो दिव्यकृषेः कृशार्तीः कृषन् स भूमीमनुभूतभूमा।**
**निर्मायमाणः स्वहलेन सीतां सीरी बभौ व्यूह इव द्वितीयः॥२२॥**

**कृपा टीका**—इस अलौकिक कृषि के कृषक एवम् आर्ति को नष्ट करनेवाले जीवन में भूमा परमात्मा को साक्षात्कार किये हुए योगिराज जनक भूमि को जोतते हुए अपने हल से सीता अर्थात् हल की रेखा बनाते हुए हाथ में हल लेकर द्वितीय व्यूह भगवान सङ्कर्षण के समान शोभित हो रहे थे॥२२॥

**यावन्महीमेष इयेष ईषत् क्रष्टुं नृपो लाङ्गलफालकेन।**
**तावद् विदार्यावनिमेव साक्षात् सीता किशोरी प्रकटा बभूव॥२३॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—जब तक महाराज जनक ने अपने हल के फाल से पृथ्वी को थोड़ा सा जोतना चाहा कि तब तक पृथ्वीको वितीर्ण करके साक्षात् सीता जी किशोरी रूप में प्रकट हुईं॥२३॥

**पूर्णामृतेवेन्दुकलांपयोदात् प्रभेव भानोस्तुहिनान्महान्धात्।**
**क्षीराम्बुधेः श्रीरिव रूपिणी सा सीता महीतः प्रकटा चकासे॥२४॥**

**कृपा टीका**—भगवती सीता पृथ्वी से प्रकट होकर ऐसी सुशोभित हो रही थीं मानो बादल से चन्द्रमा की पूर्णामृता नामक सोलहवीं कला निकली हो। मानो अन्धकार पूर्ण कुहरे के बीच से सूर्यनारायण की प्रथा प्रस्फुटित हो गयी हो। मानो क्षीरसागर से परमरूपवती लक्ष्मी आविर्भूत होगयी हों॥२४॥

**सौवर्णसिंहासनमाश्रयन्ती विद्युन्निभा भूषणभूषिताङ्गी।**
**सा षोडशी षोडशवर्षदेश्या सखीभिरष्टाभिरुपास्यमाना॥२५॥**

**कृपा टीका**—सीता जी सुवर्ण सिंहासन पर विराजमान थीं वे बिजली की भाँति प्रकाशित हो रही थीं उनके सम्पूर्ण अंग अलंकारों से सजे थे वह स्वयं भी षोडश वर्षीया युवती के वेश में थीं और सोलह वर्ष से कुछ कम अवस्था वाली आठ सखियाँ उनकी सेवा कर रही थीं॥२५॥

**तां चारुशीलाप्रमुखाश्च भेजुः सेवोपचारे कुशलाः कुमार्यः।**
**गृहीतबालव्यजनातपत्राः सा पत्रपाः स्मेरमुखारविन्दाः॥२६॥**

**कृपा टीका**—चारुशीला आदि आठों सखियाँ जो सेवा की विद्या में कुशल थीं जिनका कौमार्य अक्षत था वे हाथ में व्यजन और छत्र लेकर लज्जाशील चेष्टा से मंद मंद मुस्कुराते हुए मुखारविन्द वाली शिष्ट सेविकाएँ सीता जी की सेवा कर रही थीं॥२६॥

**शम्पासहस्रादधिकप्रकाशा कौशेयवासा शुकतुण्डनासा।**
**पूर्णेन्दुहासा विलसद्विलासा सीता बभौ मण्डितभावनाशा॥२७॥**

**कृपा टीका**—सीताजी के शरीर में करोड़ों बिजलियों से भी अधिक प्रकाश था। वह रेशमी वस्त्र धारण किये हुए थीं। उनकी नासिका तोते की चोंच जैसी थी उनका हास पूर्णचन्द्र के समान था, विलास भी उनसे सुशोभित हो रहा था। भक्तों की भावनारूपी दिशा को अलंकृत करती हुई सीताजी अपूर्व शोभा प्राप्त कर रहीं थीं॥२७॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तां ब्रह्मविद्यामिव वन्दनीयां राकेन्दुलेखामिव चन्दनीयाम्।**
**साम्राज्यलक्ष्मीमिव नन्दनीयां ननन्द दृष्ट्वा मिथिलाधिराजः॥२८॥**

**कृपा टीका**—ब्रह्मविद्या के समान वंदनीय पूर्ण चन्द्रलेखा की भाँति आह्लाद के योग्य सम्राट की राजलक्ष्मी की भाँति अभिनंदनीय उन सीता भगवती को निहारकर मिथिलानरेश प्रसन्न हुए॥२८॥

**आश्चर्यविस्फारितनेत्रपद्मः कन्याललामेदमभीक्षमाणः।**
**वितर्कयामास बुधस्तदीयरूपाब्धिसंमग्नविवेकनौकः॥२९॥**

**कृपा टीका**—आश्चर्य से फटे हुए नेत्रकमल द्वारा इस कन्यारत्न को बार बार निहारते हुए उनके रूप महासागर में अपने विवेक की नौका को डुबाकर परम पंडित जनक जी उस समय अनेक तर्क वितर्क करने लगे॥२९॥

**केयं स्वलावण्यललामलक्ष्म्या कोटीन्दिरासौभगभागधेयम्।**
**धत्ते तिरस्कृत्य पदं दृशोर्मे स्नेहास्पदं वत्सलमौरसीव॥३०॥**

**कृपा टीका**—अरे यह कौन मेरी निजी पुत्री की भाँति मेरे नेत्रों में वत्सल रस के आश्रय स्नेह का स्थान बनाती जा रही है। जबकि इसकी लावण्यलक्ष्मी के द्वारा करोड़ों करोड़ों महालक्ष्मियों के सौभाग्य को भी ठुकराया जा रहा है॥३०॥

**निसर्गवैराग्यमयं मनो मे इमां समालोकयतोऽतिमात्रम्।**
**पयोनिधेपूरइवानुरक्तं राकामयीं सोममरीचिलेखाम्॥३१॥**

**कृपा टीका**—अरे स्वभाव से वैराग्यमय मेरा मन इस कन्या को देखकर इतना अनुरक्त हो रहा है जिस प्रकार पूर्णिमा की चाँदनी को निहारकर सागर का प्रवाह तरंगायित हो जाता है॥३१॥

**गौरप्रभाषोडशवर्षदेश्या सत्कल्पनासर्ग इवाब्जयोनेः।**
**अयोनिजापीयमशेषयोनिर्मनो हरन्तीव निसर्गसौम्या॥३२॥**

**कृपा टीका**—अरे यह गौरवर्ण वाली षोडशवर्षीया बालिका ब्रह्मा जी की सृष्टि की एक अलौकिक रचना सी प्रतीत हो रही है यह अयोनिजा अर्थात् किसी को भी माँ न बनाकर भी समस्त प्राणियों की माता सी लग रही है। यह स्वभाव से सौम्य होने पर भी मेरे मन को चुरा सी रही है॥३२॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सिंहासनस्था धृतधर्मसंस्था स यौवनापीयमनङ्गबाणैः।
अस्पृष्टगात्रा रतिकोटिशोभा विधातुरेषा ननु सृष्टिबाह्या।।३३।।

**कृपा टीका**—युवावस्था को प्राप्त होने पर भी इसके श्रीविग्रह को काम के वाणों ने स्पर्श तक नहीं किया इससे करोड़ों रतियों ने शोभा पाई है, सिंहासन पर विराजमान सम्पूर्ण धर्मसंस्थाओं को धारण करने वाली यह बालिका निश्चित ही ब्रह्मा की सृष्टि से बाहर की रचना लगती है।।३३।।

ततोऽभवद्व्योमगिरा गिरीशा गिरोमहिम्नोऽतिशयेन नित्या।
गरीयसी चारु विचारविज्ञमुर्वीशमुद्दिश्य महार्थगुर्वी।।३४।।

**कृपा टीका**—इसके अनंतर श्रेष्ठ विचारों में कुशल महाराजजनक को सम्बोधित करके महान् अर्थ के गौरव से युक्त अपनी महिमा से भगवान शंकर की भी वाणी से अत्यन्त विशिष्ट अत्यन्त श्रेष्ठ आकाशवाणी हुई।।३४।।

अलं महीशातिविचार्य चारुस्मिता सुतेयं तव मैथिलेन्द्र!।
प्रदाय तुभ्यं तनयां धरण्या त्वमेव तस्याः पतिरित्यसूचि।।३५।।

**कृपा टीका**—हे महाराज मिथिलापति अब बहुत विचार करना उचित नहीं है यह सुनकर मुस्कानवाली बालिका आपकी ही पुत्री है। पृथ्वी ने आपको यह पुत्री अर्पित करके सारे संसार को यह सूचना दे दी है कि पृथ्वी के एकमात्र पति आप ही हैं।।३५।।

इयं महालक्ष्मिमयी च माया मायापतेर्माधवगेहलक्ष्मीः।
भूत्वा सुता ते ननु माधवेयी त्वामेधयिष्यत्युदधिं रमेव।।३६।।

**कृपा टीका**—हे महाराज बैशाख शुक्ल नवमी को मध्याह्न में पृथ्वी से प्रकटी हुई साक्षात् महालक्ष्मी मायापति परमेश्वर की महामाया एवं मधुमास में प्रकट हुए अयोध्यापति श्रीराम की गृहलक्ष्मी तुम्हारी पुत्री बनकर उसी प्रकार तुम्हारे यश का सम्वर्धन करेगी जैसे लक्ष्मी जी ने सागर का नाम विख्यात कर दिया।।३६।।

इमां सुतां लालय लब्धलाभः सञ्जीवनीं वैष्णवपुङ्गवानाम्।
आचार्यवर्यां प्रथमामनिन्द्यां स्वां ब्रह्मविद्यामिव सर्वशक्तिम्।।३७।।

**कृपा टीका**—हे महाराज अपनी वेदान्तविद्या की भाँति आज अपूर्व लाभ से

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लाभान्वित होकर आप वैष्णवजनों की जीवनदायिनी निंदारहित उपासना जगत की प्रथम आचार्या सभी शक्तियों की पुञ्जीभूत इस पुत्री का वात्सल्यपूर्वक लालन पालन कीजिए॥३७॥

**इतीरितायां गवि गागनेय्यां प्रशस्यमाने जनकाधिराजे।**
**बभूव शब्दस्तुमुलस्त्रिलोकी व्यापी जनानां जय जानकीति॥३८॥**

**कृपा टीका**—इस प्रकार आकाशवाणी हो जाने पर जनकराज की भूरि भूरि प्रशंसा की जाने लगी जानकी जी की जय हो इस प्रकार लोगों का त्रिलोक व्यापी तुमुल घोष होने लगा॥३८॥

**नेदुर्दिवो दुन्दुभयश्च भेर्यः शंखामृदङ्गानकगोमुखाश्च।**
**पेतुः प्रसूनानि च नान्दनानि सृष्टानि भक्त्या विबुधाङ्गनाभिः॥३९॥**

**कृपा टीका**—उस समय आकाश में नगाड़े, भेरी, शंख, मृदृङ्ग, आनक, गोमुख, जैसे देववाद्य बजने लगे देववधुओं द्वारा बरसाये हुए नंदन वन के पुष्पों की वर्षा होने लगी॥३९॥

**जगुः कलं किन्नरचित्रसेन गन्धर्वमुख्याश्चसुगेशवर्याः।**
**सीतावतारं सुविचित्रगीतं समुल्लसन् मङ्गलरागरक्तम्॥४०॥**

**कृपा टीका**—श्रीसीतावतार को निमित्त मानकर मंगलराग से युक्त सुन्दर विचित्र गीत पद्धतियों में किन्नर चित्रसेन गन्धर्व आदि सुन्दर देवताओं के गायक मिथिलाञ्चलीय लोकधुन में संस्कृत के गीत गाने लगे॥४०॥

**जय जय जनककिशोरी भुवनत्रयभाविनि हे।**
**सीते! जय रामचन्द्रचकोरि पतितकुलपावनि हे।**
**चम्पकवर्णसमाभे सुजनभयवारिणि हे।**
**जाता भुवनहिताय विदेहगृहे स्ववशविहारिणि हे।**
**मिथिलाधरणिरतिधन्या सकललोकचन्दिनी हे।**
**यत्र खेलति धृत बालरूपा जनककुलनन्दिनी हे।**
**धन्या धन्या राज्ञी सुनयना माता जनकसुकृतमति हे**
**यस्या सुता भूता गिरिधरस्वामिनी सीता मुदा विलसति हे॥४१॥**

**कृपा टीका**—हे तीनों लोकों को उत्पन्न करनेवाली जनकनंदिनी आपकी जय

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हो। हे रामचन्द्र के मुखचन्द्र की चकोरी पतितपावनी सीताजी आपकी जय हो। हे चम्पा के समान शोभावाली हे भक्तों के भय हरनेवाली हे स्वाधीन श्रीराम के साथ विहार करने वाली जनकनंदिनी जी आप जगत के कल्याण के लिए जनक जी के यहाँ प्रगट हुई हैं। सम्पूर्ण लोकों को आह्लादित करने वाली यह मिथिलापुरी धन्य है जहाँ अत्यन्त शीघ्र बालरूप धारण करके जनकनंदिनी सीताजी खेलेंगी। महारानी सुनयना धन्य है, जनक जी का बहुत बड़ा पुण्य है जहाँ गिरिधर नामक जगद्गुरु रामभद्राचार्य की स्वामिनी सीता जी प्रसन्नतापूर्वक सुशोभित हो रही हैं।४१॥ गीतक छन्द।

**अत्रान्तरे नारद आजगाम वीणां प्रवीणो रणयन्नुदाराम्।**
**सत्संग ईड्यश्च यथा शरीरी प्रफुल्लराजीवसमानवक्त्रः।।४२।।**

**कृपा टीका**—इसी बीच वीणा बजाते हुए विकसित कमल के समान मुख वाले परमकुशल नारद साधक के पास शरीरधारी सत्संग की भाँति उस स्थल पर आ गये।४२॥ उपजाति छन्द।

**शरन्मृगाङ्कांशुनिसर्गगौरः स रौरवघ्नो धृतरौरवश्च।**
**धृतोपवीतो महसा परीतो मूर्तो बभौ ब्राह्म इवेड्यधर्मः।।४३।।**

**कृपा टीका**—शरत्कालीन चन्द्रमा की किरणों के समान गौरवर्ण रुरुमृग का चर्म धारण किये हुए रौरव नरक की यातना नष्ट करने वाले उपवीतधारी तेज से युक्त नारद शरीरी ब्राह्मणधर्म जैसे सुशोभित हो रहे थे।४३॥ उपजाति छन्द।

**प्रणन्तुकामो रघुनाथपत्नीं कृताञ्जलिर्मन्त्रविदां वरिष्ठः।**
**आर्यां समुद्दिश्य परेशभार्यां मुनिर्जगौ मञ्जुलषोडशार्याः।।४४।।**

**कृपा टीका**—श्रीराम जी की धर्मपत्नी सीताजी को प्रणाम करनेकी कामना से मंत्रवेत्ताओं में श्रेष्ठ नारद जी महाराज ने परमेश्वर की भार्या आर्या सीता जी को उद्देश्य बनाकर सोलह आर्याएँ गायीं।४४॥ उपजाति छन्द।

**आर्ये रघुवर भार्ये कृतसुरकार्ये नितान्तमविकार्ये।**
**सकलसतीकुलवर्ये द्रव मैथिलि मद्विधेऽनार्ये।।४५।।**

**कृपा टीका**—हे आर्ये! हे देवताओं के समस्त कार्य करने वाली हे सतीशिरोमणि! मुझ अनार्य पर कृपा कीजिए।४५॥ यहाँ नारदजी ने श्लोक संख्या ४५ से ६०

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तक सोलह आर्या छन्दों में श्रीसीताजी की स्तुति की है।

**हीनं भवनिधिलीनं पीनं पातकपयोनिधेर्मीनम्।**
**नारदमेनं खिन्नं पालय मातः शिशुं दीनम्॥४६॥**

**कृपा टीका**—हे माँ! सभी साधनों से हीन भवसागर में डूबे हुए पापरूप महासागर की स्थूल मछली परमखिन्न मुझ दीनबालक नारद का पालन कीजिए॥४६॥

**क्लिन्नं श्रमतः खिन्नं क्षुण्णं मात्रेषु सर्वतः खिन्नम्।**
**रक्षतु राघवमहिषी क्षीणं विषयेष्वनिर्विण्णम्॥४७॥**

**कृपा टीका**—अपनी ही आँसुओं से भीगे हुए श्रम के पसीने से लथपथ और विषय भोगों में अभ्यस्त सभी ओर से खिन्न एवं क्षीण विषयों के प्रति अनुरक्त मुझ अकिञ्चन की श्रीरामजी की पट्टमहिषी सीताजी रक्षा करें॥४७॥

**भ्रष्टं शाश्वतमार्गात् प्लुष्टं त्रितापचण्डदावाग्नौ।**
**नष्टं क्लिष्टं चैनं स्वं बालं जानकी पातु॥४८॥**

**कृपा टीका**—सनातन मार्ग से भ्रष्ट हुए आध्यात्मिक, आधिदैविक, आधिभौतिक, इन तीनों तापों की प्रचण्ड अग्नि में झुलसे हुए, श्रेय से नष्ट और क्लेशों से क्लिष्ट मुझ बालक की माँ जानकी रक्षा करें॥४८॥

**गीते श्रुतिछन्दोभिः स्मृतिभिर्मुनिभिश्च मानिशं भक्तै**
**र्नीते परमविनीते सीते शीघ्रं शिशुं पाहि॥४९॥**

**कृपा टीका**—वेद के छन्दों द्वारा गायी हुई, मुनियों और स्मृतियों द्वारा भी प्रशस्त चरित्रे, भक्तों द्वारा मानस मन्दिर में विराजमान कराई हुई, हे भगवती सीते, हे विनम्रता की मूर्ति आप मुझ बालक की रक्षा करें॥४९॥

**मातर्यदि मम दोषान् कलयिष्यसि विमलमानसे कदाचित्।**
**आकल्पं भवसिन्धोः पारं नाहं गमिष्यामि॥५०॥**

**कृपा टीका**—हे माँ! यदि अपने निर्मल मन में मेरे दोषों की गणना करेंगी तो मैं अनन्त कल्पों तक भवसागर से पार नहीं हो पाऊँगा॥५०॥

**मातर्नृपवरदयिते मयि ते करुणा कथं न जायेत।**
**करुणाब्धे करुणापः किं वा ते शुष्कतां याताः॥५१॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे माँ! हे राजरानी! मुझ पर आपकी करुणा क्यों नहीं हो रही हैं क्या आप जैसी करुणासागर का करुणाजल मेरे लिए सूख गया है॥५१॥

**क्रन्दत्येष विनाथः श्रीरघुनाथप्रिया पुरो बालः।**
**पालय राघवभामिनि भवयामिन्यां चिरं सुप्तम्॥५२॥**

**कृपा टीका**—हे भगवान राघव की भामिनी आप श्रीरामप्रिया के समक्ष यह अनाथ बालक रो रहा है इस संसार की रात्रि में सोये हुए मुझ बालक का आप पालन करें॥५२॥

**श्रुत्वा तव महिमानं श्रुतिकृतगानं त्वदीयपदपद्मम्।**
**शरणागतं शरण्ये पालय मामम्ब! करुणार्द्रे!॥५३॥**

**कृपा टीका**—वेदों के द्वारा जिसका गान किया गया है ऐसीआपकी महिमा सुनकर आपके श्रीचरण कमल की शरण में आये हुए मुझ बालक का आप पालन करें क्योंकि आप शरण देने में समर्थ तथा करुणा से आर्द्र चित्तवाली हैं॥५३॥

**मातस्तवतनुशोभां नहि गदितुं पारयेन्महेशोऽपि।**
**सकलकलानिधिरामो यत् परमाणौ निमग्नोऽभूत्॥५४॥**

**कृपा टीका**—हे माँ! आपके श्रीविग्रह की शोभा भगवान शेष भी नहीं कह सकते जिसके परमाणु मात्र में सम्पूर्ण कलाओं के निधि भगवान राम भी मग्न हो गये॥५४॥

**नयनहरिणमलकाङ्कं सुदशनकान्तिसुकौमुदीसनाथम्।**
**दृष्ट्वा यन्मुखचन्द्रं राघवनयनं चकोरोऽभूत्॥५५॥**

**कृपा टीका**—हे माँ जहाँ नेत्र ही हरिण के समान हैं तथा काले केश ही श्यामता एवं दन्तावली कान्ति ही चाँदनी है ऐसे आपके मुखचन्द्र को निहारकर श्रीराघव के नेत्र भी चकोर बन गये क्योंकि चन्द्रमा के सारे लक्षण आप में घट गये॥५५॥

**मृद्वी मृणालगौरी जनककिशोरी किशोरमृद्वङ्गी।**
**प्रभुमुखचन्द्रचकोरी सीता मां पातु भवभीतेः॥५६॥**

**कृपा टीका**—हे भगवती! आप अत्यन्त कोमल और कमलनाल के समान श्वेतवर्णा हैं आप जनकजी की किशोरी तथा अत्यन्त कोमल अंगों वाली है आप श्रीराम के मुखचन्द्र की चकोरी हैं इसलिए आप मेरी भवभय से रक्षा कीजिए॥५६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**जानकि जलरुहनेत्रे मित्रान्वयकंजमित्रपरमेष्टे।**
**ईष्टे को मम दुःखं नाशयितुं त्वां विना मातः॥५७॥**

**कृपा टीका**—हे जनकनंदिनी! हे कमलनयनी, हे सूर्यवंशरूप कमल के सूर्य श्रीराम की प्राणप्रिये, हे माँ आपके बिना मेरा दुःख नष्ट करने में कौन समर्थ है॥५७॥

**धरणिसुते रमणीये रमणीजनवन्दनीयचरणाब्जे।**
**सीते परमविनीते नाशय मे भीमभवभीतिम्॥५८॥**

**कृपा टीका**—हे पृथ्वीपुत्री, हे रमणीजनों द्वारा वंदनीय चरणकमलवाली, हे परमविनम्रे, हे सीते, आप मेरी भयंकर भवभीति को नष्ट कर दें॥५८॥

**सुस्मितवदनसरोजे असितशिरोजैर्विलज्जदलिवृन्दै।**
**र्विगलदुरोजपयोभिः प्रीणय तोकं निजं मातः॥५९॥**

**कृपा टीका**—हे मुस्कान से युक्त मुखकमल वाली अपने नीले केशों से भ्रमरवृन्द को लज्जित करनेवाली माँ अपने वात्सल्यमय टपकते हुए दुग्धप्रवाह से इस बालक को प्रसन्न कर दीजिए॥५९॥

**रघुवरभामिनि भद्रे हृदि धृतशिशुममता महासमुद्रे।**
**वात्सल्यभावसान्द्रे मयि करुणां किं न विदधासि॥६०॥**

**कृपा टीका**—हृदय में ममतासमुद्र को धारण करने वाली वात्सल्यभाव से गंभीर ऐसी हे श्रीराम की पत्नी सीताजी मुझ पर कृपा क्यों नहीं कर रहीं॥६०॥

**रूपं ह्यदो निन्दितकामवामं संक्षिप्यतां राममनोऽभिरामम्।**
**समागते स्वामिनि रामभद्रे भूयस्त्वमीदृग् भवितासि भद्रे॥६१॥**

**कृपा टीका**—हे कल्याणी श्रीराम के मन को आनंद देनेवाले कामपत्नी रति को भी निंदित करनेवाले इस किशोरी रूप को आप कृपया समेट लीजिए मिथिलापुरी में श्रीरामभद्र के आने पर आप फिर इसी प्रकार बन जाइयेगा॥६१॥

**विधेहि भोः सम्प्रति बाललीलां प्रपन्नसंखेदविभेदशीलाम्।**
**पुत्रीसुखं देहि नराधिपाय वेदान्तविद्येव विवित्सवे कम्॥६२॥**

**कृपा टीका**—इस समय आप शरणागतों के खेद को नष्ट करनेवाली बाललीला कीजिए एवं जिस प्रकार वेदान्तविद्या जिज्ञासु को ब्रह्मसुख देती है उसी प्रकार आप महाराज जनक को पुत्री का आनन्द दीजिए॥६२॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निशम्य वाचं जगदेकमाता सा नारदस्यार्थविशारदस्य।
भूत्वा शिशुर्भावितबालभावं रुरोद कन्या कलकण्ठरावम्।।६३।।

**कृपा टीका**—इस प्रकार परमार्थ में कुशल नारद जी की वाणी सुनकर जगत की एकमात्र माता भगवती सीता नन्हीं सी बालिका बनकर बालस्वभाव का प्रदर्शन करती हुई कोकिल स्वर में रोने लगीं।।६३।।

उत्थाप्य कन्यां रुदतीं महर्षी राजद्रजोराशि निगूढदेहाम्।
ददौ विदेहाय बुभुत्सवेऽसौ वेदान्तविद्यामिव तामनिन्द्याम्।।६४।।

**कृपा टीका**—श्रीनारद जी ने चमकती हुई धूलि की राशि में छिपी हुई रोती हुई उस कन्या को उठाकर गोद में लेकर योगिराज जनक को उस अनिन्द्य बालिका को उसी प्रकार समर्पित कर दिया जैसे जिज्ञासु को वेदान्तविद्या समर्पित की जाती है।।६४।।

प्रकाशमानां कमनीयकन्यां समग्रहीन् नारदतो नरेन्द्रः।
उपासिताद्ध्रानुमतोऽथ शुक्ल यजुश्श्रुतिं स्वामिव याज्ञवल्क्यः।।६५।।

**कृपा टीका**—महाराज़ जनक जी ने उस प्रकाशमान सुन्दर कन्या को नारद जी से उसी प्रकार ग्रहण किया जैसे उपासना से प्रसन्न सूर्यनारायण से याज्ञवल्क्य जी ने शुक्लयजुर्वेद की श्रुतियों को ग्रहण किया था।।६५।।

सा पांसुभिर्गुण्ठितसर्वगात्रा विद्युन्निभा दीपितदिग्दिगन्ता।
भेजे श्रियं भूपतिहस्तयुग्मे स्थिताब्जखण्डे युवबालहंसी।।६६।।

**कृपा टीका**—धूलि से सीताजी के सम्पूर्ण अंग ढके हुए थे उनकी कान्ति विद्युत् के समान थी, वे अपने प्रकाश से सभी दिग्दिगन्तों को प्रकाशित कर रही थीं महाराज जनक के दोनों हाथों में स्थित भगवती सीता कमलखंड में स्थित बालहंसिनी जैसी प्रतीत हो रही थीं।।६६।।

भूयो वदन्नारद आर्द्रनेत्रपाथोरुहो रुद्धगलो गभीरम्।
धन्योऽसि भूपालमणे त्रिलोक्यां न त्वादृशः सञ्चितपुण्यपुञ्जः।।६७।।

**कृपा टीका**—फिर नेत्र कमल को आँसुओं से भिगोकर रुद्धकण्ठ से गम्भीर वाणी में नारद जी बोले–हे राजशिरोमणि जनक! तुम धन्य हो, तुम्हारे जैसा इस संसार में कोई भी पुण्यवान नहीं है।।६७।।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**दिष्ट्या महाराज विवर्धसे त्वं विद्यामिवासाद्य परां विपश्चित्।**
**इमां मुदा लालय लालनीयां पुत्रीं धरित्र्या जगतो जनित्रीम्।।६८।।**

**कृपा टीका**—हे महाराज सौभाग्य से तुम उसी प्रकार समृद्ध हो रहे हो जैसे पराविद्या को प्राप्त कर विद्वान श्रेयस् का भागी बनता है समस्त संसार की माता होकर भी पृथ्वी की पुत्री बनी हुई लालन पालन करने योग्य इस कन्या का वात्सल्यपूर्वक पालन करो।।६८।।

**इयं तवेज्यातपसोः श्रुतस्य स्वेष्टस्य पूर्तस्य तथा मखानाम्।**
**मूर्तं फलं रामकरारविन्दे समर्प्य योगीव भव प्रपन्नः।।६९।।**

**कृपा टीका**—हे महाराज यह पुत्री आपके यज्ञ तपस्या, स्वाध्याय, इष्टापूर्ति एवं श्रौतयज्ञों का मूर्तिमान फल है। इसे श्रीरामजी के करकमल में समर्पित करके कर्मयोगी की भाँति प्रभु को प्रपन्न होजाओ।।६९।।

**साक्षादिदं यत् चिदचिद्विशिष्टाद्वैतं परब्रह्ममयं च तत्त्वम्।**
**तदेव ते' भक्तिवशं महात्मन् माया सुतात्वं समुपेत्य भाति।।७०।।**

**कृपा टीका**--हे महात्मन्, जो यह चिदचिद् विशिष्टाद्वैत परब्रह्मतत्व वेदान्त प्रसिद्ध है वही आपकी भक्ति के वशीभूत होकर अपनी लीला से आपकी पुत्री बनकर सुशोभित हो रहा है।।७०।।

**वैशाखमासे शुचि शुक्लपक्षे तिथौ नवम्यां शुभभौमवारे।**
**मध्याह्नभानावभिजिन्मुहूर्ते सीतावतारक्षणमाहुराप्ताः।।७१।।**

**कृपा टीका**—हे महाराज वैशाख मास शुक्लपक्ष की नवमी मंगलवार मध्याह्न अभिजित् मुहूर्त के सुन्दर समय को ही आप्तजन श्रीसीता जी के अवतार का क्षण कहते हैं। संयोग से इसी क्षण में तुम्हारे यहाँ इस कन्या का प्राकट्य हुआ है इसलिए इसे अवतारी कन्या ही समझना।।७१।।

**कान्तं गुणौघैः सिनुयात्सतीयं सीयेत कान्तेन भुजान्तराले।**
**कुर्वंश्च सीतां त्वमिमामपश्यः सीतेति नाम्ना जगति श्रुता स्यात्।।७२।।**

**कृपा टीका**—नारद जी ने सीता जी का नामकरण करते हुए कहा-हे महाराज यह कन्या सतीशिरोमणि बनकर अपने प्राणवल्लभ श्रीराम को अपने ही गुणसमूह रूप रस्सी से बाँधेगी और स्वयं भी रसिकशेखर श्रीराम के बाहुबंधन में बँध

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जायेगी। तुमने भी सीता अर्थात् हल की रेखा बनाते हुए इसके दर्शन किये इसलिए संसार में यह कन्या सीता नाम से ही प्रसिद्ध होगी। क्योंकि बंधनार्थक षिञ् धातु से कर्ता और कर्म से क्त प्रत्यय करने से सीता शब्द की निष्पत्ति हो जाती है॥७२॥

**इत्युक्तवत्येव तदा सुरर्षौ मुदा गते गागनिकीं गवीशः।**
**ननन्द दृष्ट्वावनिनन्दिनीं तां सनन्दिनीमेत्य यथा पयोधिः॥७३॥**

**कृपा टीका**—इस प्रकार कहकर प्रसन्नतापूर्वक आकाश मार्ग से नारद जी के प्रस्थान करने पर पृथ्वीकन्या को देखकर जनकराज उसी प्रकार प्रसन्न हुए जैसे अपनी पुत्री लक्ष्मी को निहारकर क्षीरसागर प्रसन्न हुआ था॥

**इत्थं नृपः कल्पितसोमयागे कुर्वन् स सीतां समवाप्य सीताम्।**
**सम्पाद्य यज्ञं सतयाथ पुण्यारण्यात् पुरं प्रापदिवात्मपूर्त्या॥७४॥**

**कृपा टीका**—इस प्रकार संकल्पित सोमयाग में सीता अर्थात् हल की रेखा बनाते हुए भगवती सीता को प्राप्त करके यज्ञ सम्पन्न कर आत्मा की पूर्णता जैसी पुत्री सीता के साथ महाराज जनक अपनी राजधानी मिथिला लौट आये॥७४॥

**स ज्येष्ठपत्न्यै च पतिव्रतायै कन्यां कलाकान्तिकनत्कपोलाम्।**
**ददौ पतिः प्रत्ययवान् प्रियायै स्वात्मेव मत्यै भगवत्प्रपत्तिम्॥७५॥**

**कृपा टीका**—महाराज जनक ने पूर्णामृता कला की कान्ति से देदीप्यमान मुख मंडलवाली अयोनिजा कन्या सीता जी को अपनी पतिव्रता प्रिया ज्येष्ठपत्नी सुनयना जी को विश्वासपूर्वक उसी प्रकार समर्पित कर दिया जैसे विवेकशील जीवात्मा अपनी पत्नी बुद्धि को भगवत् शरणागति समर्पित कर देता है॥७५॥

**सुश्रोणिरेषा तनया पितृणां नरेन्द्रतः प्राप्यसुतामनिन्द्याम्।**
**यशस्विनी चाति बभौ भवानीं नारायणीमेत्य सुमेरुजीव॥७६॥**

**कृपा टीका**—सुन्दर कटिप्रदेशवाली यशस्विनी, पितृगणों की पुत्री सुनयना नारायण की भक्ति पार्वती जी को प्राप्त कर सुमेरु पर्वत की पुत्री मेना की भाँति महाराज जनक से उस निर्दोष कन्या सीताजी को प्राप्त कर बहुत ही सुशोभित हुई॥७६॥

**सा दम्पतीभ्यां परिलाल्यमाना सीता लसन्ती मिथिलानगर्याम्।**
**दिने दिनेऽवर्धत शुक्लपक्षे चान्द्रीव लेखा नतसर्वलेखा॥७७॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—सम्पूर्ण देवताओं द्वारा नमस्कृत माता पिता द्वारा पालित पोषित होती हुई मिथिलापुरी में विराजमान सीताजी शुक्लपक्ष में चन्द्रमा की रेखा की भाँति दिन दिन बढ़ने लगीं॥७७॥

**लक्ष्मी स्वयं सेवितुमेव सीतां निजांशिनीं नम्रनदीशरीरा।**
**कल्लोलसङ्गैः कमलाभिधाना तत्पादपद्मं कमलैः समार्चत्॥७८॥**

**कृपा टीका**—लक्ष्मी जी स्वयं अपनी अंशिनी महालक्ष्मी सीताजी की सेवाकरने के लिए ही विनम्रतापूर्वक नदी शरीर धारण करके कमलानाम से जगत् में प्रसिद्ध होकर लहरों के साथ आये हुए दिव्य कमलों से सीताजी के चरणकमलोंकी पूजा करती थीं॥७८॥

**ततस्तु सीतानुगतानुजाभिर्वृतासखीभिः सुमुखीभिरीड्या।**
**चिक्रीड कन्या मिथिलानगर्याः कुञ्जेषु वीथिषु च वाटिकासु॥७९॥**

**कृपा टीका**—इसके अनंतर सुन्दर मुखवाली सखियों तथा माण्डवी, उर्मिला, श्रुतिकीर्ति नामक अपनी तीन अनुगामिनी बहनों से घिरी हुई स्तुति करने योग्य सीताजी मिथिला नगरी की कुञ्जगलियों और वाटिकाओं में खेलने लगीं॥७९॥

**यतो यतस्तामरसायताक्षी प्रवालचारूचरणौ स्म धत्ते।**
**ततस्ततो भूमिरुरःसपद्मासनं शनैः सन्तनुते स्म मृद्वी॥८०॥**

**कृपा टीका**—सुन्दर कमल के समान कोमल विशाल नेत्रवाली सीताजी अपने पल्लवों के समान कोमल चरणों को जहाँ जहाँ रखती थीं वहीं वहीं पृथ्वी कोमल होकर अपने हृदय को कमलासन बनाकर उनके लिए प्रस्तुत कर देती थीं॥८०॥

**क्वचिद्रहो राघवमञ्जुमूर्तिं हृत्स्थां मुदा पूजयितुं शुभाङ्गी।**
**श्यामाब्जनेत्रासितवारिभिस्तां निनाय नीलामपि नीलिमानम्॥८१॥**

**कृपा टीका**—कभी कभी शोभन अंगों वाली सीताजी अपने हृदय में विराजमान श्रीराघवजी की साँवली मूर्ति को पूजा करने की इच्छा से अपने श्याम नेत्रकमल की नीली आँसुओं की धारा से नीली मूर्ति में भी और नीलिमा ले आती थीं॥८१॥

**आन्दोलिकाभिर्गुटिकाभ्रमर्या सा घोटकैर्नेत्रनिमीलिकाभिः॥**
**प्रसिद्धकेलीभिरमन्दसौख्या रेमे रमालालितपादपद्मा॥८२॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—लक्ष्मीजी के द्वारा जिनके चरणकमल की सेवा की जाती रही ऐसी अपूर्व सुख से सम्पन्न सीताजी कभी झूलकर कभी चकडोरियों से कभी भँवरों से कभी घोड़ा बनाकर कभी आँख बंद करके इस प्रकार लोक में प्रसिद्ध भिन्न भिन्न क्रीड़ाओं द्वारा आनन्दपूर्वक खेला करती थीं॥८२॥

**क्वचिद्विवाहं पटपुत्रिकाणां तथा विधैश्चापि वरैर्विधाप्य।**
**प्रतीक्ष्यमाणापि खरारिणा सा स्वकीयपाणिग्रहणं जहर्ष॥८३॥**

**कृपा टीका**—कभी कभी अपनी बनाई हुई गुड़ियों का दूसरी सखियों के गुड्डों के साथ विवाह करके स्वयं भी प्रभु श्रीराम के साथ अपने विवाह की प्रतीक्षा करती हुई प्रसन्न हो जाती थीं॥८३॥

**सा चैकदा सर्वसखीसमेता सीता परीता महसाद्भुतेन।**
**प्राचीं पुरः शारदशर्वरीशलेखेव लेखानुमता जगाम॥८४॥**

**कृपा टीका**—एक बार अद्भुत तेज से युक्त एवं देवताओं से सम्मानित सीताजी सभी सखियों के साथ शरद्कालीन पूर्णचन्द्र की ज्योत्स्ना के समान नगर की पूर्वदिशा की ओर गयीं॥८४॥

**ददर्श सा तत्र सुयज्ञशालामध्यासितं भूपतिमावनेयी।**
**सीता धनुर्विज्यममन्दभक्त्या सम्पूजयन्तं पतितं पुरारेः॥८५॥**

**कृपा टीका**—वहाँ सीताजी ने प्रत्यञ्चा से रहित पृथ्वी पर पड़े हुए भगवान शंकर के किसी पुराने धनुष की अपूर्व भक्ति से पूजा करते हुए यज्ञशाला के मध्य बैठे हुए महाराज जनक जी को देखा॥८५॥

**विज्ञातवृत्तापि च कौतुकाय पप्रच्छ पुत्री पितरं निदानम्।**
**किं दैवतं ह्येतदहो धरण्यां निरस्तसत्वं भवतार्च्यतेऽद्धा॥८६॥**

**कृपा टीका**—सब कुछ जानती हुई भी पुत्री सीता ने कौतुक के लिए पिताश्री से कारण पूछा पिताश्री! यह कौन सा देवता निर्जीव होकर खंडित अवस्था में पृथ्वी पर पड़ा है जिसकी आप इतने प्रेम से पूजा कर रहे हैं॥८६॥

**देवाः कदाचिन्न महीं स्पृशन्ती श्रुतं ममैतद्भवतो मुखाब्जात्।**
**रजस्सखं ह्येतदहो विनाथं किं पूज्यते पूजितसर्वभूपैः॥८७॥**

**कृपा टीका**—हे सम्पूर्ण राजाओं से पूजित पिताश्री आप ही के मुखकमल से मैंने सुना है कि देवता कभी पृथ्वी का स्पर्श नहीं करते। अरे यह तो धूलि में

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सना हुआ भूमि पर अनाथ की भाँति पड़ा है। इसकी आप क्यों पूजा कर रहे हैं॥८७॥

**जगाद राजा परिलाल्य पुत्रीं नेदं सुते दैवतमीशचापम्।**
**अवेहि चैतद् भृगुनन्दनेन संस्थापितं मे मिथिलाधरण्याम्॥८८॥**

**कृपा टीका**—बेटी को दुलारते हुए महाराज जनक ने कहा पुत्रि! यह देवता नहीं है। यह तो भगवान शंकर का धनुष है। इसे परशुराम जी ने मेरी मिथिला की भूमि में पूजन के लिए रख दिया था अभी इतना ही समझो॥८८॥

**विज्यं प्रविध्वंसित धातृजेज्यं शम्भो कराम्भोज सुखोचितं च।**
**समस्त चैतन्यमयोऽपि यस्मै जडत्वमेवोपजहार विष्णुः॥८७॥**

**कृपा टीका**—हे पुत्री प्रत्यञ्चा से रहित होकर भी इस धनुष ने ब्रह्मा के पुत्र दक्ष के यज्ञ को नष्ट किया यह भगवान शंकर के करकमल के स्पर्शसुख का भी अनुभव कर चुका है। इसकी विडम्बना यही है कि समस्त चैतन्यमय भगवान विष्णु ने भी इसे उपहार के रूप में जड़ता ही प्रदान की॥८९॥

**न्यासीकृतं कामविनाशिनेदं श्रीदेवराते हरिणेव कं के।**
**ततः प्रभृत्येव समस्तभूपैः सम्पूजितं तद्धि मयापि भद्रे॥९०॥**

**कृपा टीका**—हे बेटी! जिस प्रकार भगवान नारायण द्वारा ब्रह्माजी को क्षण भंगुर सांसारिक प्रपञ्च उपहार में दिया गया उसी प्रकार कामशत्रु भगवान शंकर द्वारा मेरे पूर्वज देवरात को यह धनुष धरोहर के रूप में दिया गया तब से लेकर सभी राजाओं द्वारा इसकी पूजा की जाती रही है और मेरे द्वारा भी इसीलिए इसकी पूजा की जाती है॥९०॥

**इत्युक्तवत्येव महामहीशे सीता विहस्येदमुवाच वाक्यम्।**
**किमत्र संस्थेन जडेन तात निर्वास्यतां तन्मिथिला धरण्याः॥९१॥**

**कृपा टीका**—इस प्रकार महाराज के कहने पर भगवती सीताजी ने हँसकर यह वाक्य कहा—पिताजी यहाँ इस जड़ की उपस्थिति का क्या प्रयोजन? इसे तो मिथिला की भूमि से निष्कासित कर देना चाहिए॥९१॥

**एवं निगद्याथ मरालगत्या गत्वा धनुर्वामकरे गृहीत्वा।**
**चकर्ष सीता तरसाप्यभीता बालो यथा क्षत्रकदण्डमुच्चैः॥९२॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—इस प्रकार कहकर हंसगति से धनुष के पास जाकर उसे बायें हाथ से पकड़कर निर्भीक सीताजी ने उसी प्रकार शिवधनुष तीव्र वेग से घसीटा जैसे बालक छत्रक अर्थात् कुकुरमुत्ते को अनायास खींचकर घसीटता है॥९२॥

**सखीजने पश्यति भूपमौलौ निरीक्षमाणे धृतविस्मये च।**
**भूमौ चकर्षातितरां हसन्ती कृत्वा स्वकं घोटकमेव चापम्॥९३॥**

**कृपा टीका**—सखीजनों को देखते हुए विस्मयकारी नेत्र से महाराज के भी निहारते रहने पर हँसती हुई सीताजी ने धनु को अपने खेल में घोड़ा बनाकर खींचकर पृथ्वी पर बार बार घसीटा॥९३॥

**तां वारयामास वशी वराङ्गीं गृहीतपादां सहसा समेत्य।**
**मा मा विकृष्येदममोघसत्वं सीते निधेहीति विनम्रवाचा॥९४॥**

**कृपा टीका**—पुत्री की यह चेष्टा देखकर संयमशील जनक जी ने उनके चरण पकड़कर शुभांगिनी सीताजी को विनम्रवाणी में रोका। वे ही अब इस सफल पराक्रम वाले धनुष को घसीटने से कोई लाभ नहीं। इसे वहीं रख दो॥९४॥

**निधाय तत् तादृशमीशचापं प्रदर्श्य लोकोत्तर विक्रमञ्च।**
**पितुः प्रमोदामलकैरवस्य सा कौमुदी मातृगृहं प्रतस्थे॥९५॥**

**कृपा टीका**—अनंतर शिव धनुष उसी प्रकार वहाँ स्थापित करके संसार को अपना अलौकिक पराक्रम दिखाकर पिता जनक जी के प्रमोदरूप कुमुद की कौमुदी अर्थात् चन्द्रिका स्वरूप सीता जी ने माँ के गृह की ओर प्रस्थान किया अर्थात् जैसे चन्द्रिका को निहारकर कुमुद विकसित होता है तद्वत् सीताजी के दर्शन से पिता जनक जी की प्रसन्नता भी विकसित होगयी॥९५॥

**सुरासुरादानवयक्षनागा गन्धर्वविद्याधरकिन्नराश्च।**
**न यत्क्षमाश्चालयितुं प्रयत्नात् नाम्ना पिनाकं श्रुतनामनाकम्॥९६॥**

**कृपा टीका**—देवता, असुर, दानव, यक्ष, नाग, गन्धर्व, विद्याधर और किन्नर जिस धनुष को डिगा भी नहीं सके वही धनुष नाम से तो पिनाक था वास्तव में वह नाक ही था॥९६॥

**तदेव सीता करपङ्कजेन प्रकृष्यमाणं रजसातिधूम्रम्।**
**रराज राजीवमिवातिमात्रं क्लिष्टं बलात् कुंजरराजपुत्री॥९७॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—वही धनुष सीताजी के कर कमल से घसीटा जाता हुआ धूलि से धूसरित होकर गजराज की पुत्री द्वारा मसले हुए कमल की भाँति सुशोभित हो रहा था॥९७॥

**तत्कर्मलोकोत्तरमत्युदारमभूतपूर्वं रिपुसैन्धवोर्वम्।**
**देवाः शशंसुर्ववृषुः प्रसूनैर्जगाद लोको जय जानकीति॥९८॥**

**कृपा टीका**—सीता जी का यह अत्यन्त उदार कर्म अति अलौकिक था साथ ही यह अभूतपूर्व भी था। एक नन्हीं सी बालिका इतनी सहजता से शिव धनुष को घसीटेगी इसकी किसी को कल्पना भी नहीं थी यह रावणरूप सागर के लिए वडवाग्नि था देवताओं ने इसकी प्रशंसा की और पुष्पवर्षण किये। सारे संसार ने एक स्वर से कहा जानकी जी की जय हो॥९८॥

**उदन्तमाकर्ण्य सखीजनोक्तं पुत्र्या बलं वासवविस्मयाढ्यम्।**
**चुचुम्ब माता महनीयकीर्तिं सुतां समागुह्य निजाञ्चलेन॥९९॥**

**कृपा टीका**—सखीजनों द्वारा वर्णित यह समाचार सुनकर और इन्द्र को भी विस्मित करने वाले पुत्री के बल का चिंतन करके महनीय यशस्विनी सीताजी को अपने आँचल में छिपाकर माँ ने उन्हें दुलार किया॥९९॥

**इदमवनिसुताया दिव्यवृत्तं समाधौ**
**महति मनसि रामो दृष्टवाञ्छक्रशैले।**
**उषसि जनकपुत्रीं तां नमस्कर्तुकामो**
**रविरिव मिथिलां द्यां भार्गवः सम्प्रतस्थे॥१००॥**

**कृपा टीका**—इस प्रकार पृथ्वीपुत्री सीताजी के इस अलौकिक वृतान्त का परशुराम जी ने महेन्द्र पर्वत पर अपने मन में ही महासमाधि में साक्षात्कार किया। त्रिभुवन की माता सीताजी को प्रणाम करने की इच्छा से परशुराम जी ने महाराज मिथ द्वारा निर्मित मिथिलापुरी को प्रस्थान किया॥१००॥ मालिनी छन्द।

**इत्थं शुभे भार्गवराघवीये भव्ये महाकाव्यउदारवृत्ते।**
**सर्गोऽर्कसंज्ञः कविरामभद्राचार्यप्रणीतेऽस्तु श्रियै जनानाम्॥१०१॥**

**कृपा टीका**—इस प्रकार परममंगलकारी भव्य श्रेष्ठ छन्दों से युक्त महाकवि रामभद्राचार्य द्वारा विरचित श्रीभार्गवराघवीयम् नामक महाकाव्य में प्रस्तुत यह बारहवाँ सर्ग भक्तों की प्रपत्ति सम्पत्ति लक्ष्मी के लिए हो॥१०१॥ उपजाति छन्द।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामिरामभद्राचार्यप्रणीते श्रीभार्गवराघवीये महाकाव्ये "श्रीमैथिल्यावतरणम्" नाम द्वादशः सर्गः।

॥ श्री राघवः शन्तनोतु॥

इस प्रकार धर्मचक्रवर्ती महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामी रामभद्राचार्य द्वारा प्रणीत श्रीभार्गवराघवीयम् नामक महाकाव्य में "श्रीमैथिल्यावतरण" नाम का बारहवाँ सर्ग सम्पन्न हुआ॥

॥श्रीराघवः शन्तनोतु॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीमद्राघवो विजयते ॥

# अथ त्रयोदशः सर्गः

**सीता पितृभ्यां परिपाल्यमाना स्नेहामृतेनेव समेधिताङ्गी।**
**विलंघ्य पौगण्डवयः किशोरी बभूव चित्रं न जगज्जनन्याम्॥१॥**

**कृपा टीका**—माता पिता द्वारा परिपालित होती हुई मानों स्नेहामृत से परिपोषित कल्याणमय अंगोंवाली भगवती सीता जी अपनी पौगण्ड अवस्था को लाँघकर किशोरी हो गईं। अर्थात् छठे वर्ष में ही उनमें किशोरी कन्या के गुण आगये जगन्माता सीता जी के लिए यह कोई आश्चर्य नहीं है॥१॥ इस सर्ग में प्रायशः उपजाति छन्द है।

**स्वलीलयासादितसर्वविद्या विज्ञा विनाचार्यकुले निवासम्।**
**सा शिक्षयामास सखीः स्वसॄस्ता लोकोत्तराणां सकलं ह्यपूर्वम्॥२॥**

**कृपा टीका**—परमविज्ञ सीता जी ने आचार्यकुल में निवास किये बिना ही अपनी लीला से सम्पूर्ण विद्याएँ प्राप्त कर लीं और अपनी सखियों और बहिनों को पढ़ाने लगीं क्योंकि लोकोत्तर महानुभावों का सबकुछ अपूर्व होता है॥२॥

**अथ स्थलीं कामसखेव वन्यां शाखामिवाम्रस्य फलप्रसूतिः।**
**तनुं च शालीनतयेव तस्याः पदं दधौ यौवनमार्जवाढ्यम्॥३॥**

**कृपा टीका**—इसके अनंतर जिस प्रकार काम का मित्र वसंत वनस्थली को प्राप्त करता है, जिस प्रकार बौर आम्रशाखा को प्राप्त करता है उसी प्रकार सरलता से पूर्ण यौवन ने मानो अत्यन्त शालीनता के साथ सीताजी के शरीर में धीरे धीरे पग रखा अर्थात् सीता जी की प्रारम्भिक युवावस्था भी अल्हड़ नहीं रही॥३॥

**सा षोडशी वार्धितषोडशार्यकला कलाहोभिरमोघसत्वा।**
**श्रीरामचन्द्रेण समायियाषुः पूर्णाभवत्पार्वणपौर्णमासी॥४॥**

**कृपा टीका**—अमोघसत्ववाली अर्थात् विशिष्ट तेज से सम्पन्न सोलह वर्ष की अवस्था से युक्त प्रतीत होनेवाली सीता जी मात्र सोलह दिनों में श्रीरामरूप चन्द्रमा से मिलने के लिए इच्छुक श्रेष्ठ सोलह कलाओं से सम्पन्न शरत्काल की महापौर्णमासी बन गईं॥४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**वाचा पिकीं मञ्जुमृगीं दृशीभ्यां ज्योत्स्नां स्मितैर्वारिशियं शयाभ्याम्।**
**गत्या मरालीं रतिमात्मकान्त्या सा लज्जयन्ती ललना ललास।।५।।**

**कृपा टीका**—वह किशोरी सीता जी अपनी वाणी से कोकिला को, नेत्रों से मृगी को, मुस्कान से चाँदनी को, श्रीहस्तों से कमल को गमन से हंसिनी को, कान्ति से कामपत्नी रति को लज्जित करती हुईं सुशोभित हुईं।।५।।

**निसर्गबालोचितसर्वचेष्टाः स चापलं नद्य इवाप्तपूराः।**
**तस्या निलिल्युर्नवयौवनाब्धौ रामेन्दवे प्रेमतरङ्गसङ्गे।।६।।**

**कृपा टीका**—श्रीरामरूप चन्द्रमा के लिए प्रेम तरंग से तरंगायित सीता जी के उस नवीन यौवन महासागर में चपलता के साथ सम्पूर्ण बालोचित चेष्टायें प्रवाह से पूर्ण नदियों की भाँति ही विलीन हो गईं अर्थात् सीता जी का यौवन महासागर की भाँति श्रीरामरूप चन्द्रमा को चूमने के लिए प्रेम की तरंगों से तरंगायित हो रहा था उसमें नदी की भाँति सारी चेष्टाएँ विलीन हो गईं। तात्पर्य यह है कि सीताजी ने प्रारम्भिक युवावस्था की उमड़ती हुई चेष्टाओं को प्रभु श्रीराम में समाहित कर दिया।।६।।

**समेधमानं रघुवंशकेतौ भावञ्च विन्ध्याद्रिमिवाप्रमेयम्।**
**सारुरुधत् कुम्भभुवेव भव्या धैर्येण कन्या हि पितर्यधीना।।७।।**

**कृपा टीका**—भगवान श्रीराम के प्रति बढ़ते हुए प्रमाणों से परे अतुलनीय भाव को सीताजी ने अपने धैर्य से उसी प्रकार दबा दिया जिस प्रकार पृथ्वी ने बढ़ते हुए विन्ध्याचल को अगस्त जी के द्वारा नीचे गिरवा दिया था क्योंकि भारतीय कन्या पिता के आधीन होती हैं।।७।।

**सदान्तिकस्था अपि चान्तरङ्गाः सख्यः स्वसारोपि तदन्तरालिम्।**
**रामाब्जसंगं नहि चावजग्मुर्निसर्गगूढा हि महद् विचेष्टाः।।८।।**

**कृपा टीका**—सीता जी के निकट रहनेवाली एवं नित्य अन्तरंग आठों सखियाँ तथा माण्डवी, उर्मिला, श्रुतिकीर्ति ये तीनों बहनें भी सीता जी के मनमधुप की श्रीरामरूपकमल के प्रति स्वाभाविक आसक्ति को नहीं जान पाईं क्योंकि महान व्यक्तित्वसम्पन्न लोगों की चेष्टायें भी स्वभावतः बहुत गुप्त होती हैं।।८।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सीमन्तसंवेष्टितकुन्तलानि वक्राणि मूर्ध्ना प्रमुदावहन्ती।**
**प्रपन्नजीवोपधिकालिमानं सदैव सा स्मापजिहीर्षतीव।।९।।**

**कृपा टीका**—सीताजी टेढ़े, टेढ़े, अपनी चोटी में बंधे हुए घुंघुराले बालों को प्रेम से मस्तक पर धारण करती हुईं मानों शरणागतजनों की कपट कालिमा को सदैव हरण करने की इच्छा करती रहती हैं। तात्पर्य यह है कि काले टेढ़े बालों को मस्तक पर धारण करती हुई जनकनंदिनी जी जीवों को सूचित करती रहती हैं कि वे उनके भी टेढ़ेपन तथा मानसिक कालिमा को अपने बालों के टेढ़ेपन एवं कालिमा में तिरोहित कर लेंगी।।९।।

**सुचञ्चलाभ्यां श्रुतिकुण्डलाभ्यां मीनाकृतिभ्यामिव मीनकेतुम्।**
**श्रीरामपादाब्जयुगप्रपत्या संयोज्य तस्मै विभयं दधाना।।१०।।**

**कृपा टीका**—अपने कपोलों पर लटकते हुए मछली के समान आकार वाले कानों के कुंडलों द्वारा मानो सीताजी साक्षात् कामदेव को श्रीरामजी के श्रीयुगलचरणकमल की शरणागति से संयुक्त करती हुईं उसे अभयदान दे रहीं थीं।।१०।।

**नवीनराजीवमृगीदृगाभे दृशौ च वात्सल्यवृषौ वराङ्ग्याः।**
**पत्रीभविष्यद्विभवे भविष्यत्यानन्दकन्देन्दुकृते कृतार्थे।।११।।**

**कृपा टीका**—श्रेष्ठ अंगोंवाली सीताजी के वात्सल्यरस की वर्षा करने वाले सुन्दर नेत्र नवीन लालकमल एवं मृगियों के नेत्र के समान थे। क्योंकि इन्हीं नेत्रों को भविष्यत् काल में आनंदकंद श्रीरामरूप चन्द्रमा के लिए वाहन बनने का वैभव प्राप्त होगा और ये इसी सौभाग्य से कृतार्थ हो जाएंगे। क्योंकि जब रामरूप चन्द्रमा को सीताजी हृदयाकाश में ले आना चाहेंगी तब ये नेत्र ही वहाँ मृग की भूमिका निभाएँगे।।११।।

**तस्याः प्रवालोपमिताधरोष्ठे तारुण्यजन्मारुणिमास्मितश्रीः।**
**पीयूषकृद्दीधितिविष्टरस्थभौमश्रियं शुक्ररुचा बभार।।१२।।**

**कृपा टीका**—सीता जी के पल्लव के समान अधरोष्ठ पर तारुण्य के कारण उत्पन्न हुई लालिमा से युक्त मन्द मुस्कान की शोभा ने अमृतवर्षी चन्द्रमा के किरणों के आसन पर बैठे हुए मंगल की शोभा को शुक्र की कान्ति के साथ धारण

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

किया था। भाव यह है कि सीताजी के लाल अधर को लाल वर्णवाले मंगल से उपमित किया गया है। मुख तो चन्द्र है ही और दाँतों की श्वेत शोभा शुक्रग्रह के समान है। सीताजी के मुखमंडल में लाल अधर श्वेतदन्तावलि के साथ ऐसे ही प्रतीत हो रहे हैं जैसे चन्द्रमा की किरणों के आसन पर शुक्र के साथ मंगल विराजमान हो॥१२॥

**तस्याः सरोजाभकपोलमध्ये तिलोत्तमः श्यामरुचा चकासे।**
**शंके प्रियोऽभूदितराभिलाषतिलाञ्जलिर्लब्धतिलस्वरूपः॥१३॥**

**कृपा टीका**—सीता जी के कमल जैसे कपोल के मध्य श्याम कान्ति से युक्त काला तिल बहुत सुन्दर लग रहा था। मुझे ऐसी शंका होती है कि स्वयं सीताजी के प्रियतम भगवान श्रीराम ही सीताजी के अतिरिक्त नारी की इच्छा को तिलाञ्जलि देकर काले तिल का स्वरूप धारण करके उनके कपोल पर विराजमान हो गये हैं॥१३॥

**कीराङ्गनानिन्दकचारुनासावलम्बिमुक्तावदनोत्तरोष्ठम्।**
**चुचुम्ब चान्द्रीं सुषमां दधाना प्रवालपात्रीमिति मे वितर्कः॥१४॥**

**कृपा टीका**—तोते की पत्नी शुकी की चोंच को निंदित करनेवाली सुन्दर नासिका में लटकनेवाली मोती की लड़ी सीताजी के ओष्ठ के ऊपरी भाग को छू रही थी। वास्तव में चन्द्रमा की ज्योत्स्ना प्रबाल की अर्थात् मूँगे की छोटी सी पाली को कौतूहल से चूम रही थी ऐसा यहाँ मेरा वितर्क है॥१४॥

**ऐश्वर्यमाधुर्यमयौ मनोभू मृणालमालोपममञ्जुबाहू।**
**कमेष्यतो यौ नवकञ्जमालाजयश्रिया राममलङ्करिष्णू॥१५॥**

**कृपा टीका**—ऐश्वर्य और माधुरी से युक्त कामदेव की कमलनाल की माला के समान सीताजी के बाहु बड़े ही सुन्दर हैं क्योंकि ये ही आगे चलकर धनुर्भंग के पश्चात् नवीन कमलमाला के साथ विजयलक्ष्मी की शोभा से श्रीराम को अलंकृत करके अपूर्व सुख प्राप्त करेंगे॥१५॥

**कपोतकण्ठ्यादरचारुकण्ठो बभौ भवानीभवभावितायाः।**
**मन्ये तदानन्दनिमित्तपाणिपयोजदाम्ने स्पृहयालुरस्याः॥१६॥**

**कृपा टीका**—कपोतपक्षी के समान कंठवाली एवं पार्वती जी के पति भगवान

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शंकर द्वारा सेवित सीताजी का शंख जैसा सुन्दर कंठ बहुत शोभायमान था। मुझे प्रतीत हो रहा है कि सीताजी के आनंद के मूलकारण भगवान श्रीराम के करकमल के माल्य अर्थात् प्रभु श्रीराम की गलबहियों के लिए वह स्पृहा कर रहा था॥१६॥

**वक्षोरुहोत्सेधनिरन्तरालं वक्षोलसद्वत्सलवारिधारम्।**
**यत्कौस्तुभाघट्टविमर्दहृद्यसुमञ्जुमालं लसिता प्रियेण॥१७॥**

**कृपा टीका**—भगवती जनकनंदिनी के वक्षोजों के उत्कर्ष के कारण अन्तराल रहित हृदय अत्यन्त सुन्दर लग रहा था जिसमें वत्सलरस की जलधारा का प्रवाह था जो आगे चलकर श्री सीताजी के प्राण प्रियतम भगवान् श्रीराम के कौस्तुभमणि के सम्पर्क से सुशोभित चम्पकमाला की मधुरिमा से विभूषित होगा॥१७॥

**हारं हरिन्नीलमणिप्रवेकमुक्तामयं तद्हृदयेस्म भाति।**
**सौन्दर्यमाधुर्यगुणाभिरामं रामं द्विधैषेव हृदास्म धत्ते॥१८॥**

**कृपा टीका**—भगवती जनकनन्दिनी के हृदय पर हरित मणि तथा मरकत मणि द्वारा सुशोभित मुक्ताप्रचुर हार अत्यन्त शोभा दे रहा था जैसे भगवती सीता सौन्दर्य और माधुर्य गुणों से रमणीय एवं दो रूपों में देखे जा रहे प्रभु श्रीराम को ही हृदय पर धारण कर रही थीं॥१८॥

**सा नीलशाट्यां प्रविलीनगात्रा नीलांशुका कुञ्चितनीलकेशी।**
**रेजे चिरं नीलसरोरुहाक्षी नीलाम्बुदानीकगतेव विद्युत्॥१९॥**

**कृपा टीका**—नीली साड़ी में परिवेष्टित अंगोंवाली नीली कंचुकी धारण की हुई घुंघुराले नीले केशों वाले नीलकमलनेत्रा सीताजी नीले बादलों के समूह के बीच विराजमान विद्युत के समान सुशोभित हो रही थीं॥१९॥

**त्रैलोक्यलावण्यललामलक्ष्मीर्लक्ष्म्याश्च लक्ष्मी रघुराजलक्ष्मीः।**
**लक्ष्मीर्लसन्तीव विदेहगेहे लक्ष्मीसहस्रं लघयाञ्चकार॥२०॥**

**कृपा टीका**—तीनो लोकों के लावण्यरत्न को भी जिनसे शोभा प्राप्त हुई है जो लक्ष्मी की भी लक्ष्मी अर्थात् महालक्ष्मी हैं ऐसी भविष्यत्कालीन भगवान श्रीराम की गृहलक्ष्मी भगवती सीता जी ने जनकराज के भवन में मूर्तिमती शोभा के

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

समान विराजमान होती हुई अपने शरीर की सुन्दरता से करोड़ों करोड़ों लक्ष्मियों को भी हल्का कर दिया॥२०॥

**सा मत्तमातङ्गसुतासमानगतिर्गतिज्ञा जगतामभिज्ञा।**
**स्वपादचारैर्विविधोपचारैर्मुदा व्यहार्षिन् मिथिलेशगेहे॥२१॥**

**कृपा टीका**—भक्तों का अभीष्ट जाननेवाली मतवाली गजबालिका के समान गति से चलती हुई संसार की गति को भी जाननेवाली जनकनंदिनी सीता जी देवताओं की पूजा अर्चनाओं के साथ अपने श्रीचरणकमलों का संचार करती हुई प्रसन्नतापूर्वक श्रीजनकराज के भवन में विहार करने लगीं॥२१॥

**षड्वर्षदेश्यापि हरेर्निदेश्या व्यदर्शि सा षोडशवर्षकल्या।**
**सङ्कल्पसङ्कल्पितसर्वसृष्टिर्मायामहीपालसुतायमाना ॥२२॥**

**कृपा टीका**—अपने संकल्पमात्र से ही समस्त संसार की सृष्टि करने वाली, महिला जगत के शिक्षणार्थ अघटितघटनापटीयसी लीला से महाराज जनक की आदर्श पुत्री की भूमिका निभाती हुई प्रभु श्रीराम की प्राणवल्लभा श्रीसीताजी छः वर्ष से भी कुछ अल्प अवस्था में होती हुई भी सोलह वर्ष की किशोरी जैसी दीखती थीं॥२२॥

**तामेकदा वीक्ष्य विदेहराजः कन्यां किशोरीं जितकोटिगौरीम्।**
**भर्त्रे वृषश्यद्वपुषं विभाव्य व्यचिन्तयद् विग्नमना विविक्ते॥२३॥**

**कृपा टीका**—एक बार करोड़ों पार्वती को भी अपनी सुन्दरता से जीतने वाली किशोरावस्था को प्राप्त तथा शारीरिक दृष्टि से भी अनुरूप पति के लिए पूर्ण उपयुक्त अपनी पुत्री सीताजी को एकान्त में देखकर विदेहराज जनक उद्विग्न हो उठे॥२३॥

**अहो सुता मे सुभगा सुयोग्या विवाहयोग्या भवभव्यभोग्या।**
**कस्मै प्रदेया नितराममेया वेदान्तविद्येव सतां सुवेद्या॥२४॥**

**कृपा टीका**—अहो मेरी यह ज्येष्ठ पुत्री सीता बड़ी सुन्दर सुयोग्य तथा विवाह के योग्य हो चुकी है। ऐसा लगता है कि यह भगवान शंकर का भी कल्याण करने वाले साकेताधि पति प्रभु श्रीराम की ही गृहलक्ष्मी होने के योग्य है। वेदान्त विद्या के ही समान केवल सन्तों के द्वारा ही जानने योग्य एवं शब्दप्रमाण से

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अतिरिक्त प्रत्यक्षादि प्रमाणों की भी प्रभा से सर्वथा दूर इस अलौकिक कन्यारत्न को अब मैं किसे समर्पित करूँ॥२४॥

**अयोनिजा सर्वगुणैः प्रशस्ता लोकोत्तरेयं तनया मदीया।**
**सामान्यपुंसेऽनुमता कथं स्यात् किं सिंहकन्या शशकाय देया॥२५॥**

**कृपा टीका**—यह मेरी पुत्री सभी श्रेष्ठगुणों के कारण सर्वथा प्रशंसा के योग्य अलौकिक अयोनिजा अर्थात् साधारण बालिका की भाँति किसी नारी के शरीर को माध्यम बनाकर नहीं जन्मी है। अतः इसे सामान्य पुरुष के लिए प्रदानार्थ कैसे अनुमति दी जाये? क्या सिंह की कन्या खरगोश को दी जा सकती है॥२५॥

**या शम्भुचापं कुतुकाद् गृहीत्वा व्यकर्षदुर्व्यां तृणवद्वराङ्गी।**
**सामान्यकन्या तनया कथं मे सा चादिशक्तिः प्रतिभाति भूम्नः॥२६॥**

**कृपा टीका**—श्रेष्ठ अंगोंवाली जिस मेरी पुत्री ने भगवान शंकर के धनुष को पृथ्वी पर जमे हुए तृण की भाँति अनायास खींचकर घसीटा था वह मेरी बेटी सामान्य कन्या हो ही नहीं सकती। वह तो मुझे परमात्मा की आदिशक्ति ही प्रतीत होती हैं॥२६॥

**संसारिणे नैव ददामि कन्यां त्रिलोकधन्यां वनितां वदान्याम्।**
**किं वैनतेयस्य बलिं बलार्हां काकाय दीयेत खगाधमाय॥२७॥**

**कृपा टीका**—तीनो लोकों में धन्य परम उदार इस महिला ललाम अपनी कन्या को मैं किसी संसारी को नहीं सौपूँगा। भला गरुड़देव की श्रेष्ठ बलि क्या अधम पक्षी कौवे को दी जा सकती है॥२७॥

**नूनं वरोऽस्या भगवान्मुकुन्दः श्रीवत्सलक्ष्मा स कलावतारी।**
**आविर्भवेदत्र कथं भवेऽसौ निराकृतिः सर्वविकारशून्यः॥२८॥**

**कृपा टीका**—निश्चित ही सभी अवतारों के अवतारी मुक्ति भुक्ति के प्रदाता श्रीवत्सलाञ्छन साकेताधिपति भगवान श्रीराम ही इस कन्या के पति हैं परन्तु निर्विकार निराकार परमेश्वर इस पृथ्वी पर कैसे अवतार ले सकते हैं॥२८॥

**किं व्यापकं व्याप्य तनुं दधीत निर्धर्मकं धर्ममयं कथं स्यात्।**
**किं निर्गुणं स्यात् सगुणं कथंचित् किं सर्वदेशि प्रविशेच्च गर्भम्॥२९॥**

**कृपा टीका**—क्या सर्वव्यापक परमात्मा व्याप्य शरीर धारण कर सकता है। सभी

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धर्मों अर्थात् वृत्तियों से रहित धर्ममय कैसे हो सकता है। क्या निर्गुण ब्रह्म किसी भी प्रकार सभी गुण स्वीकार कर सकता है? क्या सभी देशों में रहने वाला परमात्मा एकदेशीय गर्भ में प्रवेश कर सकता है॥२९॥

**यद्वा ममायं किल पूर्वपक्षः सिद्धान्तपक्षस्तु विलक्षणोऽतः।**
**श्रुतिष्वपश्यं ह्यवतारवादं न युक्तितः साधयितुं क्षमेऽहम्॥३०॥**

**कृपा टीका**—अथवा यह तो मेरा पूर्वपक्ष है, सिद्धान्तपक्ष तो इससे विलक्षण ही है। मैंने वेदों में अवतारवाद देखा है परन्तु उसे मैं अपनी युक्तियों से सिद्ध नहीं कर सकता॥३०॥

**बुद्धिप्रधानस्य कुतर्कभाज एषः स्वभावः सहजो हि दुष्टः।**
**न युक्तितः साधयितुं क्षमो यत्तस्मिन्ननास्थां कुरुते विमूढः॥३१॥**

**कृपा टीका**—कुतर्क करने वाले बुद्धिप्रधान जीव का जन्मजात यह दुष्ट स्वभाव होता है कि जिसे वह अपनी युक्ति से सिद्ध नहीं कर पाता उसी के प्रति वह मूर्ख अनास्था कर बैठता है॥३१॥

**अतो मया प्रत्यय एव कार्यः प्रष्टा च हेतोर्ननु नास्तिकः स्याम्।**
**न नास्तिकस्तुष्यति जीवलोके तथा परत्रेव वयो विनीडम्॥३२॥**

**कृपा टीका**—इसलिए मुझे श्रुति के वचन पर विश्वास ही करना चाहिए यदि मैं हेतु पूछूँगा तब मैं नास्तिक हो जाऊँगा। बिना घोसले के पक्षी की भाँति ही नास्तिक व्यक्ति लोक और परलोक कहीं भी सुखी नहीं रह सकता॥३२॥

**न वेदवाक्ये विचिकित्सितव्यं तथा कृते नास्तिकताप्रसङ्गः।**
**न नास्तिकस्येह परत्र वापि शान्तिर्यथाब्धावतरेर्जनस्य॥३३॥**

**कृपा टीका**—वेद के वाक्य पर कभी संशय नहीं करना चाहिए ऐसा करने पर नास्तिकता की सम्भावना हो जाती है। नास्तिक व्यक्ति को लोक और परलोक में उसी प्रकार शान्ति नहीं मिलती जिस प्रकार नाव के बिना समुद्र में फँसे हुए व्यक्ति को शान्ति नहीं मिलती॥३३॥

**यो हेतुवादात् कुमतिः कुतर्की वेदं विनिन्दत्यतिबुद्धिवादी।**
**स कल्पकोटीर्नरकेऽतिघोरे पापी तपन् क्रन्दति क्रन्दितात्मा॥३४॥**

**कृपा टीका**—जो अत्यन्त बुद्धिवाद में पड़ा हुआ कुतर्क करने वाला दुष्टिबुद्धि

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हेतुवाद से वेद की निन्दा करता है वह अपनी आत्मा को रुलाता हुआ करोड़ों कल्पपर्यन्त नरक में पड़कर रोता ही रहता है॥३४॥

**वेदो व्यलीकं न वदेत् कदाचिन्निश्वासभूतः स हरेर्यतो हि।**
**चतुर्षु वेदष्ववतारमन्त्रा विजृम्भिताश्चेत्तदलं कुतर्कैः॥३५॥**

**कृपा टीका**—भगवान वेद कभी असत्य भाषण नहीं करते क्योंकि वे तो परमेश्वर के निश्वासरूप ही हैं यदि चारों वेदों में अवतारवाद के समर्थक सहस्रों मंत्र विराजमान हैं तो कुतर्क करने से क्या लाभ?॥३५॥

**स्वतः प्रमाणं भगवान् हि वेदो नापेक्ष्यते तत्र परं प्रमाणम्।**
**प्रामाणिकत्वे किमुचण्डरश्मेः खद्योतवृन्दं विबुधो वृणीते॥३६॥**

**कृपा टीका**—भगवान वेद स्वतः प्रमाण हैं वहाँ अन्य किसी प्रमाण की कोई अपेक्षा नहीं होती। अरे क्या सूर्य नारायण की प्रामाणिकता के लिए कोई भी विद्वान जुगनुओं की सहायता लेता है॥३६॥

**प्रत्यक्षतो वाप्यनुमानतो वा मातुं न यद् वै प्रभवन्ति धीराः।**
**तत्तत्वमेकं चिदचिद्विशिष्टाद्वैतं परब्रह्म विदन्ति वेदात्॥३७॥**

**कृपा टीका**—प्रत्यक्ष प्रमाण अथवा अनुमान प्रमाण द्वारा जिस चिदचिद्विशिष्ट अद्वैत परब्रह्म तत्व को धीरगण नहीं जान पाते उसी विशिष्टाद्वैत परम तत्त्व को वेद स्वतः प्रमाणभूत होकर शब्द प्रमाण के द्वारा व्याख्यायित करते हैं॥३७॥

**यः श्रद्धधानो वचने श्रुतीनां स मोदते मोदितबन्धुवर्गः।**
**न संशयालुर्ननुजीवलोके सुखी परत्रेह यथा त्रिशंकुः॥३८॥**

**कृपा टीका**—जो वेद के वचनों पर श्रद्धा रखता है वह स्वयं तो सर्वदा प्रसन्न रहता ही है साथ ही अपने बंधु बांधवों को प्रसन्न रखता है। वेदों पर संशय करने वाला व्यक्ति त्रिशंकु की भाँति लोक और परलोक कहीं भी सुखी नहीं रहता॥३८॥

**यो निर्गुणो नित्यनिरस्तहेयगुणत्वहेतोर्विरजो विभूमा।**
**समस्तकल्याणगुणास्पदत्वात् स एव देवः सगुणोऽपि नित्यः॥३९॥**

**कृपा टीका**—जो भगवान हेय गुणों से रहित होने के कारण सर्वथा विमल एवं व्यापक हैं वे ही समस्त कल्याण गुणों के आश्रय होने से नित्य और सगुण भी हैं॥३९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निराकृतिर्लीनसमाकृतित्वात् साकार इच्छाकलिताकृतित्वात्।
निराकृतिः साकृतिरेव चैकः स चावतारः स किलावतारी।।४०।।

**कृपा टीका**—भगवान में संसार के सभी आकार प्रलयकाल में लीन हो जाते हैं। इसीलिए उन्हें निराकार कहा जाता है और अपनी इच्छा से दिव्य स्वरूप धारण करने के कारण साकार कहे जाते हैं। वस्तुतः एक ही परमात्मा निराकार और साकार दोनों ही हैं वही अवतार हैं और वही अवतारी भी।।४०।।

स सर्वशक्तिर्जगदेकनाथः कर्तुं ह्यकर्तुं प्रभुरन्यथापि।
स्वमाययेदं ननु शक्रजाली सृजत्त्यवत्यत्ति न लिप्यतेऽत्र।।४१।।

**कृपा टीका**—वही परमात्मा सर्वशक्तिमान और जगत के एकमात्र ईश्वर भी हैं वह कर्तुं अकर्तुं अन्यथाकर्तुं समर्थ भी हैं। वह इन्द्रजालिक की भाँति अपनी माया से इस जगत का सर्जन, पालन और संहार करते हुए भी इसमें आसक्त नहीं होते।।४१।।

गुणा विकुर्वन्ति न तं कदाचिद् विभूषणान्येव त ईश्वरस्य।
न कञ्जमामोदविलुब्धभृङ्गमपाम्मलं तद्धि विभूतयेऽपाम्।।४२।।

**कृपा टीका**—परमेश्वर के सौन्दर्य आदि गुण उन्हें कभी विकृत नहीं करते वे तो परमात्मा के आभूषण ही बनते हैं। जैसे अपनी सुगन्ध से भ्रमरों को लुब्ध करने वाला कमल जल का मल नहीं बनता प्रत्युत वह जल की शोभा ही बढ़ाता है।।४२।।

यथा न माधुर्यमपो जहाति न कौमुदीं क्वापि यथा कुमुद्वान्।
तथा गुणा नो भगवन्तमेते जहत्यमून्नो भगवान् कदापि।।४३।।

**कृपा टीका**—जिस प्रकार चन्द्रमा कभी भी चन्द्रिका को नहीं छोड़ सकता और जैसे मधुरिमा जल से कभी अलग नहीं हो सकती। उसी प्रकार न तो गुण कभी भगवान को छोड़ सकते और नही भगवान उनका कभी त्याग कर सकते हैं।।४३।।

गवां द्विजानां धरणीसुराणां हितं विधित्सुः स जगन्नियन्ता।
अजोऽपि सन् स्वीकृतदिव्यदेहः कृतावतारो रमयत्यथो स्वान्।।४४।।

**कृपा टीका**—वे जगन्नियन्ता परमेश्वर गौओं, देवताओं, पृथ्वी तथा ब्रह्मणों का हित करने के लिए ही अपने चिन्मय शरीर स्वीकार करके अनेक अवतार लेकर दिव्य लीलाओं से अनन्य भक्तों को आनन्द देते रहते हैं।।४४।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**ये नित्यसन्ध्या न न शास्त्रनिष्ठा न रामभक्ता न भवाद्विरक्ताः।**
**ते किं प्रजानीयुरिमान्निगूढान् वेदस्य भावान् दिवसानिवान्धाः॥४५॥**

**कृपा टीका**—जो नित्य संध्याशील नहीं हैं जिन्हें शास्त्र में निष्ठा नहीं हैं जो श्री राम के भक्त नहीं तथा जिन्हें संसार से वैराग्य नहीं हुआ है वे वेद में छिपे हुए रहस्यों को कैसे जान सकते हैं। क्या सर्वथा दृष्टिहीन व्यक्ति दिन का अनुभव कर सकता है॥४५॥

**अतोऽहमप्यच्युतपादपद्मप्रपत्तिमान् विप्रतिपत्तिशून्यः।**
**याचे वरं भूमिसुतानुरूपं हरिर्हि भक्तेप्सितपारिजातः॥४६॥**

**कृपा टीका**—इसलिये अब मैं भी सभी तर्क वितर्क छोड़कर भगवान के चरण कमलों के शरणागत होकर उन्हीं से पृथ्वीपुत्री सीताजी के अनुरूप वर की याचना करता हूँ क्योंकि भगवान भक्तों के वाञ्छाकल्पवृक्ष हैं॥४६॥

**इत्यास्त राजा व्यवसायविग्नः सीता विवाहस्य विचारणायाम्।**
**तदापवर्गोदयशैलमाप्तं द्वास्थस्तमाख्यद् भृगुकञ्जभानुम्॥४७॥**

**कृपा टीका**—इस प्रकार सीताजी के विवाह के सम्बन्ध में महाराज जनक निश्चय कर ही रहे थे कि उसी समय द्वारपाल ने राजद्वाररूप उदयाचल पर उदित हुए भृगुकुलकमल के सूर्य परशुराम जी की उपस्थिति की सूचना दी। अर्थात् राजद्वार पर पधारे हुए परशुराम जी का आगमन निवेदित किया॥४७॥

**निशम्य राजा ननु सीरकेतुर्दौवारिकाद्वै पुरि भार्गवेन्द्रम्।**
**समागतं सम्मुमुदे सतां हि समागमः क्षेमशतं विधत्ते॥४८॥**

**कृपा टीका**—मिथिलानगर में पधारे हुए परशुराम जी का द्वारपाल से समाचार सुनकर जनक जी बहुत प्रसन्न हुए। क्योंकि संतों का समागम अनंत कल्याणों का जनक होता है॥४८॥

**अहो अकस्मात् किमुपागतोऽयं क्षत्रान्तकारी ननु चण्डकोपः।**
**निरस्तदण्डस्य महात्मनोऽत्र को हेतुरेतेषु निरापदेषु॥४९॥**

**कृपा टीका**—अहो, क्षत्रियों का अन्त करनेवाले अत्यन्त क्रोधी परशुराम जी अकस्मात् कैसे आ गये, दण्ड देने की प्रवृत्ति छोड़े हुए महात्मा परशुराम का हमारे शान्त मिथिला प्रदेश में क्या हेतु हो सकता है?॥४९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तमातिथेयो मधुपर्कपाणिः प्रत्युद्ययौ विप्रपुरोगमोऽसौ।
आगन्तुके वर्णिनि विप्रवर्गे परात्मबुद्धिर्हि सतां निसर्गः॥५०॥

**कृपा टीका**—अतिथिसत्कार में निपुण महाराज जनक जी ने हाथ में मधुपर्क लेकर ब्राह्मणों के साथ परशुराम जी की अगवानी की। क्योंकि अतिथि, ब्रह्मचारी, कर्मनिष्ठ ब्राह्मणवर्ग में ईश्वर बुद्धि रखना सज्जनों का स्वभाव ही होता है॥५०॥

ददर्श दूराद् द्विजदेवशस्य पर्जन्यरूपं प्रणिशान्तकोपम्।
दुर्धर्षसत्वं दुरवापमन्यैर्दुरासदं दारुणजामदग्न्यम्॥५१॥

**कृपा टीका**—जनक जी ने दूर से ही ब्राह्मणरूप हरी फसलों के लिए मेघस्वरूप, क्रोध को शान्त किये हुए, उग्रतेज धारण करने वाले, सामान्य जनों के लिए दुर्लभ, शत्रुओं के लिए अपराजेय भयंकर परशुराम जी को देखा॥५१॥

जटाः शरच्चन्द्रमरीचिशुभ्राः शुभ्रत्विषं मूर्ध्नि समुद्वहन्तम्।
क्षुरद्विभूतिं श्रितमारभूतिं विडम्बयन्तं वटुवेशमीशम्॥५२॥

**कृपा टीका**—परशुराम जी शरत्कालीन चन्द्रमा की किरणों के समान श्वेत जटाओं को अपने सिर पर धारण कर रहे थे। उनका शरीर भी गौरवर्ण का था वे भस्म धारण किये हुए थे तथा अपने वेश से कामशत्रु ब्रह्मचारीवेषधारी भगवान शिव का अनुकरण कर रहे थे॥५२॥

नवोदयेन्दुप्रतिमानवक्त्रं ललाटपट्टे लसितत्रिपुण्ड्रम्।
अपाङ्गशोणामललोचनाभ्यां द्रुतं यथा वीररसं वमन्तम्॥५३॥

**कृपा टीका**—नवोदित चन्द्रमा के समान मुखवाले विशाल मस्तक पर त्रिपुंड्र धारण किये हुए, कोण भाग में लाल निर्मल नेत्रों से द्रवीभूत वीररस को उगलते हुए से परशुराम जी को जनक जी ने निहारा॥५३॥ उपेन्द्रवज्रा छन्द।

दृप्यत्सहस्रार्जुनकोष्णरक्तधाराकृतस्नानमहाकुठारम्।
अक्षय्यवाणाञ्चिततूणयुग्मं विज्ञं धनुश्चण्डशरं दधानम्॥५४॥

**कृपा टीका**—अहंकारी सहस्रबाहु की उष्ण रक्तधारा में स्नान किये हुए विशाल फरसा, अक्षय बाणों से युक्त दो तरकस, प्रत्यञ्चा से रहित वैष्णव धनुष एवं भयंकर बाण धारण किये हुए परशुराम जी के जनक जी ने दर्शन किये॥५४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**धृतोपवीतं महसा परीतं कमण्डलुं चापि शुभां वहन्तम्।**
**मन्दस्मितं क्षत्रविनाशचुञ्चुं विलोकयन्तं करुणार्द्रदृष्ट्या।।५५।।**

**कृपा टीका**—यज्ञोपवीत धारण किये हुए तेज से युक्त सुन्दर कमण्डलु लिये हुए, मधुर मुस्कुराते हुए, करुणाभरी चितवन से शान्त अवलोकन करते हुए, क्षत्रियों के विनाश में कुशल परशुराम जी को जनकजी ने देखा।।५५।।

**विशालवक्षः कलिताक्षमालं ब्रह्मद्विषां दुर्धरकालकालम्।**
**ब्रह्मण्यभूपालकृते कृपालं त्विषा करालं जमदग्निबालम्।।५६।।**

**कृपा टीका**—अपने विशाल वक्षस्थल पर रुद्राक्ष माला धारण किये हुए ब्राह्मणद्रोही राजाओं के लिए असह्य महाकाल स्वरूप, ब्राह्मण भक्त राजाओं के लिए परम कृपालु तेज से भयंकर जमदग्निपुत्र को जनकजी ने देखा।।५६।।

**अखण्डकौपीनधरं धरायाः सौभाग्यभूतं सुनिसर्गपूतम्।**
**पूतात्मभिः पूजितपादकञ्जं मूर्तीभवद् भार्गवपुण्यपुञ्जम्।।५७।।**

**कृपा टीका**—परशुरामजी अखण्ड ब्रह्मचर्य के प्रतीक कौपीन धारण किये हुए, मुनि स्वभाव के कारण परम पवित्र, पृथ्वी के सौभाग्य जैसे प्रतीत हो रहे थे। पवित्र आत्माओं द्वारा उनके चरण कमलों की पूजा की गयी थी। और भृगुकुल का पुण्यपुंज ही परशुराम जी की मूर्ति में दर्शन दे रहा था।।५७।।

**गौरत्विषाव्रीडितहैमशृङ्गं श्रीरामरङ्गं हृतसर्वसङ्गम्।**
**जपेन चेषच्चलिताधरोष्ठं सविग्रहं भूसुरवर्णधर्मम्।।५८।।**

**कृपा टीका**—परशुराम जी अपनी गौरकान्ति से हिमालय की शोभा को भी लज्जित कर रहे थे। वे श्रीराम के रंग में रंगे हुए तथा सभी आसक्तियों से शून्य हो चुके थे। मंत्र जप के कारण उनका होंठ हिल रहा था और वे शरीरधारी ब्राह्मणवर्ण धर्म जैसे प्रतीत हो रहे थे।।५८।।

**श्रीखण्डदारूत्तमपादुकाभ्यां पद्भ्यां स्पृशन्तं शनकैर्भयेन।**
**सीताभुवं भूमिमिवानमन्तं भक्त्या विनम्रेण मनोज्ञमूर्ध्ना।।५९।।**

**कृपा टीका**—परशुरामजी चंदन से निर्मित पादुका युक्त चरणों से सीताजी की जन्मदात्री पृथ्वी को धीरे धीरे स्पर्श कर रहे थे। और भक्ति से झुके हुए शिर से मिथिला वसुन्धरा को प्रणाम कर रहे थे।।५९।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**आविष्कृतं मूर्तमिवातिभव्यं सद्भागधेयं मिथिलाधरेण्याः।**
**पश्यन् परार्ध्यं परमात्मबुद्ध्या जगाम तृप्तिं न नराधिनाथः॥६०॥**

**कृपा टीका**—मिथिलापुरी के प्रकट हुए मूर्तिमान सौभाग्य की भाँति समागत, श्रेष्ठ अतिथि परशुराम जी को परमात्मा की बुद्धि से निहारते हुए मिथिलाधिराज जनक तृप्त नहीं हुए॥६०॥

**विन्यस्तभूपालसमस्तलक्ष्मा लक्ष्मीस्वरांशं स ननाम नम्रः।**
**नाथो नराणां नरलोकनम्यं सन्तं हि सत्ता प्रणिनम्य नित्या॥६१॥**

**कृपा टीका**—महाराज जनक ने समस्त राजचिह्नों को छोड़कर मनुष्यलोक के लिए प्रणम्य भगवान नारायण के अंश परशुराम जी को विनम्रतापूर्वक प्रणाम किया क्योंकि संतों को प्रणाम करके सत्ता नित्य हो जाती है अर्थात् उसे कोई डिगा नहीं पाता॥६१॥

**तं पादपद्मे प्रणतं परात्मा प्रीतः समुत्थाप्य महाभुजाभ्याम्।**
**त्रिसप्तकृत्वोऽवनि देवताभ्यो भूमिप्रदानाक्षतभूषिताभ्याम्॥६२॥**

**कृपा टीका**—अपने चरणकमल में प्रणाम किये हुए महाराज जनक को इक्कीस बार ब्राह्मणों को भूमिदान के समय संकल्प के अक्षतों से सुशोभित अपनी विशाल भुजाओं से उठाकर परमात्मा परशुराम जी बहुत प्रसन्न हुए॥६२॥

**तस्मै निवेद्यार्घ्यमनर्घ्यधाम्ने स आतिथेयोऽतिथयेऽतिथिज्ञः।**
**गृहं समानीय समन्त्रिबन्धुरपूपुजत् षोडशभिः प्रकारैः॥५३॥**

**कृपा टीका**—अतिथिसत्कार के वेत्ता आतिथेय जनक जी महाराज अलौकिक तेजस्वी परशुराम जी को अर्घ्यदान करके अपने घर ले आकर बंधु बांधवों के साथ परशुराम जी का सोलह प्रकार से अर्चन किया॥६३॥

**तं भुक्तवन्तं विभया विभान्तं संवाहयन् पादपयोजयुग्मम्।**
**पप्रच्छ राजा कुशलं कुशाग्रधियं धियाध्यातधनुर्धरांघ्रिः॥६४॥**

**कृपा टीका**—परशुराम जी के भोजन करने के पश्चात् उनके युगल चरणों को दबाते हुए भगवान श्रीराम का ध्यान करके अलौकिक कान्ति से शोभायमान कुशाग्र बुद्धि वाले परशुराम जी से कुशल समाचार पूछा॥६४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कच्चित्प्रभो त्वन्निहितारिनारीनेत्राम्बुभिःक्षालितधूलिपङ्का।**
**भूयः कुरुक्षेत्र मही महीश बलोच्छलत् पांशुभिरभ्यशोषि॥६५॥**

**कृपा टीका**—हे प्रभो आपके द्वारा मारे हुए शत्रुओं की पत्नियों के नेत्रजल से धुली हुई धूलि के कीचड़ से युक्त कुरुक्षेत्र की भूमि क्या फिर राजाओं की सेना के द्वारा उड़ाई गई धूलि से सूख गई है? अर्थात् क्या फिर किसी राजा ने आप पर आक्रमण कर दिया है॥६५॥

**कच्चिन्मुनिस्त्वादृशपुत्रपुण्यसप्तर्षिमध्यास्पदलाभतुष्टः॥**
**सम्मोदते मोदितविप्रवर्गो ज्योतिर्गणाभ्यर्चितपादपद्मः॥६६॥**

**कृपा टीका**—हे भगवन्न क्या आप जैसे पुत्र के पुण्य से सप्तर्षियों के मध्य प्रापत स्थान से संतुष्ट हुए सम्पूर्ण ब्राह्मणों को संतुष्ट करने वाले एवम् नक्षत्र गणों से पूजित चरणकमल आपके पूज्य पिताश्री महर्षि जमदग्नि प्रसन्न तो हैं न॥६६॥

**कच्चिदि्द्वजद्विड्बलवारिराशिकुंभोद्भवो भग्नसहस्रबाहुः।**
**नित्यं कृपायाः कृपणःप्रियस्ते निशातधारः कुशली कुठारः॥६७॥**

**कृपा टीका**—हे महाराज ब्राह्मणद्रोही राजाओं के बल रूप महासागर को सोखने के लिए अगस्त्य के समान, सहस्रबाहु का नाशक, कृपा में पूर्ण कृपण, तीखी धारा वाला आपका प्रिय कुठार क्या कुशल से है?॥६७॥

**कच्चिन् महेन्द्रस्य दरीषु धीमन् निरस्तदण्डः परितप्यमानः।**
**न खिद्यसे कर्हिचिदन्तरायैः सन्तः सहन्ते हि सुखेन विघ्नान्॥६८॥**

**कृपा टीका**—हे भगवन् क्या महेन्द्र पर्वत की गुफा में दण्डदाम से विरत होकर तपस्या करते हुए आप किन्हीं विघ्नों से खिन्न तो नहीं होते। क्योंकि सन्तलोग तो निरंतर विघ्नों को सहते ही रहते हैं॥६८॥

**मातापितृभ्यां गुरवे हिताय ऋणानि तेषां सहजं समाप्य।**
**समाजसेवाव्रतलब्धदीक्षः कस्ते त्रिलोक्यां सदृशोऽस्ति धन्यः॥६९॥**

**कृपा टीका**—हे भगवन्। आप अपने माता-पिता एवं गुरुदेव के हित के लिए सतत सन्नद्ध रहते हुए उनके ऋणों को समाप्त कर अब समाजसेवा व्रत की दीक्षा में दीक्षित हो चुके हैं। आपके समान तीनों लोकों में कौन धन्य है?॥६९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कच्चिन्मुने त्वच्चरणारविन्दमाध्वीं मुदा पातुमनल्पपुण्याः।**
**आयान्ति दिग्भ्यो बटवः सुशीला विप्रं हि विद्यार्थिधनं धिनोति।।७०।।**

**कृपा टीका**—हे भगवन् आपके चरणारविन्द के मकरन्द का पान करने के लिए बड़भागी सुशील विद्यार्थी भिन्न भिन्न दिशाओं से आपके पास आते हैं न? क्योंकि ब्राह्मण को विद्यार्थीरूप धन ही प्रसन्न कर पाता है।।७०।।

**इत्येवमुक्त्वा विरते गवीशे वाचंयमो वाचमुवाच वाग्मी।**
**द्विजो द्विजालिद्विजराजकान्त्या प्रकाशयन् राजसभां ससभ्याम्।।७१।।**

**कृपा टीका**—इस प्रकार कहकर महाराज के चुप हो जाने पर अपने दत्तावलि रूप चन्द्रमा की कान्ति से सभासदों सहित राजसभा को प्रकाशित करते हुए अल्पभाषी किन्तु बहुत सुन्दर बोलने वाले ब्राह्मणश्रेष्ठ परशुराम जी यह वाणी बोले।।७१।।

**वचस्तवैतत् सदृशं कुलस्य विदेहवंशाम्बुजचित्रभानोः।**
**यद्ब्राह्मणे दर्शितदेवभक्तिरादर्शभूतोऽसि महीपतीनाम्।।७२।।**

**कृपा टीका**—हे जनकवंशरूप कमल के सूर्य यह वाणी तुम्हारे कुल के योग्य ही है जो ब्राह्मण के प्रति इस प्रकार आपने देवभक्ति के दर्शन कराये। वास्तव में आप सभी श्रेष्ठ राजाओं के आदर्श बन गये हैं।।७२।।

**गृहे वसन् भोगमथापि योगं सम्पादयन् सर्वविकारशून्यः।**
**देहे विदेहो वरबोधगेहो धन्योऽसि भूपालमणे महात्मन्।।७३।।**

**कृपा टीका**—हे महात्मा। राजाओं के मुकुट मणि राजा जनक, आप घर में रहकर भी निर्विकारे भाव से भोग एवं योग का तटस्थ बुद्धिपूर्वक सेवन करते हुए इसी देह में विदेहावस्था प्राप्त कर चुके। आपका लोकपावन शरीर दिव्यज्ञान का मन्दिर बन गया है आप धन्य हैं।।७३।।

**तवैव सौशील्यवशंवदत्वात् कलत्रभूता वसुधा त्वदीया।**
**पुत्रीं ददौ तुभ्यमनादिशक्तिमान्वीक्षिकीं योगयुजे त्रयीव।।७४।।**

**कृपा टीका**—हे महाराज आपके सौ शील्यगुण के वश में होकर ही पृथ्वी आपकी पत्नी बनी और उसने आपको अनादिशक्ति सीताजी को ही पुत्रीरूप में उसी प्रकार दे दिया जैसे वेदत्रयी, योगी को अन्वीक्षिकी अर्थात् ब्रह्मविद्या प्रदान कर देती हैं।।७४।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**यस्याः कृपाकम्रकटाक्षकामास्तपश्चरन्तोऽपि न लब्धवाञ्छाः।**
**सा श्रीस्त्वदीयाजिरमन्दिरेषु भूत्वा सुता क्रीडति बालकेलिः॥७५॥**

**कृपा टीका**—जिसके कृपाकटाक्ष की कामना करके तपस्या करते हुए भी मनोवाञ्छा प्राप्त नहीं कर पाते वही श्रीसीता तुम्हारी पुत्री बनकर तुम्हारे घरों और आँगनों में बाललीला करती हुई खेल रही हैं॥७५॥

**त्वं क्षत्रियो भूयकुलीन एव यद्ब्राह्मणेष्वर्पितदेवभक्तिः।**
**ये क्षत्रियाः संस्कृतभूसुरेभ्यो द्रुह्यन्ति ते वै न कुलप्रसूताः॥७६॥**

**कृपा टीका**—हे राजन् आप कुलीन क्षत्रिय हैं क्योंकि आपमें ब्राह्मणों के प्रति देवोचित भक्ति है जो क्षत्रिय संस्कारवान ब्रह्मणों से द्वेष करते हैं वे कुलीन नहीं हुआ करते॥७६॥

**न भानुवंश्या निमयोऽवनीशा मत्कोपभाजः सरलाः कदाचित्।**
**ते सर्वदा ब्राह्मणपादपद्मनिष्यन्दपूता अतएव धन्याः॥७७॥**

**कृपा टीका**—सूर्यवंशी और निमिवंशी ब्राह्मणभक्त सरल राजागण मेरे कोप भाजन नहीं हैं। जो राजवंश तपः पूत ब्राह्मणों के चरणकमल के मकरन्द से पवित्र होते हैं वे धन्य हो जाते हैं॥७७॥

**सीतां प्रणंस्यन् अभिनन्दयिष्यंस्त्वामागतोऽपूर्वमिवावनीन्द्र।**
**धनुर्दिदृक्षे निहितं मया यत् त्वत्पूर्वजे न्यासमिवेन्दुमौलेः॥७८॥**

**कृपा टीका**—हे महाराज मैं पहले की भाँति सीताजी को प्रणाम करने के लिए तथा तुम्हारा अभिनंदन करने के लिए उपस्थित हुआ हूँ मैं वह शंकर जी का धनुष भी देखना चाहता हूँ जिसे मैंने तुम्हारे पूर्वज देवरात के यहाँ न्यास के रूप में रखा था॥७८॥

**ओमित्युभौ भूपतिभूसुरेन्द्रौ सबन्धुवर्गौ ननु यज्ञशालाम्।**
**सहर्त्विजं ब्राह्मणवृन्दजुष्टां प्राचीमिवाभीयतुरर्कसौमौ॥७९॥**

**कृपा टीका**—ठीक है, इस प्रकार कहकर महाराज जनक और परशुराम जी ने बन्धुवर्ग के साथ पूर्व दिशा में सूर्य चन्द्र की भाँति ऋत्विजों और ब्राह्मणों से युक्त यज्ञशाला में प्रवेश किया॥७९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**दिव्यस्थलीं वह्निविदीप्तवेदीं प्रस्तोतृसम्प्रस्तुतवेदनादाम्।**
**शास्त्रानुशिष्टां विधितोविशिष्टां स्वर्गापवर्गामपि चापवर्गाम्॥८०॥**

**कृपा टीका**—उस यज्ञशाला की स्थली अलौकिक थी वहाँ वेदिकाओं में अग्नि प्रदीप्त हो रहे थे वहाँ भी प्रस्तोताओं द्वारा वेदपाठ प्रस्तुत किया जा रहा था वह शास्त्र के नियमों से अनुशासित सभासदों से युक्त थी और विधिपूर्वक अनुष्ठानों के कारण लोकोत्तर भी थी। वह स्वर्ग के अपवर्ग अर्थात् द्वारों से युक्त होकर भी अपवर्ग अर्थात् पवर्ग के पाँचों वर्णों से घटित पाप पुण्य फल बंधन भव भय और मरण से रहित थी॥८०॥

**तत्रैव ताभ्यां स्वसृभिः परीता सखीभिरष्टाभिरसौ विनीता।**
**प्रीता प्रणीता सुभगा च नीता वेदेषु गीता ददृशेऽथ सीता॥८१॥**

**कृपा टीका**—इस यज्ञशाला में ही माण्डवी, उर्मिला, श्रुतिकीर्ति नामक बहनों से घिरी हुई स्वयं प्रकट हुई आठों सखियों द्वारा यज्ञशाला में ले आई गई परम सुन्दर वेदों से प्रशंसित विनम्र भगवती सीताजी के जनक जी एवं परशुराम जी द्वारा दिव्य दर्शन किये गये॥८१॥

**अश्वायमानं शिवचापमज्यं ज्याभीषुसम्पादितवेगनाट्यम्।**
**करेण वामेन विना प्रयासं चकर्ष सोच्चैःश्रवसं रमेव॥८२॥**

**कृपा टीका**—जिस प्रकार पहले उच्चैः श्रवा घोड़े को लक्ष्मीजी ने घसीटा था उसी प्रकार धनुष की डोरी को ही घोड़े की लगाम बनाकर उसी चाबुक से वेग का अभिनय करती हुई सीताजी बाएँ हाथ से प्रत्यञ्चा से रहित शंकर के धनुष को घोड़ा बनाकर बिना प्रयास खींच रही थीं॥८२॥

**आरुह्य केलौ च तथावरुह्य सानन्दमुर्वीतनया तदुर्व्याम्।**
**सा भ्रामयामास महेशचापं करीन्द्रकन्येव मृणालदण्डम्॥८३॥**

**कृपा टीका**—पृथ्वीपुत्री वे सीताजी बाल क्रीड़ा में ही आनंदपूर्वक धनुष रूप घोड़े पर बार-बार चढ़ उतरकर कमल दण्ड को हाथी की बालिका की भाँति उस शंकर के धनुष को पृथ्वी पर बिना प्रयास के घुमा रही थीं॥८३॥

**इत्थं हसन्तीसु सखीषु सीता विद्युद्यथा वासवकार्मुकेण।**
**चिक्रीड चापेन पुरान्तकर्तुर्विस्मापयन्ती नृपतिं मुनिञ्च॥८४॥**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—इस प्रकार सखियों के हंसते हंसते भगवती सीताजी महाराज जनक तथा परशुराम जी को विस्मित करती हुईं इन्द्रधनुष के साथ बिजली की भाँति भगवान शंकर के धनुष से खेलने लगीं॥८४॥

**यतो यतो धावति धारणेयी धनुर्गृहीत्वा स्म मृणालतन्वी।**
**ततो ततो भूमिरिवोढ़ विद्युत् पाथोद शोभास्म वियद् विभाति॥८५॥**

**कृपा टीका**—भूमिपुत्री कमलदण्ड के समान सूक्ष्मशरीरवाली सीताजी धनुष को पकड़कर जहाँ जहाँ दौड़तीं वहाँ वहाँ पृथ्वी बिजली एवं कमल से युक्त आकाश जैसी सुशोभित होती थीं॥८५॥

**दृष्ट्वा श्रियं शैवधनुर्वहन्तीं सौदामिनीं चापमिवाहिशत्रोः।**
**विशां पतिं विस्मयवान् सुविप्रो विस्पष्टितार्थां समुवाच वाचम्॥८६॥**

**कृपा टीका**—इन्द्रधनुष को बिजली की भाँति शिव धनुष को हाथ में धारण करती हुई सीताजी को देखकर आश्चर्यचकित परशुराम जी महाराज जनक से स्पष्ट अर्थ वाली यह वाणी बोले॥८६॥

**विशेष**—यहाँ अहि शब्द वृत्रासुर के लिए प्रयुक्त हुआ है। अहिःसर्पे च वृत्रे च।

**विलोकयस्येतदभूतपूर्वम् वृत्तं महाराज निजात्मजायाः।**
**धनुर्गुरोर्मन्दरतो गरीयो मुदा वहन्त्याश्च मृणालतन्व्याः॥८७॥**

**कृपा टीका**—हे महाराज कमल दण्ड के समान कोमल अंगों वाली अपनी इस बेटी का अभूतपूर्व पराक्रम देख रहे हो, जो मन्दराचल से भी गुरुतर इस धनुष को कौतुक में ही उठाये हुए है॥८७॥

**यं देवदैत्यासुरनागयक्षा वीरा न शेकुर्बलतो विगाढुम्।**
**तमेव कामेश्वरकार्मुकाब्धिं गोकन्यका गोष्पदमातनोति॥८८॥**

**कृपा टीका**—जिस भगवान शंकर के धनुष महासागर का देव दैत्य असुर या नाग और अन्य भी श्रेष्ठ योद्धा बलपूर्वक अवगाहन नहीं कर सके उसी शिव धनुषरूप महासागर को यह भूमिकन्या गोखुर के समान छोटा बना रही है। अर्थात् बार बार इस धनुष को घसीटकर घुमा रही है॥८८॥

**नारायणीयं न नरेन्द्रनारी माता जगत्या न कुजा कुमारी।**
**बाला न चेयं नितरामबाला साकेतसीतेयमहो न सीता॥८९॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे नरेन्द्र यह नारायणी है नारी नहीं, यह जगत की माँ है भूमि पुत्री सीता कुमारी नहीं, यह सामान्य बालिका नहीं है यह आदर्श युवती है, यह साकेत की सीता है लोक में प्रसिद्ध हल की रेखारूप सीता नहीं॥८९॥

**अहो विचित्रं ननु मानवेन्द्र दृष्टं त्रिलोक्यां यदभूतपूर्वम्।**
**मयापि यद् दुर्धरमीशचापं सीता तदेवाद्य बलादकर्षत्॥९०॥**

**कृपा टीका**—हे महाराज आश्चर्य है मैंने भी तीनो लोकों में यह अभूतपूर्व दृश्य देखा है, जिस शिव धनुष को मैं भी नहीं उठा पाता उसी को सीताजी ने आज बलपूर्वक खींचकर दिखा दिया॥९०॥

**किं राजहंसी धृतमन्दरेयं किं सैन्धवीयं द्विभुजा द्विनेत्रा।**
**किं मैथिलानां ननु पुण्यराशिः सीता विनीता विचकास्ति भूमौ॥९१॥**

**कृपा टीका**—हे महाराज क्या यह मन्दराचल को धारण करने वाली राजहंसिनी है अथवा यह दो भुजा और दो नेत्रवाली क्षीरसागर से उत्पन्न लक्ष्मी है अथवा मैथिलराजवंश की पुण्यराशि ही विनम्र सीताजी के वेश में इस पृथ्वी पर सुशोभित हो रही हैं॥९१॥

**राजन्नतोऽस्याश्च पतिंवरायाः स्वयंवरं कारय वीर्यशुल्कम्।**
**तस्मिन् समाकारित राजलोके सीतामुपस्थापय वीरभोग्याम्॥९२॥**

**कृपा टीका**—हे राजन् इसलिए इस पतिंवरा सीता का पराक्रमरूप शुल्क निर्धारित करके स्वयंवर का आयोजन करो। उस बुलाये हुए राजसमूह के बीच वीर पति के योग्य सीताजी को उपस्थित करो॥९२॥

**यो वा पिनाकं तरसा विभज्य द्वेधा भवेद् दर्शितबाहुशक्तिः।**
**विन्यस्य तस्योरसि जैत्रमालां सीतावरं स्वं वृणुयात्तमेव॥९३॥**

**कृपा टीका**—जो वर इस पिनाक धनुष को बलपूर्वक दो टूक करके तोड़कर अपनी भुजा की शक्ति दिखा दे उसीके गले में जयमाला डालकर सीताजी उसी को अपना वर चुन लें॥९३॥

**नेदं त्रिलोक्यां तनुभृत् कथञ्चिच्चैवं धनुश्चालयितुं समर्थः।**
**रामादृते दाशरथेर्महात्मन् मनोब्जपाणेरिव सिन्धुजायाः॥९४॥**

**कृपा टीका**—हे महात्मन् जिस प्रकार लक्ष्मी जी के मन को भगवान नारायण

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

के अतिरिक्त कोई नहीं डिगा सकता उसी प्रकार इस शिवधनुष को भी तीनों लोकों में दशरथ नंदन श्रीराम के अतिरिक्त कोई नहीं चलायमान कर सकता॥९४॥

**चिन्ता न कार्या नरदेव भौम्याश्चिन्तामणिश्चिन्तितपारिजातः।**
**आयासतीहैव नवाब्दनीलः श्रीराघवो लक्ष्मणपूर्वजन्मा॥९५॥**

**कृपा टीका**—हे महाराज आप भूमिपुत्री सीता जी की चिन्ता मत कीजिए भक्तजनों के लिए चिन्तामणि और सेवकों की इच्छापूर्ति के लिए कल्पवृक्ष के समान लक्ष्मण जी के बड़े भ्राता नीलमेघ के समान सुन्दर श्रीराघव यहीं पधारेंगे॥९५॥

**स एव भङ्क्त्वा शशिमौलिचापं तृणाय मत्वा रघुवंशकेतुः।**
**पयोधिपुत्रीमिव चक्रपाणिः सीतां प्रसीदन् परिणेष्यतीह॥९६॥**

**कृपा टीका**—वही रघुकुल के केतु भगवान श्रीराम तृण की भाँति भगवान शिव का धनुष तोड़कर समुद्रकन्या लक्ष्मी को नारायण की भाँति इसी मिथिला के मंडप में सीताजी को ब्याहकर ले जायेंगे॥९६॥

**अहं समागत्य तदैव राजन् निदर्शयिष्यन् कपटक्रुधं भोः।**
**सौमित्रिणा प्राप्तवचो विवादः प्रोज्झतविषादो भवितास्मि भव्यः॥९७॥**

**कृपा टीका**—हे महाराज उसी समय मैं यहाँ उपस्थित होकर नकली क्रोध का प्रदर्शन करते हुए लक्ष्मण जी के साथ वाणी का विवाद करके अपना विषाद छोड़कर कल्याणमय हो जाऊँगा॥९७॥

**तस्मै समर्प्यैव मुरारिचापं प्रेम्णा महाविष्णुमयाय चाहम्।**
**रामाय विस्राणितकार्यजातो निरस्तदण्डो भवितास्मि पूर्णः॥९८॥**

**कृपा टीका**—हे महाराज महाविष्णु रूप उन श्रीराम जी को भगवान शंकर का धनुष समर्पित करके और उन्हींको अपने अवतार का सम्पूर्ण कार्यभार देकर दण्ड की प्रवृत्ति छोड़कर मैं भी पूर्ण हो जाऊँगा॥९८॥

**इदं सुगोप्यं गदितं मया यन्न क्वापि वाच्यं हृदि चिन्तनीयम्।**
**षट्कर्णकः स्याद् यदि कोऽपि मन्त्रो भिद्येत खिद्येत तदाधिकारी॥९९॥**

**कृपा टीका**—हे महाराज यह मैंने आपको अत्यन्त गोपनीय रहस्य बताया इसे किसी के समक्ष प्रकट मत कीजिएगा। इसे हृदय में चिन्तन कीजिए। यदि कोई

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भी मंत्र छः कानों में पड़ता है तो वह भिन्न अर्थात् नष्ट हो जाता है और उसका अधिकारी भी खिन्न हो जाता है॥९९॥

**इत्यादिश्य दिगीशवन्दितपदः सीरध्वजं धीधनः**
**सम्मन्त्र्याखिलमन्त्रशास्त्रनिपुणो राज्ञारहो रामवित्।**
**आमन्त्र्यप्रणतो महीपमणिना यास्यन्नवाचीं दिशम्**
**सीतां श्लोकशतेन भक्तिविनतोऽस्तौषीन्मुदा भार्गवः॥१००॥**

**कृपा टीका**—इस प्रकार दिक्पालों द्वारा वन्दित चरणकमल, समस्त मंत्रशास्त्र के वेत्ता, श्रीरामरहस्य के ज्ञातापरशुराम जी ने बुद्धिमान जनक जी को इस प्रकार आदेश देकर और उनके साथ एकान्त में मंत्रणा करके, उनके द्वारा प्रणाम क्रिया से सत्कृत होकर दक्षिण दिशा को जाते हुए भगवती सीताजी की भक्तिपूर्वक सौ श्लोकों में स्तुति की॥१००॥ शार्दूलविक्रीडित छन्द।

**इत्थं शुभे भार्गवराघवीये**
**भव्ये महाकाव्य उदारवृत्ते।**
**लोकेशसर्गः कविरामभद्रा-**
**चार्यप्रणीतेऽस्तु नृणां श्रियै नः॥१०१॥**

**कृपा टीका**—इस प्रकार मंगलमय कल्याणकारी श्रेष्ठछन्दों से युक्त महाकवि रामभद्राचार्य द्वारा प्रणीत इस भार्गवराघवीयम् नामक महाकाव्य में प्रस्तुत यह तेरहवाँ सर्ग अध्ययन करने वाले मनुष्यों और हमारी प्रपत्ति लक्ष्मी के लिए साधक बने॥१०१॥ उपजाति छन्द।

**इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामि रामभद्राचार्यप्रणीते श्रीभार्गवराघवीये महाकाव्ये "श्रीभार्गवमिथिलागमनं" नाम त्रयोदशः सर्गः॥**

**॥श्रीराघवः शन्तनोतु॥**

इस प्रकार धर्मचक्रवर्ती महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामी रामभद्राचार्य द्वारा विरचित श्रीभार्गवराघवीय नामक महाकाव्य में "श्रीभार्गवमिथिलागमन" नामक तेरहवाँ सर्ग सम्पन्न हुआ॥

॥श्रीराघवः शन्तनोतु॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीमद्राघवो विजयते ॥

# अथ चतुर्दशः सर्गः

वन्दे बालमरालमन्मथलसन्मातङ्गिनीगामिनीं
शोभाव्रीडितचन्द्रचम्पकशरत्सौन्दर्यसौदामिनीम् ।
भौमीं भावितमैथिलावनितलां रामप्रियां भामिनीं
काञ्चित् कोसलराजराजमहिषीं सीतां स्वकां स्वामिनीम्॥१॥

**कृपा टीका**—बालहंस एवं कामदेव द्वारा निर्मित बालगज के समान चालवाली अपनी शोभा से चन्द्रमा, चम्पा, शरदृतु के सौन्दर्य से युक्त विद्युत् की शोभा को लज्जित करने वाली दिव्य एवम् अपने प्राकट्य से मिथिला भूमि को सम्मान देने वाली भूमिपुत्री कोसलराज की गृहलक्ष्मी रामप्रिया सर्वलक्षण सम्पन्न अपनी स्वामिनी सीताजी को मैं वंदन करता हूँ॥१॥ यहाँ से श्लोक १९ तक शार्दूलविक्रीडित छन्द है।

वन्दे देववधू विभाश्वरशिरःसीमन्तगुच्छोद्गलन्-
माद्यन्मंजुमिलिन्दनन्दनवनोद्भूतप्रसूनोत्करैः ।
श्रद्धाभ्यर्चितपादपद्मयुगलां साध्वीं सतां वत्सलां
दिव्यां श्रीमिथिलाधिराजतनयां सीतां जगन्मातरम्॥२॥

**कृपा टीका**—देववधुओं के प्रकाशमान शिर के जूड़ों के पुष्प गुच्छों से गिरते हुए मतवाले भ्रमरों से व्याप्त नंदन वन में उत्पन्न पुष्पों के समूहों से श्रद्धापूर्वक जिनके युगल चरणकमल की पूजा की गई है ऐसी सती शिरोमणि, सन्तों पर वात्सल्य की वर्षा करने वाली, अलौकिक श्रीजनक की राजपुत्री जगज्जननी सीताजी की मैं वंदना करता हूँ॥२॥

श्यामां श्यामसरोजसम्मितदृशंश्यामांवरां श्यामलां
रामां रामगुणावलीं हृदि सदा सञ्चिन्तयन्तीं मुदा।
वामां राघववामभागमहितां घ्नन्तीं विधेर्वामतां
कामादिभ्य उदारसेवकशिशून् पान्तीं भजे जानकीम्॥३॥

**कृपा टीका**—षोडशवर्षीय जैसी प्रतीत होने वाली, नीले कमल के समान नेत्र

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वाली, नीला वस्त्र धारण करने वाली, प्रभु के श्याम रंग में रंगी हुई, राममयी, श्रीराम के गुणों को प्रसन्नतापूर्वक हृदय में चिन्तन करती हुई परमसुन्दरी श्रीराघव के वामभाग में विराजमान विधाता की वामता अर्थात् प्रतिकूलता को नष्ट करने वाली शरणागत सेवक बालकों को कामादि दोषों से दूर करने वाली भगवती जानकी जी को मैं भजता हूँ॥३॥

**सौन्दर्यामृतसारसागरमहालक्ष्मीजनिंजाह्नवी–**
**कीलालोपम्पूतचारुचरितां सीमन्तिनीं मैथिलीम्।**
**रामाम्भोधरचातकीं गुणवतीं मेधावतीं जानकीं**
**जायां श्री रघुनन्दनस्य नृपतेर्वन्दे विदेहात्मजाम्॥४॥**

**कृपा टीका**—सौन्दर्य रूप अमृत के सारसर्वस्व महासागर की महालक्ष्मीस्वरूप गंगाजल के समान निर्मल सुन्दर चरित्रों वाली आदर्श महिला मिथिला में प्रकट हुई श्रीराम रूप स्वाति मेघ की चातकी दिव्यगुणों से युक्त सुन्दर मेधा शक्ति से सम्पन्न महाराज श्रीराम की धर्मपत्नी विदेहनंदिनी भगवती जानकी जी को मैं वंदन करता हूँ॥४१॥

**यस्याः पादपयोरुहोज्ज्वलनखप्रोद्यन्निशेषस्मित**
**ज्योत्स्नादीधितितो भवन्ति शतशो गौरीन्दिराशारदाः।**
**सौम्यां शारदशर्वरीशवदनां नित्यं नतांनाकिभि**
**र्भीतेः पादजुषो जनेन्द्र तनयां तां त्रायमाणां भजे॥५॥**

**कृपा टीका**—जिनके श्रीचरण के उज्ज्वल नख नवीन चन्द्रमा की चन्द्रिका की किरणों से अनेक पार्वती अनेक लक्ष्मी एवम् अनेक सरस्वतियों का जन्म हो जाता है ऐसी अत्यन्त सरल शारदीय पूर्णमासी के चन्द्र के समान मुख वाली देवताओं द्वारा सतत वंदित एवम् श्रीचरणकमल के सेवकों की भवभय से रक्षा करने वाली श्री जानकी जी का मैं भजन करता हूँ॥५॥

**मातर्जानकि जन्मदुर्जरजराकीनाशसन्त्रासितम्**
**ग्रस्तं घोरविकारभीमभुजगैर्निर्णाशमासादितम्।**
**क्रन्दन्तं निरये पतन्तमबलं बालं विहीनं दृशा**
**मान्तं पापपयोनिधौ करुणया त्रायस्व मां मैथिलि॥६॥**

**कृपा टीका**—हे माँ जानकी, हे मिथिलाधिराज कन्या सीते, जन्म, भीषण

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वृद्धावस्था और यमराज से भयभीत घोर विकार रूप साँपों से ग्रसे हुए विनाशोन्मुख चिल्लाते हुए घोर नरक में गिरते हुए ज्ञान नेत्र से विहीन पाप महासागर में आत्मसात होते हुए कृपया मुझ निर्बल बालक की रक्षा कर लीजिए॥६॥

**मातर्मैथिलि! मामनाथमशुचिं निश्चेतनं निष्क्रियं**
**निष्प्राणं निरुपाय मात्मकुमतौ निघ्नं निरानंदकम्।**
**निर्द्रव्यं निरुपाश्रयञ्चनिचितं नित्यं मलैर्निर्गुणं**
**निर्लज्जं क्षमसे न किं क्षमतया क्षामं क्षमायाः सुते॥७॥**

**कृपा टीका**—हे माँ, हे मैथिलि, हे क्षमा अर्थात् पृथ्वी पुत्री सीते अनाथ, अपवित्र, चेतना रहित अकर्मण्य, प्राणशून्य, उपायों से हीन अपनी ही कुबुद्धि के अधीन आनंद से दूर निरुपाय आश्रय से रहित मल में ढके हुए गुणों रो शून्य निर्लज्ज एवं दुर्बल मुझ जैसे बालक को अपनी क्षमता से क्यों नहीं क्षमा कर देतीं॥७॥

**मातर्मन्मथरोषलोभलुलितं कृत्तं कृतान्तासिना**
**निर्वृत्तं व्यथितं विषण्णमनसं चापल्यदोषान्वितम्।**
**लग्नं दुर्जयवासनासु सततं मग्नं विषादार्णवे**
**दृष्ट्वा नो दयसे दयालुहृदये मातुः क्व याता दया?॥८॥**

**कृपा टीका**—हे दयालु हृदयवाली माँ जानकी काम क्रोध और लोभ से व्याकुल तथा काल की तलवार से छिन्न-भिन्न अपने ऐतिहासिक वृत्त से रहित अत्यन्त व्यथित दुःखी मन वाले, चंचलता के दोष से युक्त निरंतर अजेय वासनाओं में चिपके हुए विषाद के महासागर में डूबे हुए मुझको निहारकर भी क्यों नहीं दया कर रहीं आपकी दया कहाँ चली गई॥८॥

**मातस्ते हृदये कृपासुरधुनिर्नैसर्गिकी नित्यशो**
**राजन्ती रजसां विमार्ष्टि मनसां राशिं स्वरातात्मनाम्।**
**हृत्वा भोगतृषं कृशं वितनुते संसारघोरश्रमम्**
**दुर्भाग्यस्यममैव पापहृतये तत्राऽपि किं नो जलम्॥९॥**

**कृपा टीका**—हे माँ सीते आपके हृदय में वह प्राकृतिक कृपा रूप गंगा निरंतर विराज रही हैं जो आपके चरणों में समर्पित हुए महानुभावों के रजोगुण की

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

राशि को नष्ट कर देतीं हैं, भोग की प्यास को बुझाकर संसार के घोर श्रम को समाप्त कर देती हैं। अरे क्या मेरा ही इतना दुर्भाग्य है कि मेरे पाप पंक प्रक्षालन के लिए उस कृपा गंगा में भी जल नहीं रहा॥९॥

**मातर्मैथिलि यापराधशतकं नक्तं दिवाऽनुष्ठितम्**
**निष्यन्दं सहसेन वा वितनुषे क्रोधं कदाचिन्मयि।**
**तस्माल्लब्धपशुप्रवृत्तिरनिशं नीचोह्यभीकोऽभयो**
**जातस्ते तनयः शठः कुटिलधीः कस्ते क्षमाया गुणः॥१०॥**

**कृपा टीका**—अब परशुराम जी सीता जी के सारल्य गुण के दुरुपयोग पर व्यंग करते हैं। हे माँ जानकी आप इतनी सरल हैं कि दिनरात अविराम गति से किये जा रहे मेरे सैंकड़ों अपराधों को आप सहती रहती हैं। मुझपर कभी भी क्रोध नहीं करतीं इसलिए आप का यह निकृष्ट अभीक निर्भय बालक पशु प्रवृत्ति से युक्त कुटिल बुद्धिवाला हो चुका है आपकी क्षमा का यह कौन सा गुण है॥१०॥

**मातर्दण्डय मां प्रचण्डविधिभिर्यष्ट्यामुहुर्भीषय**
**तूर्णं भर्त्सय घर्षयस्वपदयोः कृत्वा तले पीडय।**
**कामं ताडय पाणिकञ्जकरजैर्मादेहि मे भोजनम्**
**स्वस्मात् किन्तु पदारबिन्दयुगलात् पुत्रं न दूरं कुरु॥११॥**

**कृपा टीका**—हे माँ सीते, आप मुझे प्रचण्ड विधानों से दण्डित कीजिए छड़ी से धमकाइये, डांटिये, फटकारिये अपने चरणों के नीचे करके कुचल दीजिए पिटाई कीजिए। अपने कर कमलों से मुझे थप्पड़ लगाइये मुझे भोजन मत दीजिए सब कुछ कीजिए किन्तु इस पुत्र को अपने इन श्री जुगल चरणकमलों से दूर मत कीजिए॥११॥

**यां शैवाः शिवमामनन्ति गिरिजां शाक्ताहरिं वैष्णवाः**
**सौराः सूरमिभाननं गणपतेर्भक्ताश्चयं योगिनो।**
**ईशं सांख्यविदः प्रधानपुरुषौ ब्रह्मेति वेदान्तगा**
**स्तां स्वीयां जननीं मुकुन्दरमणीं सैरध्वजीं चिन्तये॥१२॥**

**कृपा टीका**—जिनको शैवजन शिव, शाक्त जन पार्वती, वैष्णवजन नारायण, सूर्यभक्त सूर्य, गाणपत्य महानुभाव गणपति, योगीलोग ईश्वर, सांख्यवादी प्रकृति पुरुष, वेदान्ती जन ब्रह्म कहकर उपासना करते हैं उन्हीं भगवान श्रीराम की धर्मपत्नी अपनी माँ भगवती सीता जी का मैं चिन्तन करता हूँ॥१२॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**यस्याश्चारुसुधाकराननविभाराजत्चकोरश्चिरम्**
**श्रीरामोऽपि बभूव भूरिविभवस्त्रैलोक्यलक्ष्मीमयः।**
**सौन्दर्यामृतवर्षिणी भगवती सौभाग्यभूषावती**
**सीदन्तं कलिकालदारुणभयात् सा जानकी पातु माम्॥१३॥**

**कृपा टीका**—जिनके पूर्ण चन्द्रमुख की कान्ति को निहारने में तन्मय होकर तीनों लोकों की शोभा से युक्त भगवान श्रीराम भी सदासदा के लिए चकोर बन गये, ऐसी सौन्दर्यसुधा का वर्षण करने वाली सौभाग्य के अलंकार से युक्त छहों ऐश्वर्यों से सम्पन्न भगवती सीता कलिकाल के भयंकर भय से व्याकुल मुझ सेवक की रक्षा करें॥१३॥

**आर्ये त्वत् सुयशो महात्ममुखतः श्रुत्वा सदोषोऽप्ययम्**
**ज्ञात्वा त्वां शिशुवत्सलां धृतिमतीं त्वत्पादमूलं श्रितः।**
**दारिद्र्याऽनलदग्धकुञ्जरमनाः संसारतापा कुल-**
**स्तिष्ठन् श्रीरघुराजराजमहिषी द्वारे द्विजो भिक्षते॥१४॥**

**कृपा टीका**—हे देवि! महात्माओं के मुख से आप का सुयश सुनकर और आपको पुत्र वत्सला एवं धैर्यवती जानकर आपके चरण शरण में आया हुआ दारिद्र्य रूप अग्नि से जले हुए मनरूप मतंग वाला, संसार के तापों से व्याकुल श्रीरघुराज राम जी की राजरानी आपश्री के द्वार पर खड़ा हुआ, यह ब्राह्मण आपसे भक्ति की भिक्षा माँग रहा है॥१४॥

**दीनोऽदीनदवाग्निधर्षिततनुस्ताम्यंस्तमोयुक् शठः**
**संसारेण निराकृतो विधिवशात् भ्राम्यन् यथा कुक्कुरः।**
**आत्मन्येव समाश्रयन् विकलतां बालोबुभुक्षुर्हरेः**
**पत्नीं कोसलनायकस्य भवतीं भक्त्यन्नमुच्चैर्वृणे॥१५॥**

**कृपा टीका**—हे भगवती भयंकर दावाग्नि से झुलसे हुए शरीर वाला, अत्यन्त व्याकुल मोह के अंधकार से युक्त, दुष्ट प्रकृति वाला, संसार से अपमानित अपने ही भाग्य दोष से कुत्ते की भाँति भटकता हुआ, अपने मन में बहुत विकल होता हुआ, एक भूखा दीन बालक, मैं कोसलेन्द्र पत्नी आपश्री से श्रीराम भक्ति रूप भोजन की भीख माँगता हूँ॥१५॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मातस्ते विनियोगतो ननु मया भ्रान्तं जगद्योनिषु
प्रारब्धानुमतेन संसृतिमता वात्सल्यमुत्पश्यता।
सन्तुष्टा नहि चेत् ब्रवीतु पुरतः किं वापराद्धं हि मे
तुष्टा चेन्निजनाथ पादकमलं रातूपहारं हि मे।।१६।।

**कृपा टीका**—हे माँ मैथिलि! अपने प्रारब्ध का अनुगमन करते हुए संसारासक्त मुझ जीव के द्वारा आपके वात्सल्य की प्रतीक्षा करते हुए संसार की चौरासी लाख योनियों में आपके आदेश से भ्रमण किया गया। मेरे कार्य से यदि आप संतुष्ट नहीं हैं तो सामने आकर बताइये कि मैंने कौन आपका अपराध किया है। यदि आप सन्तुष्ट हैं तो मुझे अपने पति श्रीराम जी का चरण कमल ही उपहार रूप में दे दीजिए।।१६।।

आर्ये त्वं करुणालया सहृदया श्रीरामचन्द्रप्रिया
सीते पावितचित्रकूटविपनाभावान्विता भामिनी।
राक्षस्योऽपि सनाथिताः करुणया वात्सल्यवत्या त्वया
हा हा देवि! मदुद्धृतौ कथमहो जाता भृशं निर्दया।।१७।।

**कृपा टीका**—हे आर्ये! आपमें करुणा का दिव्य मंदिर है आप भगवान श्रीराम की प्राणप्रिया हैं। हे सीते! आपने चित्रकूट की पृथ्वी को पवित्र किया है, आप परम भावुक श्रेष्ठ महिला हैं। हे भगवती आपने अपने वात्सल्य से करुणापूर्वक अपराध करने वाली राक्षसियों को भी सनाथ कर दिया तो फिर मेरे ही उद्धार के सम्बन्ध में आप इतनी कठोर क्यों बन गयी हैं?।।१७।।

भद्रे त्वद्गुणगौरवं निगदितुं वेदावतारो हरिः
श्रीरामोऽपि न शक्यते पुनरमी ह्यल्पज्ञजीवा कथम्।
किं मे कैतवविक्लवा मतिरसौ त्वत्कीर्तिगाने क्षमा
तस्माद्बालकचापलं कृतमिदं देव्या त्वया क्षम्यताम्।।१८।।

**कृपा टीका**—हे कल्याणि, आपके गुणगणों के कथन में यदि वेदावतार श्रीमद्वाल्मीकि रामायण जी तथा सर्वज्ञ श्रीरामजी भी समर्थ नहीं हैं तो हम जैसे अल्पज्ञ जीव कैसे समर्थ हो सकते हैं। भला कपट आदि दोषों से मलिन मेरी बुद्धि आपके यशोगान में कैसे समर्थ हो सकेगी अतएव इस स्तोत्र के द्वारा प्रस्तुत की गयी मेरी चपलता को आप क्षमा करें।।१८।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सीते सीदति सेवके मयि जने ध्येया स्वका कारुणी
मातर्मा समुपेक्षथाः सुतमिमं दुर्भाग्यभावं भवे।
भद्रे भर्जय भोगबीजनिकरं सौशील्यमाविष्कुरु
विप्रं प्राहि मुकुन्दभक्तिसुधया मां पाहि भो मैथिलि॥१९॥

**कृपा टीका**—हे सीते दुःखी होते हुए मुझ सेवक पर अपनी करुणा करें। हे माँ इस संसार में सबसे अभागे मुझ जैसे पुत्र की उपेक्षा न करें हे कल्याणी, मेरे भोगों के बीजसमूहों को भून डालें अपने सौशील्य को प्रकट करें। हे मैथिलि, मुझ ब्राह्मण को भगवत्भक्ति सुधा से पूर्ण करें और मेरी रक्षा करें॥१९॥

भावैः परीता श्रुतिगीतगीता
रामप्रिया दण्डकभूमिनीता।
सती विनीता सरला प्रतीता
चित्ते मदीये विचकास्तु सीता॥२०॥

यहाँ से उपजाति छन्द है।

**कृपा टीका**—भावों से युक्त, वेदों में जिनका यशोगान किया गया है ऐसी भगवान श्रीराम की पत्नी दण्डक वन में विराजमान, पतिव्रता, विनम्र एवं सरल सुप्रसिद्ध भगवती सीताजी मेरे चित्त में सुशोभित हों॥२०॥ अब श्लोक २४ तक उपजाति छन्द है।

त्रैलोक्यलक्ष्मीं वपुषा जयन्तीं
कुन्दत्विषं दन्तरुचा हरन्तीम्।
रामेण साकं सततं लसन्तीं
सीतां स्तुवे मैथिलिवैजयन्तीम्॥२१॥

**कृपा टीका**—अपने शरीर से त्रिलोक की शोभा को जीतने वाली, दाँतों की कान्ति से कुन्द की शोभा को चुराने वाली, श्रीरामजी के साथ निरंतर विराजमान, मैथिल वंश की कीर्ति पताका श्रीसीताजी की मैं स्तुति करता हूँ॥२१॥

विश्वोद्भवस्थाननिरोधलीलां
सौन्दर्यशीलां विमलां सुशीलाम्।
नीलाम्बरां दन्तवरां वरेण्यां
श्रयामि सीतां जननीं शरण्याम्॥२२॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—अपनी लीला से जगत् की उत्पत्ति, पालन और संहार करने वाली, परम सुन्दरी, निर्मल, सुन्दर स्वभाव वाली, नीला वस्त्र धारण करने वाली, वरदायिनी, देवतारूप में वरण करने योग्य, शरण देने में समर्थ, माँ सीता को मैं समाश्रित हो रहा हूँ॥२२॥

**सीते त्वदीयं चरणाम्बुजं मे**
**भवत्वघघ्नं निजदासनिघ्नम्।**
**मग्नं भवाब्धौ विषयेषु लग्नम्**
**पुषाण मातः शिशुमेव भग्नम्॥२३॥**

**कृपा टीका**—हे सीता जी अपने भक्तों के अधीन आपके श्रीचरणकमल मेरे पापों को नष्ट करें। भवसागर में डूबे हुए विषयों में आसक्त सभी प्रकार टूटे हुए मुझ बालक का पोषण कीजिए॥२३॥

**संजीवनीकोसलराजधान्याः**
**स्वसूप्रिया राघवधर्मपत्नी।**
**विलोक्य कारुण्यविलोकनेन**
**निहन्तु दैन्यं मम जानकीशा॥२४॥**

**कृपा टीका**—कोसलराजधानी की संजीवनी बूटी माण्डवी आदि बहिनों को प्रिय, श्रीराम की धर्मपत्नी, सर्वेश्वरी जानकी जी, करुणादृष्टि से मुझे निहारकर मेरी दीनता को दूर कर दें॥२४॥

**विषयासक्तचित्तस्य निर्घृणस्य जनस्य मे।**
**हृद्गतं विततं कामकश्मलं मथ मैथिलि॥२५॥**

**कृपा टीका**—हे माँ! विषय में आसक्त चित्त वाले दयाहीन मुझ जैसे व्यक्ति के हृदय में वर्तमान में व्याप्त कामनाओं के मल को आप समाप्त कर दें। क्योंकि आप मिथिला में प्रकट हुई हैं॥२५॥ अब श्लोक २८ तक अनुष्टुप् छन्द है।

**श्री राघवेन्द्रदयिते तेजसा जितपावके।**
**सीते सीदति वात्सल्यवारिभिर्वर्ष शावके॥२६॥**

**कृपा टीका**—हे भगवान श्रीराम की पत्नी, हे तेज से अग्नि को जीतने वाली,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्रीसीते! दुखी हो रहे मुझे बालक पर वात्सल्य सुधा की वर्षा करो॥२६॥

**अयोध्यां सुमनो बोध्यां चरणाम्बुज लक्ष्मभिः।**
**मण्डयन्ती विजयते राज्ञी राघव वल्लभा॥२७॥**

**कृपा टीका**—अपने श्रीचरणकमलों के चिह्नों से सज्जनों द्वारा जानने योग्य, श्रीअयोध्या जी को सुशोभित करती हुईं, श्रीराघवजी की प्राणवल्लभा सीताजी की जय हो॥२७॥

**राम प्राण प्रिये रामे रमे राजीवलोचने।**
**राहि राज्ञि रतिं रम्यां रामे राजनि राघवे॥२८॥**

**कृपा टीका**—हे रामजी की प्राणप्रिया, हे रमणीय अंगों वाली, हे भगवान श्रीराम की महाशक्ति, हे कमलनेत्रे, हे महारानी, भगवती सीते, आप मुझे महाराज श्रीरामचन्द्र जी के प्रति प्रेमलक्षणा भक्ति प्रदान करें॥२८॥

**कमनकाञ्चनचंपकसौभगा भगवती भवती भगवत्परा।**
**पतितपावनभावनिभालिका विजयते मिथिलाधिपबालिका॥२९॥**

**कृपा टीका**—तपे हुए सुवर्ण, एवं चम्पा के समान शोभा वाली छहों ऐश्वर्यों से युक्त स्वयं प्रकाशमान भगवत्परायण, पतितपावन, भगवान श्रीराम के भावों को संभालने वाली मिथिलाधिराज जनक जी की राजकन्या सीताजी की जय हो॥२९॥ अब श्लोक ४८ तक द्रुत विलम्बित छन्द है।

**जननि ते पतितं पदपंकजे जनमिमं परिपाहि परेश्वरि।**
**हर मनोभवकैतवपावकं मृडय डिम्भमिमं धृतदावकम्॥३०॥**

**कृपा टीका**—हे माँ सीते! आपके श्रीचरण कमल पर पड़े हुए इस भक्त की रक्षा कीजिए। हे परमेश्वरि! मन की वासना रूप कपट अग्नि को नष्ट कीजिए और दावाग्नि से जलते हुए अपने नन्हें शिशु को ठीक कर दीजिए॥३०॥

**भवदवानलदग्धमसद्व्रतं पतितनाथमनाथमनीश्वरम्।**
**विषयवारिधिमीनमसज्जनं जननि लालय लालय लालय॥३१॥**

**कृपा टीका**—संसार की दावाग्नि से जले हुए दुष्ट चरित्र वाले पतित, कलिकाल के आश्रय में रहने वाले अनाथ, असमर्थ, विषय महासागर की मछली मुझ

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

असज्जन को तीनों अवस्थाओं में आप माताश्री दुलारती रहें, दुलारती रहें दुलारती रहें॥३१॥

**त्रिविध तापरतं धृतपातकं मलिनभोगपयोधरचातकम्।**
**शिशुमसंस्कृतमार्तिगतं खलं क इह पातु विना जननीं श्रियम्॥३२॥**

**कृपा टीका**—तीनों तापों में लगे हुए पापी, विषय रूप बादल के चातक, संस्कार रहित आर्त, मुझ बालक सेवक की यहाँ भगवती सीता जी के बिना कौन रक्षा कर सकता है?॥३२॥

**जननिजन्मजराभयपीड़ितं भव पयोनिधि मज्जनतत्परम्।**
**भृगुसुतं ह्यवितुं निजकिंकरं कथमहो जगदम्ब बिलम्बसे॥३३॥**

**कृपा टीका**—हे माँ, हे जगत्पालिका, जन्म और वृद्धावस्था के भय से पीड़ित, संसार सागर के अवगाहन में तत्पर, अपने भक्त मुझ परशुराम की रक्षा करने में आप क्यों विलंब कर रही हैं॥३३॥

**त्वमसि मे जननी ममतामयी करुणया महितासहिता व्रतैः।**
**ध्रुवममुष्य समुद्धरणे विधौ सफलयत्नवती भव मैथिलि॥३४॥**

**कृपा टीका**—हे माँ आप करुणा से युक्त, अलौकिक व्रतों से सम्मानित, ममतामयी मेरी माँ हैं, आप निश्चय ही मेरी उद्धारविधि में सफल प्रयास वाली हो सकती हैं॥३४॥

**तव पुरो रचिता वृहती तती कुटिल कर्म समुल्लसदेनसाम्।**
**कथमहं धृतपंककलंककं निजमुखंससुखं तव दर्शये॥३५॥**

**कृपा टीका**—हे माँ आपके ही सामने मैंने दुष्ट कर्मों से सुशोभित पापों की विशाल पंक्ति बनाकर प्रस्तुत की है। अरे, अब मैं पाप के कीचड़ से कलंकित अपना मुख आप को प्रसन्नतापूर्वक कैसे दिखा दूँ॥३५॥

**जय मुकुन्दमुखोडुपकौमुदीकलचकोरि किशोरि महीपतेः।**
**जय जगत्पतिचित्तसरोरुहो रविविभेऽजनिभे जय जानकि॥३६॥**

**कृपा टीका**—भगवान श्रीराम के मुखचन्द्र चन्द्रिका की श्रेष्ठ चकोरी, जनकराज कन्या, आपकी जय हो, जगदीश्वर श्रीराम के चित्त कमल को विकसित करने

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वाली, सूर्य की प्रभा आपकी जय हो, कमलके समान कोमलांगी जानकी जी आपकी जय हो॥३६॥

**धरणिमण्डनमण्डनमण्डने सुखितशैवशरासनखण्डने।**
**वदनकान्तिकलाधरनिन्दिनि मृडय मां मिथिलाधिपनन्दिनि॥३७॥**

**कृपा टीका**—पृथ्वी के आभूषण महाराज दशरथ के भी आभूषणस्वरूप प्रभु श्रीराम को भी सुशोभित करने वाली, शिव धनुष को तोड़नेवाले राघव जी को सुखी करने वाली, अपने मुख की कान्ति से चन्द्रमा को भी लज्जित निंदित करने वाली, हे जनकराजपुत्री सीते आप मुझे सुखी करें॥३७॥

**त्वमसि देवि पराप्रकृतिःपुमास्त्वमसि निर्गुणचिन्मयचेतना।**
**त्वमसि मञ्जुमतिर्जनदेहिनी त्वमसि कोसलनायकगेहिनी॥३८॥**

**कृपा टीका**—हे देवी आप पराप्रकृति और पुरुष भी हैं आप ही निर्गुण ब्रह्म की ज्ञानस्वरूप चेतना हैं। आप ही प्रत्येक शरीर में रहने वाली सुन्दर बुद्धि हैं और आप भगवान श्रीराम की आदर्श गृहिणी भी हैं॥३८॥

**न जननी जनको न जनः क्वचिज्जननि मे जगतीह सहायकः।**
**अशरणोऽकरणश्चरणस्तवप्रभवतादरणं शरणं मम॥३९॥**

**कृपा टीका**—हे माँ इस संसार में मेरे पास माँ पिता सेवक सहायक कोई नहीं हैं मैं शरणरहित और साधनहीन हूँ, अब तो मेरे लिए आपके श्री चरण ही रक्षक और आश्रय बनें॥३९॥

**त्वमपि मामिह मातरुपेक्ष्यसे शरणमेमि कमाशु निवेदय।**
**रिपुपरिग्रहवत्सलता तव त्रिभुवनेऽनुपमा क्व गता वद॥४०॥**

**कृपा टीका**—हे माँ यदि आप भी मेरी उपेक्षा कर रही हैं तो मैं किसकी शरण में जाऊं। आप ही बताइये क्योंकि आपकी शत्रुपत्नियों पर भी अद्वितीय वत्सलता कहाँ गई बताइए॥४०॥

**सरलता तव मैथिलिकन्यके अतिजिगायरघूत्तमकारुणीम्।**
**अशरणारजनीचरयोषितस्तव कृपाप्लवतो भवतोऽतरन्॥४१॥**

**कृपा टीका**—हे जनकराज कन्यके! आपकी सरलता ने तो श्रीराम की करुणा को

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भी पीछे छोड़ दिया अशरण होकर भी राक्षसपत्नियाँ आपके कृपा जहाज से ही संसार सागर से पार हो गयीं॥४१॥

**तव दयाभुवनत्रयविश्रुता पतितपावनशीलमपि श्रुतम्।**
**मम समुद्धरणे कथमालसा भवति रामपदेक्षणलालसा॥४२॥**

**कृपा टीका**—हे माँ आप की दया तीनो लोकों में प्रसिद्ध है और आप का पतिपावन शील भी ख्यात है। हे श्रीराम के चरणारविन्द की दर्शन की लालसावाली सीते, आप मेरे उद्धार में क्यों आलस्य कर रही हैं॥४२॥

**सुनयनानयनामृतवर्तिके दशरथान्वयमंदिरदीपिके।**
**प्रणतकामदकल्पलते मते जय सदा विनते नृपतेः सुते॥४३॥**

**कृपा टीका**—हे सुनयना जी के नेत्र की अमृत की पुतली, हे महाराज दशरथ वंशरूप मंदिर की दीपिका, हे प्रणतों के लिएकल्पवृक्ष की लतास्वरूपिणी, हे विनम्र राजकन्या सीते, आप की निरंतर जय हो॥४३॥

**नहि जपो न तपो न मखोव्रतं न हि कदापि शुभं हि मया कृतम्।**
**प्रतिपदं पतितो विपदां पदं पदमुपैमि तवैव सुखप्रदम्॥४४॥**

**कृपा टीका**—हे माँ मेरे द्वारा कभी भी जप तप यज्ञ व्रत आदि कोई भी शुभ कर्म नहीं किया गया मैं तो निरंतर विपत्ति में पड़ा हुआ सर्वसुखदायी आपके चरण की ही शरण ले रहा हूँ॥४४॥

**हृदि विभाव्य विशिष्टकुलान्वयं कलितकल्मषदोषसमन्वयम्।**
**परमपातकिमौलिसमाह्वयं द्विजमिमं कुरु जानकि निर्भयम्॥४५॥**

**कृपा टीका**—हे जानकी जी पाप और दोषों के समन्वय से युक्त होने पर भी मुझ पापी चक्र चूड़ामणि ब्राह्मण को भृगुवंश जैसे विशिष्ट कुल में उत्पन्न हुआ जानकर अब निर्भय कर दीजिए॥४५॥

**अबलदेहमनाश्रितसाधनं ऋतुविकारघनं ममतावनम्।**
**विकलितं चलितं विधनं जनं मलभरं कुरुलब्धधनुर्धरम्॥४६॥**

**कृपा टीका**—हे भगवती, निर्बल शरीर वाले, साधनहीन, छहों विकारों से युक्त, ममता के महावन में व्याकुल, चलायमान, धन रहित, मल से व्याप्त मुझ सेवक को धनुर्धर श्रीराम की प्राप्ति करा दीजिए॥४६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**जननि ते तरुणां करुणां बिना रमयितुं ननु राम पदे मनः।**
**कथमहं प्रभवेयमसाधनो हरतिनेक्षुरसो मधुलिट्तृषम्।।४७।।**

**कृपा टीका**—हे माँ आपकी नवीन करुणा के बिना साधनहीन मैं अपने मन को श्रीराम के चरणों में कैसे रमा सकूँगा क्योंकि गन्ने का रस भँवरे की प्यास नहीं बुझा सकता।।४७।।

**पतिरते रघुनन्दनभामिनि क्षपितजातकपातकयामिनि।**
**स्वपदपद्मनखोडुपरोचिषा मम मनोगमनं परिभाषय।।४८।।**

**कृपा टीका**—हे पतिव्रते, हे भगवान राम की धर्मपत्नी, हे अपने भक्तों की पापरात्रि को नष्ट करने वाली सीते, अपने चरण कमल की नख चन्द्र की कान्ति से मेरे मनरूप आकाश को प्रमाणित कर दीजिए।।४८।।

**सीतादेव्या मृदुलचरणं मञ्जुलं कञ्जकान्तं**
**सौन्दर्यान्तं विमल रजसा काननान्तं पुनान्तम्।**
**घ्नन्तं ध्वान्तं नखमणिरुचा सौम्यसन्तं महान्तं**
**स्वान्तं शान्तं विदधतमहं भावये भावनान्तम्।।४९।।**

**कृपा टीका**—अत्यन्त कोमल कमल के समान सुन्दर, सौन्दर्य की सीमा, अपने विमल पराग से वन्य प्रदेश को पवित्र करने वाले, नखमणि कान्ति से अन्धकार को दूर करने वाले, सन्तों को भी सौम्य बनाने वाले, मन को शान्त करने वाले, भावनाओं की सीमा, ऐसे भगवती सीता जी के महान एवं मृदुल श्रीचरणों की मैं भावना करता हूँ।।४९।। अब श्लोक ५८ तक मन्दाक्रान्ता छन्द है।

**श्यामा वामा हरिणनयना दिव्यवेणीं दधाना**
**रामा रम्या सुरमुनिनरैर्यक्षसिद्धैः प्रणम्या।**
**दीव्यन्ती सा नृपतिभवने नीलवासोवसाना**
**कौसल्यायाः सुखदवचना मैथिली मां मिमीताम्।।५०।।**

**कृपा टीका**—मुग्धानायिका, परमसुन्दरी, मृगलोचनी, दिव्यवेणी धारण की हुई, श्रीराम जी की प्रिया, रमणीय अंगों वाली, देवता मुनि, मनुष्य, यक्ष, सिद्ध द्वारा प्रणम्य, महाराज दशरथ के भवन में विहार करती हुई, नीलवस्त्र धारण

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

की हुई, कौसल्या जी को अपने वचनों से सुख देने वाली ऐसी आपश्री मैथिली जी एक बार मुझे पुत्र कहकर बुला लें॥५०॥

मन्दं मन्दं चलितचरणा दक्षिणे केशपाशम्
वामे पाणौ जवचलतया स्वाञ्चलं धारयन्ती।
स्वस्राहूता त्वरितगतिका अम्ब! आयामि चेत्थम्
सीता प्रीता भवतु मधुरं भाषमाणा भवाय॥५१॥

**कृपा टीका**—धीरे धीरे अपने चरणों को चलाती हुई दाहिने हाथ में केश का जूड़ा और वेग से उड़ने के कारण अपनी साड़ी के पल्ले को बायें हाथ से धारण करती हुई, सासू कौसल्या जी के बुलाने पर (अम्मा जी आ रही हूँ) इस प्रकार जल्दी जल्दी चलकर मधुर बोलती हुई प्रसन्न सीताजी हमारा कल्याण करें॥५१॥

लज्जाभूषा विनतनयना रत्नसिंहासनस्था
दिव्यं वासः परिधृतवती नव्यसीमन्तचूडाम्।
सानन्दाभिर्युवतिभिरलं वीक्ष्यमाणा मुखाब्जम्
सीता सा नोरघुकुलवधूः सन्ततं शं तनोतु॥५२॥

**कृपा टीका**—लज्जा रूप आभूषणों के कारण कुछ झुके हुए नेत्रों वाली, रत्नसिंहासन पर विराजमान, दिव्य वस्त्र धारण की हुई, एवं नये नये जूड़े से अलंकृत, आनंदित सखियों द्वारा जिनका मुख कमल बार बार देखा जा रहा है ऐसी नई नई आई हुई रघुकुल की राजवधू श्रीसीताजी मेरा कल्याण करें॥५२॥

क्रीडन्ती सा चकितनयना कन्दुकैः केलि भूमौ
राजत्सिंजच्चरणविलसन्नूपुराभूमिपुत्री ।
उत्फुल्लाम्भोरुहमृदुमुखी हासयन्ती हसन्ती
भूयाद् भव्या रघुवरसखीमोदयन्ती मुदे नः॥५३॥

**कृपा टीका**—क्रीड़ा की भूमि में गेंद खेलती हुई शब्द करते हुए सुन्दर नूपुरों से युक्त चरण वाली, विकसित कमल जैसे मुखमण्डल वाली, सखियों को हँसाती और हँसती हुई, श्रीराम जी की परम मित्र, भूमिनंदिनी सीताजी प्रभु को भी प्रसन्न करती हुईं सदैव हमारी प्रसन्नता का कारण बनें॥५३॥

रम्योद्याने कुसुमकलिते दुग्धमत्यास्तटे सा
श्रुत्वा सीता स्वपतिचरितं कोकिलैर्गीयमानम्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

एकान्तस्थाप्रकृतिसरलासैकतीं राममूर्तिम्
कृत्वा प्रेम्णा नयनसलिलैः पूजयन्ती पुनीयात्।।५४।।

**कृपा टीका**—दूधमती के तट पर पुष्पों से भरे हुए सुन्दर उपवन में कोकिल रूप में आये हुए, बाल्मीकि आदि महर्षियों द्वारा गाये जाते हुए, अपने प्राण पति, श्रीराम के चरित को सुनकर एकान्त में बैठकर श्रीराम की बालू की मूर्ति बनाकर अपने आँसुओं से उसका अभिषेक करती हुई स्वभाव से सरल श्रीसीताजी हमें पवित्र करती रहें।।५४।।

तत्रैकान्ते हरितहरिते शाद्वले कुञ्जकान्ते
शिष्टा हृष्टा सखिगणवृता सोऽपविष्टा मुहूर्तम्।
ध्यानप्राप्तं रघुकुलमणिं गूह्यन्तीहृदब्जे
प्रेमोद्रेकात् सजलनयना जानकी मे पुरोऽस्तु।।५५।।

**कृपा टीका**—उसी क्रम में एकान्त में कुञ्ज का स्वरूप धारण किये हुए, हरे हरे तृण के आसन पर सखीगणों के साथ कुछ क्षण पर्यन्त बैठकर, ध्यान में प्राप्त श्रीरामजी को अपने हृदय कमल में छिपाती हुई, प्रेम के उद्रेक से आँसू भरे नयन वाली, रोमाञ्चित, शिष्ट सीता जी मेरे समक्ष दृष्टिगोचर हों।।५५।।

मज्जन्ती सा पयसि विमले दुग्धमत्या सखीभिः
गायन्ती श्रीरघुपति गुणान् साश्रुनेत्रा सुकेशी।
चित्तागारे प्रियपति निधिं गोपयित्वा दधाना
कन्याभावं समनुदधती राजतां राजकन्या।।५६।।

**कृपा टीका**—अहो! दूधमती जी के विमल जल में सखियों के सहित स्नान करती हुई, अश्रुपूर्ण नयनों से युक्त श्रीरामजी के गुणगणों को गाती हुई, अपने चित्त के भवन में श्रीरामरूप मणि को छिपाकर कन्याभाव को धारण करती हुई, जनकराज़ की पुत्री श्रीसीताजी हमारे कल्याणों का सम्पादन करने के लिए प्रकाशित हों।।५६।।

बाल्येबाला विरचितपटीदम्पतीनां विवाहम्
लब्धोत्साहा ललित ललितं कुर्वती कौतुकाद्यम्।
लीला शीला प्रियपरिकरीर्लालयन्ती वचोभिः
सीता देवी जयति सततं मैथिली वैजयन्ती।।५७।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—अपने बाल्यकाल में गुड्डा गुड्डी का विवाह करती हुई, और उनके निमित्त अत्यन्त ललित उत्सव करती हुई, स्वभाव से शिशुलीलारसिक अपनी सखियों को मधुर वचनों से दुलारती हुई मिथिलाधिराज की कीर्ति वैजयन्ती श्रीसीताजी की सदा जय हो॥५७॥

**प्रासादस्था मधुरमधुरं पावनं रामनाम–**
**भर्तुर्दिव्यं कनककलिते पिञ्जरे लालयन्ती।**
**स्निग्धान् मुग्धान् शुक शिशु गणान् सारिकाः पाठयन्ती**
**सा वै सीता विलसतितमां योषितां रत्नभूता॥५८॥**

**कृपा टीका**—अपने राज अट्टालिका पर सोने के पिंजरे में छोटे छोटे तोतों तथा मैनाओं को पालती एवम् उन्हें परम पवित्र श्रीराम के नाम को पढ़ाती हुई महिलाओं की अलंकार श्रीसीता जी मेरे ध्यान मंदिर में अत्यन्त शोभित हो रही हैं॥५८॥

**जय मैथिलि मैथिलवंशमहा–**
**सरसीजनिता सुखदा नलिनी।**
**रघुवंशविभूषणपूषविभा–**
**विहिताननपद्मविकासवती॥५९॥**

**कृपा टीका**—जनकराज के वंश रूप सरोवर से उत्पन्न एवं उसे सुख देने वाली तथा श्रीरामरूप सूर्य की कान्ति से विकसित मुखकमल वाली कमलिनी सीते आपकी जय हो॥५९॥ यहाँ से श्लोक ६८ तक त्रोटक छन्द है।

**जय जानकि जीवभयापहृते**
**धृतनारितनोतनुतापहते।**
**निजभक्तमनोरथकल्पलते**
**जय रामरते मिथिलेशसुते॥६०॥**

**कृपा टीका**—जीवों का भय दूर करने के लिए नारी का शरीर धारण करने वाली, भक्तों के ताप दूर करने वाली, अपने भक्तों के मनोरथ के लिए कल्पलता, श्रीराम में अनन्य लक्षणा भक्ति धारण करने वाली, हे जनकराज पुत्री जानकी जी आपकी जय हो॥६०॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**जय रामनवेन्दुचकोरवधू**
**रघुचन्द्रचकोरशशांकमुखि।**
**जय भूमिसुते मुनिदेवनुते**
**हरि भामिनि भावनते वनिते।।६१।।**

**कृपा टीका**—हे रामरूप नवीन चन्द्रमा की चकोरी आपकी जय हो तथा हे रामचन्द्र चकोर की चन्द्रमुखी आपकी जय हो, हे श्रीराम की धर्मपत्नी, आदर्श महिला, मुनियों और देवताओं से स्तुत्य भूमि पुत्री आपकी जय हो।।६१।।

**तव पादसरोजपरागजुषो**
**न म्रियन्त इहामृतयूषपुषः।**
**तव नाम जपन्त उदारधियः**
**क्षपयन्ति सदैव भवाब्धिभियः।।।६२।।**

**कृपा टीका**—हे माँ आपके श्रीचरणकमल का पराग सेवन करने वाले महानुभाव अमृत के प्रवाह को भी पोषित करते हुए इस संसार में रहकर भी नहीं मरते। जो उदार बुद्धि वाले महानुभाव आपका नाम जप करते हैं वे सदैव संसार सागर के भय को दूर करते रहते हैं।।६२।।

**जय मैथिलनायकपुण्यमहा**
**सुरपादपचारुलते विनते।**
**जगदम्ब दयामयि पापरते**
**करुणां कुरु दीनसुते प्रणते।।६३।।**

**कृपा टीका**—हे जनकराज के पुष्प, कल्पवृक्ष की लता, जगज्जननी सीता जी आपकी जय हो, हे दयामयी, पापबुद्धि वाले प्रणत अपने दीन बालक पर करुणा कीजिए।।६३।।

**रघुनन्दननीरदचातकि हे**
**प्रकृते वनितोत्तमशीलव्रते।**
**ललनाजनलालितमञ्जुमते**
**स्वशिशुं परिपाहि विदेहसुते।।६४।।**

**कृपा टीका**—हे श्रीराम रूप बादल की चातकी, सुन्दर शरीर वाली, उत्तम महिला

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

के स्वभाव से युक्त, नारी जनों द्वारा प्रशंसित, सुन्दर बुद्धि वाली, विदेहनंदिनी सीते, अपने पुत्र का पालन करो॥६४॥

**अवलम्बय मां भवनीरनिधौ**
**पतितं स्वसुतं बहुपापविधौ।**
**जगदम्ब विलम्बयसे किमहो**
**दयनीय जने प्रकुरुष्व दयाम्॥६५॥**

**कृपा टीका**—अनेक प्रकार के पाप से युक्त इस संसार सागर में पड़े हुए मुझ पुत्र को उबार लीजिए, हे माँ अब क्यों विलम्ब कर रही हो, मुझ दयनीय जन पर कृपा करो॥६५॥

**मिथिलाधिपसीरविकर्षणतो**
**महिमण्डलतः समभूद् गुणतः।**
**शिशुभावमिता सुरसिद्धनता**
**जनकाङ्कगता सुहिता दुहिता॥६६॥**

**कृपा टीका**—हे सीते आप अपने वात्सल्य गुण के कारण ही महाराज जनक के हलकर्षण के पश्चात् ही पृथ्वी से उत्पन्न हुईं और भक्तों के भाव के कारण बालिका भाव में जनक जी के गोद में आयीं और उनकी बेटी बनीं॥६६।

**कलकुञ्चितकेशकलापवृता**
**मधुराधरपल्लवपद्ममुखी।**
**ललितांघ्रिकराम्बुरुहासुषमा**
**वरविग्रहणीव सुता समभूत्॥६७॥**

**कृपा टीका**—अहो, सुन्दर सुन्दर घुँघराले केशों से युक्त, मधुराधर पल्लव और कमलमुख वाली आप ललित चरण एवं करकमल से युक्त सुन्दर दिखीं। मानों परम शोभा ही शरीर धारण करके जनक जी की बेटी हुई॥६७॥

**सितमाधवमास महानवमी**
**महिताहितयाश्रितजन्मतया।**
**अवलोकय मां निजकौतुकतः**
**शिशुरुपमिते जनकेन्द्र सुते॥६८॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—अपनी जन्मतिथि बनाकर आपने वैशाख शुक्ल नवमी को धन्य बना दिया इसलिए हे बालरूपधारिणी जनकनंदनी जी मुझे भी अपने कौतुक भरे नेत्रों से निहार लीजिए॥६८॥

**मिथिलाधिराजवरवंशवैजयन्ति सीते**
**विनयानि भवतीं निखिल लोक स्वामिनि।**
**जनककिशोरि रामचन्द्रसुचकोरि गौरि**
**शृणु मम प्रार्थनामयोध्याभूपभामिनि।**
**जगदुपकारहेतोर्मिथिलेशकुलेजाता**
**पुत्रीभूता भूतभवभूतिनाशकारिणी।**
**कोसलकिशोरवधूः कोसलां सनाथयसि**
**रामभद्रभव्यमञ्जुमानसविहारिणी॥**
**वेदशेषशंकरगणेशशारदाभिरपि**
**वक्तुं नहि शक्यते त्वदीयगुणमालिका।**
**अंजनातनयशीलविनयप्रणयप्रीता**
**सीता मयि करुणां करोतु भूमिबालिका।**
**जानन्निजक्रूरकर्मजननीं शरणमितो**
**देवि मा विधेहि रोषं शिशौमलदेहिनि।**
**भृगुसुत मबलमनाथमंधमज्ञमेनम्**
**पाहि पाहि पाहि सीते कोसलेन्द्र गेहिनि॥६९॥**

**कृपा टीका**—मिथिलाधिराज के वंश की पताका, सारे संसार की स्वामिनी, सीते, मैं आपसे विनय करता हूँ कि हे राममुखचन्द्र की चकोरी, हे गौरवर्णे, हे रामप्रिये, मेरी प्रार्थना सुनिए, आप जगत के उपकार के लिए जनक जी के कुल में प्रकट हुईं और संसार भयहारिणी होकर भी महाराज की पुत्री बनीं पुनः भगवान श्रीराम के मानस सरोवर में विहार करती हुई महाराज दशरथ की बहूरानी बनकर आप अयोध्या राजभवन को सनाथ कर रही हैं। हे भगवती आपके गुणगणों को वेद, शेष, भगवान शंकर, गणेश, सरस्वती आदि भी नहीं कह सकते। फिर भी आप आंजनेय हनुमान जी के प्रेम से प्रसन्न हुईं अब विदेह नंदिनी मुझ पर कृपा करें अपना क्रूरकर्म जानकर ही मैं आपकी शरण में आया हूँ। मुझ मलिन बालक पर क्रोध मत कीजिए। हे श्रीराम की गृहलक्ष्मी निर्बल अनाथ,

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अज्ञानांध इस परशुराम की रक्षा कीजिए रक्षा कीजिए रक्षा कीजिए॥६९॥ यहाँ से श्लोक ७१ तक गीतक छन्द है।

वंदे वंदितचरणसरोजां
मधुकरनिन्दितकुटिलशिरोजाम्।
चंपकसरसिजसमतनुशोभाम्
विगलितसेवकमन्मथलोभाम्।
रघुनन्दनमुखचन्द्रचकोरी
जयति सदा श्रीजनककिशोरी।।७०।।

**कृपा टीका**—जिनके चरण कमल की वंदना की गयी है तथा जिनके कुटिल केशों ने भंवरों की भी निंदा की है जिनके शरीर की शोभा चम्पा कमल पुष्प के समान तथा जिन्होंने अपने सेवक के काम क्रोध लोभ मोह को नष्ट किया है ऐसी सीताजी की मैं वंदना करता हूँ॥ आप भगवान श्रीराम के मुखचन्द्र की चकोरी तथा जनकराज की पुत्री हैं॥७०॥

धरणि सुताहरि गृहिणी श्यामा
नारिललाम सतामभिरामा।
रावणकुलपंकजहिमयामिनि
पाहि शिशुं मां रघुवरभामिनि।
भरतवत्सले भावविनीते
जननि शिशुं परिपालय सीते।।७१।।

**कृपा टीका**—आप पृथ्वी तनया श्रीराम की गृहलक्ष्मी षोडशी महिलारत्न और सन्तों को आनन्द देने वाली हैं। हे रावण कुल रूप कमल के लिए हेमन्त रात्रि, हे श्रीराम जी की गृहलक्ष्मी आप मुझ बालक की रक्षा करें, हे भरत जी पर वात्सल्य बरसाने वाली, हे भाव से विनम्र, हे माँ सीते आप मुझ बालक का पालन करें॥७१॥

महाघोरशोकाग्निना दह्यमानं
पतन्तं निरासारसंसारसिन्धौ।
अनाथं जड़ं मोहजालेन बद्धं,
शिशुं पातु मां मैथिली मन्दभाग्यम्।।७२।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—अत्यन्त शोक की अग्नि से जलते हुए असार संसार सागर में पड़े हुए मोहजाल से बद्ध मुझ मंदभाग्य की भगवती सीताजी रक्षा करें।।७२।। भुजंगप्रयात छन्द।

**व्रतं नो तपो नो जपो नैव पूजा**
**न चेष्टं श्रुतं नो हुतं नैव दत्तम्।**
**अशक्तोऽधमः पापकर्मा मदान्धः**
**श्रये सीरकेतोः सुता पादमूलम्।।७३।।**

**कृपा टीका**—मैंने व्रत जप तप पूजा यज्ञ वेदाध्ययन हवन दान कुछ भी नहीं किया मैं असमर्थ अधम पाप कर्म करने वाला होकर भी जनकराज पुत्री के चरण कमल का आश्रय ले रहा हूँ।।७३।। भुजंगप्रयात छन्द।

**त्वमेवासि माता पिता त्वं हितैषी**
**सुहृत् त्वञ्च बन्धुःसखा त्वं हि वित्तम्।**
**अतस्त्वां श्रयेऽहं शरण्ये वरेण्ये**
**न हातव्य एषशिशुर्दीनहीनः।।७४।।**

**कृपा टीका**—हे भगवती आप ही मेरी माता, पिता, हितैषी, सुहृद्, भाई मित्र और धन हैं इसीलिए शरण देने में समर्थ श्रेष्ठ देवता आपको ही मैं आश्रय बनाता हूँ आप मुझ दीनहीन शिशु का त्याग न करें।।७४।। भुजंगप्रयात छन्द।

**अरुणकमलदललोचनि हे नतसुरमुनिवृन्दे।**
**सज्जनशोकविमोचनि हे कृतदामिनि निन्दे।**
**हिमकरवदनसुदशने हे विकसितमुखकञ्जे**
**रघुबरगृहिणि वदान्ये हे धृत गुण गण कुञ्जे।**
**लक्ष्मण लालित चरणे हे श्रुतिविश्रुतगीते।**
**करुणय देवि शुभं नय हे सीदति मयि सीते।**
**मारुतिमोदविवर्धिनि हे पदविलसदरण्ये।**
**शरणमितं भृगुभवमव हे मम जननि शरण्ये।।७५।।**

**कृपा टीका**—हे लाल कमल के समान नेत्रों वाली, देवता, मनुष्य, मुनि वृन्दों से पूजित हे सेवकों के संकट हरने वाली, हे शरीर की कान्ति से बिजली की

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

निंदा करने वाली, हे चन्द्रमा की किरण के समान दाँतों वाली हे चन्द्रमुखी, विकसित कमल जैसे मुख वाली, हे श्रीराम की गृहिणी, हे दानशीले, हे श्रेष्ठगुणों वाली, हे लक्ष्मण जी द्वारा सेवित चरण वाली, हे वेदों में गाये हुए दिव्य यश वाली, शरण देने में समर्थ सीते, मुझ दुखी बालक पर कृपा कीजिए, हे हनुमानजी का आनंद बढ़ाने वाली, हे श्रीचरणों से वन को सुशोभित करने वाली, मेरी माँ सीते, मुझ परशुराम की रक्षा कीजिए मैं आपकी शरण में हूँ॥७५॥ गीतक छन्द।

**जय–जय–जय जगदम्ब जनावनि, रघुपतिभामिनि सीते।**
**जय–जय जानकि भवभवभामिनि, जय–जय भावविनीते॥**
**विहरसि दुग्धमती मृदु पुलिने कुरुषे मोदप्रमोदम्।**
**साकं रसिकराजरघुपतिना तनुषे विविधविनोदम्॥**
**मिथिलोपवनसघनतृणपल्लव**
**विरचितमञ्जुलकुञ्जे**
**रमसे रामचन्द्र मुखचन्द्रे अर्पितलोचनकञ्जे**
**भृगुसुतमव हे बालवत्सले मथ मैथिलि मम कामम्।**
**विहर मदीये मानससदने सन्दर्शय श्रीरामम्॥७६॥**

**कृपा टीका**—हे भक्तों का रक्षण करने वाली श्रीरामजी की पत्नी सीता जी आपकी सदैव जय हो, भगवान शंकर का भी कल्याण करने वाले श्रीराम को प्रसन्न करने वाली जनकनंदिनी आपकी जय हो, जय हो, हे देवि आप रसिकेश्वर श्रीरामजी के साथ दूधमती के तट पर बिहार करती हैं अनेक मोद प्रमोद करती हुई विनोद का विस्तार करती हैं। हे भगवती सघन पल्लव तृण पुष्प आदि से निर्मित मिथिला के बिहार कुञ्ज में श्रीरामजी के मुख चन्द्र के प्रति नेत्र कमल को अर्पित करके उन्हीं के साथ, हे बालकों पर वात्सल्य करने वाली सीते! मुझ परशुराम की रक्षा करो। मेरे हृदय के कामविकार को नष्ट करो, मेरे हृदय भवन में विहार करो और मुझे श्रीराम के दर्शन कराओ॥७६॥ गीतक छन्द।

**अशेषसौन्दर्यविलाससम्भ्रमा**
**विभग्नभक्ताखिलभेदविभ्रमा।**
**समस्तकल्याणनिधानविग्रहा**
**चकास्ति सीता कृतदोषनिग्रहा॥७७॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—सम्पूर्ण सौन्दर्य बिलास की चेष्टाओं से युक्त तथा भक्तों के सम्पूर्ण सम्बंधनिबंधन भेद भ्रम को नष्ट करने वाली, समस्त कल्याणरूप रत्नों से सुशोभित विग्रह वाली, समस्त दोषों को नष्ट करने वाली, सीताजी अत्यन्त सुशोभित हो रही हैं।।७७।। वंशस्थ छन्द।

**अनादिकालीनकुभोगवासना**
**शनं महापापभयं मलाशनम्।**
**सुभक्तिरज्वा प्रभुपादपंकजे**
**सिनोतु सीता मम वै मनः पशुम्।।७८।।**

**कृपा टीका**—अनादिकाल की कुभोग वासना का भोजन करने वाले भय से व्याप्त मलाहारी, मेरे मन रूप पशु को सीताजी भक्ति रूप रस्सी को प्रभु श्रीराम के चरण कमल में बाँध दें।।७८।। वंशस्थ छन्द।

**भ्रमन् महाघोरभवाटवीं मनो**
**बुभुक्षितं लोभतृषा भृशं कृशम्।**
**विशीर्णसत्वं विषयस्पृशं भृशं**
**धिनोतु सीतावरभक्तिवारिणा।।७९।।**

**कृपा टीका**—संसार के वन में भ्रमण करते हुए अत्यन्त भूखे लोभ की प्यास से वहुत प्यासे आत्मबल से हीन विषयों का स्पर्श करने वाले इस मेरे मन को सीताजी भगवद्भक्ति जल से तृप्त कर दें।।७९।। वंशस्थ छन्द।

**प्रपन्नतापोपशमातपत्रितम्**
**प्रवालताम्रं नखचन्द्रदीधितिम्।**
**कुमस्तके मे कृतपापपंकिले**
**निधेहि सीते निजपाणिपल्लवम्।।८०।।**

**कृपा टीका**—हे भगवती सीते शरणागतों के ताप को नष्ट करने के लिए छत्र के समान, नवीन पल्लव के समान लाल नख मणि चन्द्रिका से युक्त ऐसा अपना कर पल्लव मेरे पापरूप कीचड़ से भरे हुए कुत्सित मस्तक पर आप रख दें।।८०।। वंशस्थ छन्द।

**भ्रमन्तमस्पृष्टसुखं सुदुर्मुखं**
**विकारजग्धं झषकेतुकिंकरम्।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जगच्छरण्ये शरणागतं हि मां
विधेहि दासं निजनाथपादयोः॥८१॥

**कृपा टीका**—जिसने सुखों का स्पर्श भी नहीं किया ऐसे विकारों द्वारा भक्षित काम के किंकर, ऐसे संसार में भटकते हुए मुझ जैसे दुर्मुख जन को जगत को शरण देने में समर्थ सीता जी आप अपने स्वामी श्रीराम के चरण कमल का दास बना लें॥८१॥ वंशस्थ छन्द।

सदापराध्यामि निरंकुशः शठो
हठी खलो दर्शितसाधुसम्भ्रमः।
तथापि मां मर्षय मैथिलात्मजे
न पुत्रदोषान् गणयन्ति मातरः॥८२॥

**कृपा टीका**—हे जनकनन्दिनी साधुसंगति न करने के कारण स्वभाव से सठ और भाव से खलप्रकृति वाला मैं निरंकुश होकर निरंतर अपराध कर रहा हूँ। फिर भी आप मुझे क्षमा करें क्योंकि आदरणीया माताएँ पुत्र के अपराध नहीं गिनतीं॥८२॥ वंशस्थ छन्द।

प्रसीद सीते कृत किल्विषे मयि
निसीद चित्ते सह राघवेण मे।
विषीद मा दृष्टमदीयकल्मषा
क्षमस्व मातर्मम बालचापलम्॥८३॥

**कृपा टीका**—हे सीते, मुझ अपराधकारी पर प्रसन्न होइये मेरे कल्मष देखकर भी दुखी मत होइये, मेरे चित्त में श्रीराघव के साथ बिराजिए और मेरी बाल चञ्चलता क्षमा कीजिए॥८३॥ वंशस्थ छन्द।

पुण्यारण्येवरेण्ये लसदवनितलात् सीरफालाग्रपूतात्
प्रादुर्भूता स्वभासा विगलिततमसा द्योतयन्ती दिगन्तम्।
सौन्दर्याढ्या सुशीला गुणगणनिलया चित्रकूटं पुनाना
चित्तम् नीता विनीता सुरगणमहिता श्रेयसे मेऽस्तु सीता॥८४॥

**कृपा टीका**—वरण करने योग्य पुण्यारण्य में पृथ्वी को पवित्र करने वाले हल के फाल के अग्रभाग से प्रकट हुई अपने प्रकाश से सारे संसार को प्रकाशित करती

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हुई सौन्दर्य से युक्त गुण गणों की मंदिर स्वरूपा चित्रकूट को पवित्र करने वाली मेरे चित्त में पधारी हुई गुण गणों से सेवित सीताजी मेरे कल्याण के लिए सदैव जागरूक रहें॥८४॥ स्रग्धरा छन्द।

**यस्याः सौन्दर्यलक्ष्मीललितलघुलसल्लोललीलाकटाक्ष**
**व्याक्षेपाक्षिप्तचित्तो रघुकुलतिलकः स्वीयलावण्यदर्पम्।**
**न्यूनंमत्वातदीयस्मितिमुखशशिनो लिप्सयाभूच्चकोरः**
**सा सीता रामभार्या निवसतु सततं मानसे मन्दिरे मे॥८५॥**

**कृपा टीका**—जिनके सौन्दर्य लक्ष्मी के अति मनोहारी शीघ्रगामिता से सुन्दर विलास कटाक्ष के साधारण प्रयोग में चित्त के आसक्त होने से रघुकुलमणि श्रीराम अपने सुन्दरता के अहंकार को छोड़कर सीताजी की मुख चन्द्र सुधा प्राप्त करने के लिए चकोर बन गये वे ही श्रीरामपत्नी सीताजी मेरे मन मंदिर में विराजमान हों॥८५॥ स्रग्धरा छन्द।

**नाहं जाने जपाख्यां न मखविधिमहो नैव योगव्रतं नो**
**नो वेदं नो पुराणं बृहदुपनिषदो गूढ़वेदान्ततत्त्वाः।**
**पापी मिथ्याप्रलापी पतितकुलमणिर्घोरतापी तथापि**
**सीतां श्रीरामभार्यां त्रिभुवनजननीं जानकीमेव जाने॥८६॥**

**कृपा टीका**—मैं जप, यज्ञविधि, योगव्रत, वेद पुराण तथा वेदान्त के गूढ़ तत्वों वाली उपनिषदों को भी नहीं जानता फिर भी घोर तापों से तप्त पापी झूठ बोलने वाला पतित शिरोमणि मैं श्रीराम पत्नी त्रिलोक माता जनकनंदिनी सीता जी को ही जानता हूँ॥८६॥ स्रग्धरा छन्द।

**रे रे चेतो मदीयं भवगहनवनेऽनादिकालादजस्रम्**
**भ्रामं भ्रामं भ्रमेण ह्रसित बलमथो नो विरामं प्रयासि।**
**छित्वा सम्मोहबन्धं विषमिव विषयं भोगभोग्यं विहाय**
**श्रीसीतापादपद्मे मधुकर इव भो सानुरागं रमस्व॥८७॥**

**कृपा टीका**—हे मेरे चित्त, अनादि काल से निरंतर संसार रूप घोर वन में भ्रमण कर करके अपने बल को समाप्त करके भी तुम अभी विश्राम नहीं पा सके इसलिए संसार के बंधन को तोड़कर विष की भाँति विषय को दूर से ही उगलकर श्री सीताजी के चरण कमल में भ्रमर की भाँति अनुरागपूर्वक रमण करो॥८७॥ स्रग्धरा छन्द।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कोऽप्युपास्तां निराकार माकारवद्ब्रह्मकोऽपि प्रपद्येत लीलामयम्।**
**मन्मनो मंदिरे किन्तु रामप्रिया राजतां राम राज्ञी सदा जानकी॥८८॥**

**कृपा टीका**—कोई निराकार की उपासना करे अथवा कोई साकार लीलामय ब्रह्म की शरण में जाये किन्तु मेरे मन मंदिर में तो श्रीराम पत्नी भगवती जानकी जी ही बिराजें॥८८॥ स्रग्विणी छन्द।

**हे हरेर्बल्लभे ज्ञानिनः दुर्लभे**
**प्रेमपीयूषभाजां हृदिस्थे सदा।**
**रक्ष मां राक्षसेभ्यो भृशं पीडितं**
**रामभद्राय मे त्वं व्यथां वर्णयेः॥८९॥**

**कृपा टीका**—हे श्रीराम की प्राण वल्लभा और ज्ञानियों के लिए भी दुर्लभ तथा प्रेमियों के हृदय में निरंतर विराजमान हे सीते राक्षसों से पीड़ित मुझ अकिंचन दास की रक्षा कीजिए और भगवान श्रीरामभद्र से मेरी व्यथा अवश्य निवेदन कीजिएगा॥८९॥ स्रग्विणी छन्द।

**कदाचित्पर्यङ्के छविजितशशाङ्के स्वरचिते**
**शयानं श्रीरामं जनदृगभिरामं विदधती।**
**द्रुतंचोक्त्वा काश्चित् करुणतम गाथा जननि मे**
**शिशुं दीनं हीनं भृगुभवमपिस्मारय शुभे॥९०॥**

**कृपा टीका**—हे माँ इसी एकान्त के क्षण में अपनी सुन्दरता से चन्द्रमा को जीतने वाले पर्यंक पर शयन किये हुए भक्तों के लोचनाभिराम भगवान श्रीराम को कुछ करुण कथाएँ कहकर पिघलाती हुई इस दीन हीन परशुराम का भी स्मरण करा दीजिएगा॥९०॥ शिखरिणी छन्द।

**अमुष्मिन् पाथोधा वमितसलिलेदुष्कृतरणे**
**निमज्जन्तं दीनं पतितपतितं मूढमनसम्।**
**निराधारं बालं गलितनयनं पापमलिनम्**
**प्रभो त्रायस्वैनं द्विजसुतमनाथं रघुपते॥९१॥**

**कृपा टीका**—हे प्रभो श्रीराम इस अगाध जल वाले संसार सागर में डूबते हुए अत्यन्त पतित, मूढ, ज्ञाननेत्र से रहित, निराधार, अनाथ ब्राह्मण परशुराम की रक्षा कीजिए॥९१॥ शिखरिणी छन्द।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तवोक्तं श्रुत्वा चेद्र रघुपतिरनाथैकशरण:**
**समालिंगेद् दोर्भ्यां पतितमपि मां दीनंहितकृत्।**
**तदाऽहम् ते भर्तुर्भुवनविदितं मंगलयशो**
**मुदागायम् गायम् सुखमिव तरेयं भवनिधे:॥९२॥**

**कृपा टीका**—यदि आपका कथन सुनकर अनाथों के एक मात्र शरण भगवान श्रीराम मुझे अपनी भुजाओं से आलिंगन करेंगे तो मैं भी आपके स्वामी श्रीराम का भुवन मंगल यश गा गाकर सुखपूर्वकसंसार सागर से तर जाऊँगा॥९२॥ शिखरिणी छन्द।

**पदं ध्यायं ध्यायं जननि तव पंकेरुह समम्**
**गुणं गायं गायं जनकतनया जीवन हरे:।**
**रसं पायं पायं तव पति चरित्रेन्दुजनितम्**
**मनोधायं धायं सुखमनुभवेयं त्वयि शुभे॥९३॥**

**कृपा टीका**—हे माँ आपके कमल जैसे चरण का बार बार ध्यान करके आपके जीवन श्रीरामजी के गुणों का निरंतर गान करके आपके पति श्रीराम के चरित्र चन्द्रमा से निर्गलित रस का पान कर कर के आपमें ही बारम्बार मन लगाकर मैं परमसुख का अनुभव करूँ॥९३॥ शिखरिणी छन्द।

**रमे रामे रम्ये कुशलवसुते राममहिषी**
**महातेजोराशे पवनजनताम्भोजचरणे।**
**अये सम्पूताग्ने दशवदनदर्पघ्नचरिते**
**विनीते श्री सीते जननि भवतापं शमय मे॥९४॥**

**कृपा टीका**—हे श्रीराम की शक्ति हे श्रीराम को हृदय में धारण करने वाली हे सुन्दरी हे कुशलव की माँ हे श्रीराम की महारानी हे परम तेजोमयी हे हनुमान जी द्वारा प्रणाम किये हुए चरण वाली हे अग्नि को पवित्र करने वाली हे रावण के अहंकार को नष्ट करने वाली चरित्र से युक्त हे विनम्र श्रीसीताजी मेरे सांसारिक ताप को नष्ट कर दीजिए॥९४॥ शिखरिणी छन्द।

**हे रामचन्द्रमुखचन्द्रचकोरि सीते**
**हे सीरकेतुकुलकैरवकौमुदीत्विद्।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हे पाद्पद्मनतसेवकशोकहन्त्रि
मातर्मपापिदुरितं हर हेमशोभे।।९५।।

यहाँ से वसन्ततिलका छन्द है।

**कृपा टीका**—हे श्रीरामचन्द्र के मुखचन्द्र की चकोरी हे जनकवंशरूप कैरवों के लिए चद्रिका के समान शोभा वाली हे चरण शरणागतों के शोक को नष्ट करने वाली भगवती सीता माँ, हे सुवर्णाङ्गि मेरे भी दुरित को नष्ट करो।।९५।। वसन्ततिलका छन्द।

ज्ञातं मया बुधजनात्तवभर्तृराज्ये
दारिद्र्यवान् न सभयो निरयी न कोऽपि।
किन्तु त्वदीयपतिजन्मसुवत्सलक्ष्म
पादाब्जगोत्रभवकोऽहमहो विषण्णः।।९६।।

**कृपा टीका**—मैंने विद्वानों से सुना है कि आपके पति श्रीराम के राज्य में कोई भी व्यक्ति दरिद्र भयभीत या नरकगामी नहीं होता है किन्तु आपके ही पति श्रीराम के अंश नारायण के वक्ष के अलंकार बने हुए चरण वाले भृगु के वंश में उत्पन्न मैं परशुराम बहुत ही दुःखी हूँ अर्थात् गणेश जी के दन्तभंग की घटना मुझे बार बार दुःखी कर रही है।।९६।। वसन्ततिलका छन्द।

जनकनृपसुते त्वं भामिनी लोकभर्तुः
सुविदितकरुणा ते राघवींचातिशेते।
मयि विगलितनेत्रे कारुणी किन्न जाता
निजकृतपरिपाकं देवि भुञ्जेऽधुनापि।।९७।।

**कृपा टीका**—हे जनकराज कन्ये आप लोकनाथ श्रीराम की पत्नी हैं। आपकी करुणा श्रीराम की करुणा से भी अधिक है फिर भी ज्ञान नेत्र हीन मुझ परशुराम पर आपकी करुणा क्यों नहीं हुई आज भी अपने किये कर्म का फल भोग रहा हूँ।।९७।। मालिनी छन्द।

भगवति भवदीयं पादपद्मं निषेव्य
सकलसुबलमौलिर्भक्तिवर्यो हनूमान्।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**निजवशमपिचक्रे रामभद्रं ममापि**
**हर जननि दुरन्तां वेदनां वेदवेद्ये।।९८।**

**कृपा टीका**—हे वेद द्वारा जानने योग्य भगवती सीते आपके श्रीचरणकमल की सेवा करके पूर्वकल्प में वीरशिरोमणि भक्तवर्य हनूमान जी ने श्रीराम को भी अपने वश में कर लिया था। इसलिए हे माँ मेरी दुरन्त वेदना को समाप्त कीजिए।।९८।। मालिनी छन्द।

**शमय मम भवाधिं राघवं दर्शय त्वं**
**रमय पतिपदाब्जे चंचलं चित्तभृंगम्।**
**मम हृदयनिकुञ्जे रामचन्द्रेण साकं**
**विहर जननि सीते नीरदेनेवशम्पा।।९९।।**

**कृपा टीका**—हे भगवती मेरी मनोव्यथा को समाप्त कर दीजिए, मेरे चञ्चल मनमधुप को अपने पति श्रीराम के चरण कमल में रमा दीजिए, मेरे हृदय रूप निकुञ्ज में बादल के साथ विद्युत की भाँति भगवान श्रीराम के साथ निरंतर विहार कीजिए।।९९।। मालिनी छन्द।

**इत्थं निवेद्य वरवर्षयुगेड्यवृत्तैः**
**सैरध्वजीचरणपंकजलब्धभक्तिः।**
**स्तोत्रं मुदा परशुराम उदारवृत्तां**
**सीतां प्रणम्य समगात् कुधरारिशैलम्।।१००।।**

**कृपा टीका**—इस प्रकार ९९ श्लोकों से स्तुति करके श्रीसीताजी के चरणों में दिव्यभक्ति प्राप्त करके उदार चरित्र वाली सीताजी को प्रणाम करके परशुराम जी प्रसन्नतापूर्वक महेन्द्रपर्वत को प्रस्थान कर गये।।१००।। वसन्ततिलका छन्द।

**इत्थं शुभे भार्गवराघवीये भव्ये महाकाव्य उदारवृत्ते।**
**सर्गः श्रुतीशः कविरामभद्राचार्यप्रणीते भवताच्छ्रियै नः।।१०१।।**

**कृपा टीका**—इस प्रकार कल्याणकारी उदारछन्दों में प्रस्तुत भव्य महाकवि रामभद्राचार्य द्वारा विरचित भार्गवराघवीयम् महाकाव्य में प्रस्तुत यह चतुर्दश सर्ग हम लोगों की प्रपत्ति सम्पत्ति श्री के लिए जागरूक रहे।।१०१।। उपजाति छन्द।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामि रामभद्राचार्यप्रणीते श्रीभार्गवराघवीये महाकाव्ये "श्रीसीतास्तवनं" नाम चतुर्दशः सर्गः।

॥श्रीराघवः शन्तनोतु॥

इस प्रकार धर्मचक्रवर्ती जगद्गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य द्वारा विरचित श्रीभार्गवराघवीय नामक महाकाव्य में 'श्रीसीतास्तवन' नामक चौदहवाँ सर्ग सम्पन्न हुआ॥

॥श्रीराघवः शन्तनोतु॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीमद्राघवो विजयते ॥

# अथ पञ्चदशः सर्गः

**भार्गवे सुरपशैलमुपेते भक्तिनम्रशिरशेडितसीते।**
**सीतया तदनुक्लृप्तसमर्चे पूजिते त्रिदशकिन्नरनागैः॥१॥**

**कृपा टीका**—यह सर्ग प्रायशः स्वागता वृत्त में निबद्ध हैं। इस प्रकार पूर्व सर्ग में भक्ति से विनम्र मस्तक में परशुराम जी द्वारा भगवती सीताजी की स्तुति किये जाने के पश्चात् सीताजी के द्वारा भी परशुराम जी की षोडशोपचार से पूजा सम्पन्न किये जाने पर देव किन्नर नागों द्वारा सम्मानित होकर परशुराम जी महाराज के महेन्द्र पर्वत पर पधार जाने के अनन्तर भगवती सीताजी भी मिथिला राजभवन पधार गयीं॥१॥ इस सर्ग में प्रायशः स्वागता छन्द है।

**पार्थिवी परिवृता सुसखीभिर्वन्द्यमानचरणा सुरवृन्दैः।**
**आययौ पितृगृहं मुदितास्या दिव्यदेवयजनादिव लक्ष्मीः॥२॥**

**कृपा टीका**—देवताओं द्वारा पूजित श्रीचरणों वाली, पृथ्वी पुत्री भगवती श्रीसीता जी प्रसन्न मुख से अपनी सखियों के साथ, यज्ञस्थल से शरीरधारी महालक्ष्मी की भाँति पिताश्री के राजभवन लौट आयीं॥२॥

**रामचन्द्रमुखचन्द्रचकोरी मन्दिरे जनकराजकिशोरी।**
**रुपदीपशिखयाखिललोकदीपिकेव नृपतेः प्रदिदीपे॥३॥**

**कृपा टीका**—श्रीरामचन्द्र के मुखचन्द्र की चकोरी जनकराजपुत्री सीता जी रुपदीपशिखा से युक्त होकर समस्त संसार की दीपिका के समान महाराज जनक के मंदिर में प्रदीप्त होने लगीं अर्थात् स्वयं दीपमाला की भाँति प्रकाशित होती हुईं राजभवन को प्रकाशमान बनाने लगीं॥३॥

**मैथिलोऽपि गृहमेत्य गृहस्थः श्रीस्वयंवरसमाकुलचित्तः।**
**मन्त्रिमण्डलपुरोहितमध्येऽमंत्रयन् मथितशत्रुविकारः॥४॥**

**कृपा टीका**—भीतरी कामादि विकाररूप शत्रुओं तथा बाहरी नास्तिक वेद विरुद्ध

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

राजशत्रुओं को नष्ट करने वाले, गृहस्थाश्रमधर्म में निष्ठा करने वाले, महाराज जनक अपने घर आकर सीताजी के स्वयंवर के लिए व्याकुल चित्त से मन्त्रिमण्डल और पुरोहितों के मध्य मंत्रणा करने लगे।।४।।

**ऊर्ज ईड्य शशिशोभितराकाराजिते रजतरोचिषि राजा।**
**श्रीस्वयंवरदिनं स्वसुतायाः निश्चिकाय कमनीयकलायाः।।५।।**

**कृपा टीका**—महाराज जनक जी ने चन्द्रमा की चन्द्रिका जैसे शुभ्र कार्तिक की पूर्णिमा जिसमें पूर्ण कलाओं के साथ चन्द्रमा सुशोभित थे। उसी तिथि को सुन्दर कलाओं से सम्पन्न अपनी पुत्री सीता जी के स्वयंवर का दिन निश्चित किया।।५।।

**योऽपि कोऽपि शिवचापमधिज्यं तोलयेच्छकलयेत् किल मध्यात्।**
**जानकीं स कलयेज्जयमालालब्धलक्ष्मविभवो गृहलक्ष्मीम्।।६।।**

**कृपा टीका**—तीनो लोकों में जो कोई भी शिव धनुष को उठाकर उसे मध्य से दो टूक करके तोड़ देगा, वही जयमाला की प्राप्ति के लक्षण वैभव से युक्त होकर जानकी जी को अपनी गृहलक्ष्मी रूप में प्राप्त कर सकेगा।।६।।

**शम्भुचापमभिभज्य भुजाभ्यां दर्शयेज्जनकसंसदि शक्तिम्।**
**आदिशक्तिरपितं जयमालाश्रीविभूषितगलं विदधीत।।७।।**

**कृपा टीका**—जो भी दोनों हाथों से प्रत्यञ्चा चढ़ाकर शिव धनुष को तोड़कर जनकराज की सभा में अपनी शक्ति का प्रदर्शन कर देगा। आदिशक्ति सीता जी भी उसी का कंठ जयमाला की शोभा से अलंकृत कर देंगी।।७।।

**इत्यनेन समघोषि धरायां द्वीपसप्तकसमुद्रभरायाम्।**
**स्वर्गपन्नगभुवोश्च सुतायास्तत्स्वयंवरमुदन्तमपूर्वम्।।८।।**

**कृपा टीका**—इस प्रकार घोषणा वाक्य के साथ महाराज जनक ने सातों द्वीपों और सागरों से पूर्ण सम्पूर्ण पृथ्वी में और स्वर्ग तथा पाताल में भी अपनी पुत्रीसीताजी के स्वयम्वर के अपूर्व वृत्तान्त की घोषणा कर दी।।८।।

**देवदैत्यनरकिन्नरनागाः श्रीस्वयंवरनिरूपितभागाः।**
**आययुश्च मिथिलां विहिताशाः सिन्धुमन्थ इव तेऽबहुपुण्याः।।९।।**

**कृपा टीका**—जिस प्रकार समुद्र मंथन के समय लक्ष्मी जी की प्राप्ति के प्रति देवता, दानव, किन्नर, नाग वहाँ उपस्थित हुए थे। उसी प्रकार वे सभी देव,

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दैत्य, मनुष्य, किन्नर, नागगण सीताजी के स्वयंवर में ही अपने भाग्य का निरुपण करने के लिए मिथिला पुरी आये। यद्यपि इनके पास बहुत पुण्य नहीं था कि जिससे वे सीताजी को प्राप्त कर पाते॥९॥

**तत्र तत्र सुभटा उपकार्या आवसन् जनकराजनिदिष्टाः।**
**सैंहिकेय इव तेस्पृह्यन्तः श्रीकरग्रहणसौख्यसुधायै॥१०॥**

**कृपा टीका**—राहु की भाँति सीता जी के पाणिग्रहण जनित आनंदरूप सुधा के लिए निरर्थक स्पृहा करते हुए स्वयम्वर में आये हुए वीर राजागण जनकराज द्वारा संकेतित भिन्न भिन्न स्थानों में बने हुए शिविरों में ठहरे॥१०॥

**राघवोऽपि नवकन्दशरीरः कोसलेन्द्रसदनेश्रितधीरः।**
**वर्धते स्म महितो जननीनां स्नेहसान्द्रसुधयेव सुरद्रुः॥११॥**

**कृपा टीका**—नीले बादल के समान श्रीविग्रह वाले धीर जनों से सेवित प्रभु श्रीराम भी माताओं के स्नेह की घनीभूत सुधा से सिञ्चित होते हुए महाराज दशरथ के भवन में कल्पवृक्ष की भाँति बढ़ने लगे॥११॥

**काकपक्षकलितो वनमाली पुण्ड्रधृक्कनककुण्डलशाली।**
**कीरतुण्डसमम‍ञ्जुलनासः कामकार्मुकसमभ्रुविलासः॥१२॥**

**कृपा टीका**—श्रीराघव सरकार के सिर पर काक पक्ष तथा कण्ठ में चरण लम्बिनी वनमाला विराज रही थी। उनके मस्तक पर ऊर्ध्व पुण्ड्र तथा कानों में स्वर्ण कुण्डल विराज रहा था। उनकी नासिका तोते की चोंच के समान तथा उनके भौंहों का विलास कामदेव के धनुष के समान था॥१२॥

**पूर्णचन्द्रसुषमाननशोभो मन्दहासमुनिमानसलोभः।**
**पल्लवाधरपुटाधिनिवासकुन्दकुड्मलसमद्विजपंक्तिः ॥१३॥**

**कृपा टीका**—श्रीराघव के मुख की शोभा पूर्णचन्द्र के समान थी उनकी मन्द मुस्कान पर मुनियों का मन भी लुब्ध हो जाता था, उनके अरुण अधर में से चमकते हुए दाँत ऐसे प्रतीत हो रहे थे मानो आम्रपल्लव के दोने में कुन्दपुष्प की कलियाँ विराज रही हैं॥१३॥

**पीतवस्त्रमखसूत्रमनोज्ञः कण्ठसक्ततुलसीवनमालः।**
**चन्दनच्छुरितनीलशरीरः कोटिकामसुषमो रणधीरः॥१४॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—श्रीराघव पीताम्बर एवं यज्ञोपवीत से बहुत सुन्दर लग रहे थे। उनके श्रीकंठ में तुलसीमाला विराज रही थीं। उनका नील श्रीविग्रह चंदन की खोर से सुशोभित और उन पर करोड़ों कामदेवों की शोभा विराज रही थी। वह युद्ध कला में अत्यन्त धीर थे॥१४॥

**पद्मपाणिधृतसायकचापस्तूणधृक्तपनकोटिप्रतापः ।**
**बालकेलिकृतकेलिकलापः शान्तमूर्तिहृतसज्जनतापः॥१५॥**

**कृपा टीका**—उनके श्रीहस्तकमल में धनुष बाण शोभित थे। वे तरकस धारण किये हुए, तथा करोड़ों सूर्यों की भाँति उनका प्रताप था, अपनी बालसुलभ चेष्टा से वे अनेक क्रीड़ाएँ किया करते थे, उनकी मूर्ति शान्त थी तथा वे भक्तों के तीनों ताप दूर कर रहे थे॥१५॥

**रूपवित्तविफलीकृतमारं मन्मथारिमृदुमानसहारम्।**
**हारिणं दशरथस्य कुमारं रामभद्रमतिसीसुकुमारम्॥१६॥**

**कृपा टीका**—इस प्रकार अपने रूप की सम्पत्ति से कामदेव को भी विफल करने वाले, भगवान शंकर के भी मधुर चित्त को चुराने वाले, हृदय पर हार धारण किये हुए, तीसी के फूल के समान सुन्दर, दशरथ राजकुमार श्रीरामभद्र सुशोभित हो रहे थे॥१६॥

**राघवञ्च रघुराजकिशोरं विश्वविश्वजनलोचनचोरम्।**
**मञ्जुमप्यसुरवृन्दकठोरं श्रीमुखेन्दुकृतनेत्रचकोरम्॥१७॥**

**कृपा टीका**—सीताजी के मुख चन्द्र के लिए चकोर बने हुए नेत्र वाले कोमल होने पर भी असुर वृन्द के लिए कठोर, सम्पूर्ण संसार के लोगों के नयनों को चुराने वाले, दशरथ राजकिशोर श्रीराघव सरकार शोभायमान हो रहे थे॥१७॥

**तं दृगुत्सवमवेक्ष्य जनानां पौरपान्थनयनामृतराशिम्।**
**बालवृद्धवनितामुदितास्याः सं विलोक्य न ययुर्हृदि तृप्तिम्॥१८॥**

**कृपा टीका**—ऐसे दर्शकों के नेत्रों के उत्सव रूप नागरिकों एवं पथिकों के नेत्रों के लिए अमृत राशि रूप श्रीराम जी को पूर्ण रूप से निहार कर भी प्रसन्न मुख वाले श्रीअवध के बाल वृद्ध वनिता जन हृदय में तृप्त नहीं होते थे॥१८॥

**चक्रवर्तिवरलोचनतारं भानुजाजठरसोममुदारम्।**
**वीक्ष्य पौरवनितारघुचन्द्रं मेनिरे कुसुमसायकमग्र्यम्॥१९॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—चक्रवर्ती जी के नेत्रों के तारे तथा कौसल्या जी के गर्भरूप क्षीर सागर से प्रकट हुए पूर्ण चन्द्र उदार रघुचन्द्र श्रीराम को निहारकर नगर की नारियों ने उन्हें श्रेष्ठ कामदेव ही समझा॥१९॥

**वीक्ष्य तं दशरथोऽपि गवाक्षाद्राममाप्तधनुषं सुकिशोरम्।**
**नेत्रलाभमनघं लभमानो भूपतिश्च सुविचारपरोऽभूत्॥२०॥**

**कृपा टीका**—इस प्रकार हाथमें धनुष बाण लिये हुए किशोरावस्था प्राप्त निष्पाप प्रभु राम को खिड़की से देखकर नेत्रों का अमोघ लाभ लूटते हुए महाराज दशरथ भी प्रभु के विवाह के संबंध में सुन्दर विचार करने लगे॥२०॥

**एष नीलनलिनाभशरीरो राघवश्चरणकिङ्करधीरः।**
**कोटिकामसुषमो रघुवीरः किल्ललामललनाख्यमुपेयात्॥२१॥**

**कृपा टीका**—अरे नीले कमल के समान श्रीविग्रह वाले धीरजन जिनके चरणों की सेवा करते हैं ऐसे कोटि कोटि कामदेवों से भी अधिक सुन्दर ये रघुवीर श्रीराघव किस नारी रत्न को प्राप्त होंगे॥२१॥

**एतदाननसुधाकरसोमं का पिबेदहह भूतलनारी।**
**नूनमब्धि भव कौस्तुभकान्तं सिन्धुजैव हरिमर्हति नान्या॥२२॥**

**कृपा टीका**—अहह, इन मेरे राघव के मुखचन्द्र का अमृतपान पृथ्वी की कौन नारी कर सकती है निश्चित ही क्षीर सागर से उत्पन्न कौस्तुभ मणि से सुन्दर लगने वाले श्रीहरि को तो क्षीरसागर से प्रकट लक्ष्मी जी ही प्राप्त कर सकती हैं॥२२॥

**एवमादि बहुशो रघुराजोऽचिन्तयन् मनसि राम विवाहम्।**
**तावदेव कुशिकान्वयकेतुर्यष्टुमैच्छदनघा हि सदीज्या॥२३॥**

**कृपा टीका**—इस प्रकार महाराज दशरथ श्रीराम जी के विवाह के प्रति मन में बहुत विचारणा कर ही रहे थे कि तब तक कुशिक वंश के ध्वज स्वरूप विश्वामित्र जी ने यज्ञ करने की इच्छा कर ली क्योंकि सन्तों के यज्ञ में कोई पाप नहीं होता वे सब कुछ जगत्कल्याणार्थ करते हैं॥२३॥

**ताटकापि सह दुष्टसुताभ्यामभ्यवर्षदनघां मखवेदीम्।**
**मांसशोणितकपूयपदार्थैर्यज्ञविघ्न कुशला हि खलास्ते॥२४॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—इधर अपने दो पुत्र मारीच–सुबाहु के साथ ताड़का राक्षसी मांस, आदि दुर्गंध अपवित्र पदार्थों की निष्पाप यज्ञ वेदिका पर वर्षा करती थी क्योंकि खल, विघ्न करने में कुशल होते ही हैं।।२४।।

**यत्र यत्र निजयज्ञविधानं कर्तुमैच्छदथ गाधिसुतोसौ।**
**तत्र तत्र खलसैन्यसहाया राक्षसी स्म तुदति व्रतनिष्ठम्।।२५।।**

**कृपा टीका**—जहाँ जहाँ कुशिकनंदन विश्वामित्र जी यज्ञ विधान करते वहीं वहीं राक्षसी ताटका अपने सैनिकों और सहायकों के साथ व्रतनिष्ठ विश्वामित्र जी को सताती थी।।२५।।

**गाधिसूनुरथशीघ्रमयोध्यां यज्ञनाशकविनाशकृतेच्छः।**
**चिन्तयन्नगमदम्बुजनाभं चक्रवर्तिजमधोक्षजमेकम्।।२६।।**

**कृपा टीका**—इसके अनंतर कमलनाथ इन्द्रिय विषयों को तिरस्कृत करने वाले विष्णु के भी आनंददाता भगवान श्रीराम का चिंतन करते हुए यज्ञ के नाशक राक्षसों के विनाश की इच्छा से दशरथ नंदन श्रीरामलला को मांगने के लिए अतिशीघ्र श्रीअयोध्या पधारे।।२६।।

**भक्तिभूमिमधिभूमिविशिष्टाद्वैतमेकमनवद्यमखण्डम्।**
**लब्धदिव्यनृपबालकरूपं भग्नभक्तभवभीषणकूपम्।।२७।।**

**कृपा टीका**—जिस पृथ्वी पर भक्ति के आधार विशिष्टाद्वैत स्वरूप सबके मूल कारण निंदा रहित अखण्ड एवं दिव्य राजकुमार के रूप में विराजमान और भक्तों के भयंकर संसार कूप को नष्ट करने वाले श्रीराम का विश्वामित्र चिन्तन कर रहे थे।।२७।।

**भक्तभाववशगं भगवन्तं माययामनुजमञ्जुशरीरम्।**
**न्यस्तहेयगुणकं त्रिगुणातो दूरमीड्यशुभसद्गुणसिन्धुम्।।२८।।**

**कृपा टीका**—भक्त के भाव का अनुसरण करने वाले, भगवान अपनी लीला से सुन्दर मनुष्य शरीर धारण किये हुए हेय गुणों से रहित, माया से दूर, प्रशस्त कल्याण गुणों के महासागर श्रीराम का विश्वामित्र चिन्तन कर रहे थे।।२८।।

**विश्वजन्मभरणाप्ययहेतुं स्वप्रपन्नभवसागरसेतुम्।**
**राघवं दिनकरान्वयकेतुं भक्तभावमवतीर्णमुपेतुम्।।२९।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—संसार के जन्म, पालन और संहार के हेतु और अपने शरणागतों के लिए संसार सागर के सेतु स्वरूप सूर्य कुल की पताका, भक्ति की भाव भूमि पर अवतीर्ण, ऐसे प्रभु का समीप से साक्षात्कार करने के लिए विश्वामित्र जी अयोध्या पधारे॥२९॥

**कामचारुतरुमात्मजनानां कामधेनुमुदजांघ्रिजुषाञ्च।**
**कामरत्नमपि चिन्तयतां तं कामकोटिसुषमं रघुचन्द्रम्॥३०॥**

**कृपा टीका**—आत्मीय जनों के लिए कल्पवृक्ष के समान चरण कमलों के सेवकों के लिए कामधेनु स्वरुप एवम् अपने चिन्तकों के लिए चिन्तामणि के समान ऐसे करोड़ों कामदेवों से भी अधिक सुन्दर प्रभुका साक्षात् करने के लिए विश्वामित्र अयोध्या आये॥३०॥

**द्वास्थितं प्रणिनिशभ्य स विश्वामित्रमित्रमवितुंरघुचन्द्रम्।**
**अन्तरङ्गकृतहर्षतरङ्गो दर्शसिन्धुसमतां च नृपोऽगात्॥३१॥**

**कृपा टीका**—महाराज दशरथ विश्वामित्र रूप सूर्य को श्रीरामरूप चन्द्र से मिलाने के लिए द्वार पर विराजमान सुनकर अपने हर्षरूप तरंग को अन्तरंग में ही समेटते हुए अमावस्या के समुद्र की तुलना को प्राप्त हो गये॥३१॥

**भक्तितो दशरथोमधुपर्की तं मुनिं समभिवन्द्य स विप्रः।**
**स्वंनिनाय नृपतिर्निजगेहं पूज्यपूजनममोघफलं हि॥३२॥**

**कृपा टीका**—महाराज दशरथ मधुपर्क लेकर ब्राह्मणों के साथ भक्तिपूर्वक विश्वामित्र को प्रणाम करके उन्हें ससम्मान राजभवन ले आये क्योंकि पूजनीय की पूजा अमोघ फल वाली होती है॥३२॥

**भुक्तवत्यथ मुनाववनीशो रामभद्रमनुजैः सह भक्त्या।**
**गाधिसूनुपदपङ्कजयुग्मेऽपातयत् पतितपावनकीर्तिम्॥३३॥**

**कृपा टीका**—महर्षि विश्वामित्र जी के भोजन कर लेने पर महाराज दशरथ जी ने भक्तिपूर्वक छोटे भाइयों सहित पतितपावन कीर्ति वाले श्रीरामभद्र को विश्वामित्र के चरणपंकज में डाल दिया॥३३॥

**राममिन्द्रमणिनीलशरीरं मन्मथारिहृदयालयहीरम्।**
**सर्वलोकजनुषामभिरामं वीक्ष्य विस्मितइवास्त मुनीशः॥३४॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—मरकत मणि के समान शरीर वाले भगवान शंकर के हृदय भवन के हीरे, सम्पूर्ण प्राणियों के आनंद देने वाले भगवान श्रीराम को निहारकर महर्षि विश्वामित्र विस्मित से रह गये॥३४॥

**रुपसिन्धुरथवा सुमधन्वा मूर्तिमान् किमुत एष रसेशः।**
**चन्द्रमाः किमुत भानुसुताब्धेर्योगिनेति बहुधा समतर्कि॥३५॥**

**कृपा टीका**—अरे क्या यह रूप का महासागर है या पुष्प धनुष वाला कामदेव अथवा मूर्तिधारी शृंगार रस अथवा कौसल्या जी की कोख रूप क्षीर सागर से प्रगट चन्द्रमा है। इस प्रकार योगी विश्वामित्र जी ने भगवान राम के प्रति बहुत प्रकार की उत्प्रेक्षाएँ कीं॥३५॥

**पृष्टमागमनहेतुमथासौ कौशिकोदशरथेन सुहृष्टः।**
**तं जगाद वचनं च निजार्थं नो बुधोऽवसरमेत्य जहाति॥३६॥**

**कृपा टीका**—इसके अनंतर आगमन का हेतु पूछे जाने पर महर्षि विश्वामित्र ने महाराज दशरथ से अर्थ पूर्ण वाक्य कहा क्योंकि विद्वान् अवसर पाकर कभी नहीं चूकता॥३६॥

**धन्य धन्यमनघञ्च रघूणां सत्कुलं विमलमाप्तमहस्कम्।**
**यस्य गायति भगीरथपुत्री विश्वविश्रुत यशस्त्रिजगत्याम्॥३७॥**

**कृपा टीका**—अहो यह रघुकुल विमल तेज से युक्त और अत्यन्त धन्य है। जिसके संसार प्रसिद्ध यश को श्रीगंगाजी तीनों लोकों में गा रही हैं॥३७॥

**यत्र भो दशरथस्त्वमथाभूर्भूमिपालमहिताङ्घ्रिसरोजः।**
**नाकपालकनकासननेमभागभाजममराः प्रणिनेमुः॥३८॥**

**कृपा टीका**—जिस कुल में सभी राजाओं द्वारा पूजित चरण कमल आपश्री महाराज दशरथ उत्पन्न हुए, स्वर्ग में इन्द्र के सिंहासन के अर्धभाग में विराजमान आप श्री को देवताओं ने भी साष्टांग प्रणाम किया॥३८॥

**त्वं महीश यशसा मनुमाद्यं कस्य पञ्चगुणतो ह्यतिशेषे।**
**यत्सुतोऽथ भगवान्परमात्मा लोकलोचनशुचं परिमार्ष्टि॥३९॥**

**कृपा टीका**—हे महाराज आप अपने यश से आद्य स्वायम्भुवमनु और महर्षिकश्यप को भी पीछे छोड़ चुके हैं जिन आपके पुत्र रूप में परमात्मा भगवान श्रीराम संसार के नेत्रों का शोक दूर कर रहे हैं॥३९॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रक्षसामथगणोतितरां मां क्लेशयत्यवनिपाल बलाढ्यः।
पद्मपत्रमिव पौषतुषारस्त्वामितोस्मि भयतो नृपभिक्षुः।।४०।।

**कृपा टीका**—हे महाराज जिस प्रकार कमलपत्र को पौषमास का पाला सुखा देता है उसी प्रकार राक्षसों का बलवान समूह मुझे बहुत कष्ट दे रहा है इसलिये आपसे भिक्षा मांगने आया हूँ।।४०।।

श्यामतामरसदामशरीरं देहकान्तिजितयामुननीरम्।
लक्ष्मणेन सहितं रणधीरं देहि मे नरपते रघुवीरम्।।४१।।

**कृपा टीका**—हे महाराज नीले कमल की माला के समान छरहरे शरीर वाले अपने शरीर की कान्ति से यमुना जी के जल को जीतने वाले रणधीर रघुवीर श्रीराम को लक्ष्मण जी के साथ मुझे दी दीजिए।।४१।।

ताटकाञ्च ससुतां विनिहन्तुं राम एव रणमूर्ध्नि समर्थः।
अन्तरेण गरुडं क्षमते को भीमभोगभुजगाबलिमत्तुम्।।४२।।

**कृपा टीका**—हे महाराज, उसके दोनों पुत्रों सहित ताटका को रणभूमि में श्रीराम ही मार सकते हैं भला बताइये गरुड़देव के बिना भयंकर फण वाले सर्पों को समाप्त करने में कौन समर्थ हो सकता है?।।४२।।

पूर्णतां व्रजतु मे व्रतचर्या राक्षसाः प्रभुशरेण म्रियन्ताम्।
त्वद्यशो भवतु सर्वदिगन्ते दीयतां सपदि मे रघुनाथः।।४३।।

**कृपा टीका**—हे महाराज मेरे व्रत की विधि पूर्णता को प्राप्त हो, प्रभु श्रीराम के वाणों से राक्षस शीघ्र मर जाएँ, आपका यश सारी दिशाओं में फैल जाए इसलिए आप मुझे शीघ्र ही रघुनाथ जी को दे दीजिए।।४३।।

इत्युदीरितगिरं गिरिजेश तेजसं कुशिकनन्दनमेत्य।
मूर्छितः क्षितिपतिः क्षितिमागात् पारिजात इव मारुतनुन्नः।।४४।।

**कृपा टीका**—इस प्रकार याचना किये हुए भगवान शंकर के समान तेजस्वी विश्वामित्र को देखकर महाराज दशरथ वायु से झकझोरे हुए कल्प वृक्ष की भाँति मूर्छित होकर पृथ्वी पर गिर पड़े।।४४।।

यत्नतश्च समवापितसंज्ञो वाष्पबिन्दुकलुषीकृतनेत्रः।
ऊचिवान् दशरथो मुनिराजं प्रेमविह्वलमना भयभीतः।।४५।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—अनेक प्रयासों के पश्चात् चेतना प्राप्त करके आँसुओं के कारण धुँधली दृष्टि वाले महाराज दशरथ भयभीत होकर प्रेम से व्याकुल मन से विश्वामित्र के प्रति बोले॥४५॥

**किं ददामि भगवन् रघुचन्द्रं प्राणतः प्रियमनाप्त महास्त्रम्।**
**रक्षसाञ्च समरे शिशुरूपं हस्तिनामिव करे मृदुपद्मम्॥४६॥**

**कृपा टीका**—हे भगवन् अपने प्राणों से भी प्यारे दिव्यास्त्रों की शिक्षा से रहित श्रीराम को हाथियों के समूह में कोमल कमल की भाँति, राक्षसों के साथ युद्ध करने के लिए आप को कैसे सौंप दूँ॥४६॥

**सेनया सह शरासनपाणिः योत्स्य एष रजनीचरमुख्यैः।**
**किन्तु नीलजलदाभशरीरो नीयतां नहि मुने मम रामः॥४७॥**

**कृपा टीका**—हे मुनीश्वर मैं धनुष लेकर सेना के साथ स्वयं राक्षसों के साथ युद्ध करुँगा किन्तु नीले बादल के समान सुन्दर मेरे राघव को आप न ले जाएँ॥४७॥

**गृह्यतां द्रविणवाजि गजादि स्थीयतां ऋषिपते निजसत्त्वे।**
**हीयतामहह घोर हठोऽयं नीयतां न मम लोचनतारः॥४८॥**

**कृपा टीका**—हे महाराज आप धन, हाथी, घोड़े सब ले लीजिए, हे ऋषिवर्य अपने स्वभाव में स्थित हो जाइये। अहह, अपना यह हठ छोड़ दीजिए और मेरे आँखों के तारे श्रीराम को न ले जाइये॥४८॥

**किं फणी मणिमपेत्य ध्रियेत किं झषोऽपि सुखितो वनहीनः।**
**आत्मनाथरहितः किमुदेहः किं भवेद्दशरथो हरि शून्यः॥४९॥**

**कृपा टीका**—हे भगवन् क्या मणि को छोड़कर सर्प जीवित रह सकता है, क्या जल के बिना मछली सुखी हो सकता है, क्या आत्मा के बिना शरीर रह सकता है उसी प्रकार क्या श्रीराम के बिना दशरथ का जीवन सम्भव है॥४९॥

**एवमादिकरुणं प्रविलप्य बाष्प गद्गदगलः स गवीशः।**
**रामचन्द्रविरहातुरचेताः कौशिकाब्जचरणे निपपात॥५०॥**

**कृपा टीका**—इस प्रकार श्रीरामचन्द्र जी के विरह से विकल चित्त श्रीदशरथ जी नाना भाँति विलाप करके आँसू के कारण गद्गद कण्ठ होकर विश्वामित्र के चरणकमल पर गिर पड़े॥५०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**इत्थमश्रुनयनं विलपन्तं रामभद्रविरहं ह्यसहिष्णुम्।**
**गाधवारि झषराजमिवार्तं सान्वयन् वचनमाह वसिष्ठः॥५१॥**

**कृपा टीका**—इस प्रकार अल्पजल में तड़फते हुए मछली की भाँति भगवोन श्रीरामभद्र का वियोग सहन न करते हुए अश्रुपूर्ण नयन से अत्यन्त करुण विलाप करते हुए चक्रवर्ती दशरथ जी को सान्त्वना देते हुए महर्षि वसिष्ठ जी ने यह वाक्य कहा॥५१॥

**किम् जिहाससि सुधामिव शक्रः सार्वभौम इव भूमिमकण्टाम्।**
**जीवनीमुपगतामिव जीवः स्वां प्रतिश्रुतिमहो रघुराज॥५२॥**

**कृपा टीका**—हे रघुवंशी राजा दशरथ, अमृत को इन्द्र की भाँति निष्कण्टक पृथ्वी को छत्रपति सम्राट् की भाँति अपने समीप प्राप्त संजीवनी शक्ति को जीव की भाँति अपनी ही की हुई प्रतिज्ञा तुम क्यों छोड़ रहे हो॥५२॥

**प्राकृतं त्वमवगच्छसि रामं स्वात्मजं दशरथोत्पलनीलम्।**
**अच्युतं चिदचिदात्मकमीशं व्यापकं भुवनकोटिनिधानम्॥५३॥**

**कृपा टीका**—हे महाराज दशरथ, तुम अच्युत चिदचिद्विशिष्ट अद्वैततत्त्व, करोड़ों ब्रह्माण्डों के आश्रय, सर्वव्यापक ईश्वर, नीलकमल के समान सुन्दर श्रीराम को साधारण पुत्र समझ रहे हो॥५३॥

**गोसुरद्विजगवांहितहेतोर्मायायाधृतमनुष्यशरीरम् ।**
**पुत्रवत्सलतया न हरिं त्वं वेत्सि हीरकमिवाश्मकबुद्धिः॥५४॥**

**कृपा टीका**—हे महाराज गौ, देवता, ब्राह्मण, पृथ्वी के कल्याण के लिए अपनी लीला से मनुष्य शरीर धारण किये हुए श्री हरि को तुम पुत्र वात्सल्य के कारण अपने गले में पड़े हुए हीरे को कौड़ी समझने वाले सामान्य ग्रामीण व्यक्ति की भाँति नहीं पहचान पा रहे हो॥५४॥

**याचते स्वधनमेव मुनिस्त्वां रामनामनिहितं तव कोशे।**
**कोसलेश दिशराममुष्मै सर्गमेव तनुते हि विसर्गः॥५५॥**

**कृपा टीका**—हे कोसलेश विश्वामित्र तो तुम्हारे कोष में रखे हुए रामनामक अपना धन ही तो तुमसे माँग रहे हैं इसलिए श्रीराम जी को विश्वामित्र जी को समर्पित कर दो क्योंकि विसर्ग अर्थात् त्याग सर्ग (सृष्टि) की ही रचना करता है॥५५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्यपाकृतमहाभ्रमतामयः श्रीवसिष्ठ मुनिनावनिपालः।
दत्तवान सुमिवामलगोभ्यः कौशिकाय रघुनाथमिवात्मा।।५६।।

**कृपा टीका**—इस प्रकार महर्षि वशिष्ठ द्वारा महाभ्रमरूप रात्रि के निवारित कर देने पर विरह से व्याकुल महाराज ने श्रीरामजी को विश्वामित्र जी को सौंप दिया, जैसे जीवात्मा इन्द्रियों के लिए प्राणों का समर्पण कर देता है।।५६।।

काकपक्षधरमम्बुदनीलं धन्विनं नरललामसुशीलम्।
आजुहाव सहलक्ष्मणमाराद् राममिन्द्रमिववामनवन्द्यम्।।५७।।

**कृपा टीका**—इसके अनंतर महाराज ने स्कन्ध तक लटकते हुए घुँघराले बालों वाले मेघ के समान नीले वर्ण वाले अद्वितीय धर्नुधर सुशील श्रीराम को बामन द्वारा वंदित इन्द्र की भाँति श्रीलक्ष्मण जी सहित बुलाया।।५७।।

पादयोः प्रणतमद्भुतसत्वं पुत्रकं समनुलाल्य मनस्वी।
व्याजहार वचनं वचनीयं स्नेहगद्गदगभीरगिराकम्।।५८।।

**कृपा टीका**—मनस्वी महाराज ने अपने चरणों पर प्रणिपात करते हुए अद्भुत् पराक्रम वाले प्रिय पुत्र श्रीराम को दुलार कर उनसे स्नेह से गद्गद गम्भीर वाणी से युक्त अत्यन्त श्रेष्ठ वाक्य कहा।।५८।।

रामभद्र कुशिकात्मभुवे त्वमर्प्यसे मखरुजां कदनार्थम्।
श्रेयसे त्रिजगतां व्रजवृद्ध्यै भूतये च पुनरागमनाय।।५९।।

**कृपा टीका**—हे रामभद्र यज्ञ द्रोहियों के विनाश के लिए मैं तुम्हें विश्वामित्र को समर्पित करता हूँ। कल्याण के लिए मर्यादा की समृद्धि विजय विभूति के लिए और फिर लौट आने के लिए जाओ।।५९।।

कौशिकः सततमप्यनुगम्यो धन्विना वियति भानुरिवाह्ना।
पालयेश्च वचनानि महर्षेर्वेदवाक्यमिव हेतुमपृष्ट्वा।।६०।।

**कृपा टीका**—हे वत्स आकाश में जिस प्रकार दिन सूर्यनारायण का अनुगमन करता है उसी प्रकार धनुष धारण करके तुम विश्वामित्र जी का ही निरंतन अनुगमन करना। वेद वाक्य के ही समान कोई भी कारण बिना पूछे श्री विश्वामित्र के प्रत्येक आदेश का पालन करना।।६०।।

इत्यनेकविधदत्तसुशिक्षं स्वप्रपन्नजनरक्षणदीक्षम्।
बाष्पविन्दुकलुषो विससर्ज रामभद्रमिव लोचनतारम्।।६१।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—इस प्रकार अनेक प्रकार से शिक्षा देकर अश्रुपूर्ण महाराज दशरथ जी ने शरणागतों की रक्षा को ही दीक्षा मानने वाले श्रीरामभद्र जी को अपने नेत्र के तारे की भाँति प्रिय होने पर भी विश्वामित्र जी के साथ भेज दिया॥६१॥

**तं वसिष्ठ मुखभूसुरवर्या लक्ष्मणांनुचरमाप्तधनुष्कम्।**
**स्वस्तिवाचन पुरः सरमीड्यं स्नेहबाष्पनयनाव्यसृजन् स्म॥६२॥**

**कृपा टीका**—इस प्रकार धनुर्बाण धारण किये हुए लक्ष्मण जी द्वारा अनुगम्यमान धनुर्धर भगवान श्रीराम को वसिष्ठ आदि ब्राह्मणों ने भी स्वतिवाचन के साथ अश्रुपूरित नयनों से विदा किया॥६२॥

**तं तमालरुचिमेत्य ववन्दे सानुजो भरत आकुलनेत्रः।**
**मित्रमण्डलमथेत्य हरिं तं व्याहरत् करुणमङ्गलवाचम्॥६३॥**

**कृपा टीका**—इसके अनंतर तमाल के समान सुन्दर श्रीराम को शत्रुघ्न जी के सहित भरत जी ने करुणा पूर्ण नयन होकर वंदन किया। मित्रमण्डली ने भी श्रीहरि के पास आकर करुणापूर्ण मंगलवाणी में प्रभु के सकुशल लौट आने की शुभकामना की॥६३॥

**तं व्रजन्तमनुवीक्ष्य महर्षिं देवताश्च ववृषुः कुसुमैश्च।**
**मन्दमन्दमलयानिल आर्यः संस्पृशन्नथ सखेव सिषेवे॥६४॥**

**कृपा टीका**—महर्षि के पीछे चलते हुए लक्ष्मण सहित श्रीराम जी को देखकर देवताओं ने पुष्पों की वर्षा की और मित्र की भाँति धीरे-धीरे चलते हुए मलय समीर ने प्रभु के अंगों का स्पर्श करके उनकी सेवा की॥६४॥

**शंखतूर्यपटहप्रमुखाणि वादितानि गगने सहसैव।**
**रामचन्द्रगमने हि कृतार्थं मङ्गलं भवति मङ्गलमूर्तौ॥६५॥**

**कृपा टीका**—उसी समय आकाश में सहसा ही शंख, तुरही, ढोल आदि शुभ वाद्य बज उठे। यही श्रीरामचन्द्र जी के गमन के समय उनकी सेवा थी। क्योंकि मंगलमूर्ति प्रभु की सेवा में उपयुक्त होकर सभी मंगल स्वयं कृतार्थ हो जाते हैं॥६५॥

**अग्रतः कुशिकनन्दन आगात् राघवस्तमनुदिव्यशिखण्डः।**
**लक्ष्मणस्तमनुकार्मुकपाणिः कार्तिकेयमिव कुञ्जरवक्त्रः॥६६॥**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—आगे आगे विश्वामित्र चल रहे थे। उन्हीं के पीछे दिव्य मोर मुकुट धारण किये हुए प्रभु श्रीराम जा रहे थे और लक्ष्मण जी धनुष लेकर श्रीराम का उसी प्रकार अनुगमन कर रहे थे जैसे गणपति जी कार्तिकेय जी का अनुगमन करते हैं॥६६॥

**कौशिकेन सह राघवमेनं लक्ष्मणानुगमवेक्ष्य हि यान्तम्।**
**पौरवर्गवनिता नयनाश्रु व्यारुधन् परममङ्गलभीताः॥६७॥**

**कृपा टीका**—विश्वामित्र जी के साथ श्रीलक्ष्मण सहित श्रीराम को जाते देखकर अमंगल के भय से भयभीत अयोध्यानगर की नारियों ने उमड़े हुए आँसू को रोक लिया॥६७॥

**पादपङ्कजचरं गुरुसेवालब्धनिष्ठमथ वारिदनीलम्।**
**केलिकार्मुकशरं शरजन्म कोटितुल्यमथ राममवेक्ष्य॥६८॥**

**नेत्रलाभमुदिताः पथिवृद्धा बालवृन्दवनिता सहिताश्च।**
**हृत्सरोजसदनेषु समोदा रामभृङ्गमिव गोपितवन्तः॥६९॥**

**कृपा टीका**—निरावरण चरण कमलों से चलते हुए, गुरुदेव की सेवा में निष्ठावान, वर्षा कालीन बादल के समान नीलवर्ण, खिलौने के धनुषबाण धारण किये हुए, करोड़ों कार्तिकेयों के समान प्रतापी श्रीरामजी के दर्शन करके मार्ग के प्रेमी बालक, वृद्ध, युवक युवतियों ने अपने हृदय कमल के कुटीर में श्रीराम को भ्रमर के समान छिपा लिया॥६८-६९॥

**तत्र तत्र पथि विप्रपुरोगैः पूजितौ कुसुमचन्दनमाल्यैः।**
**रेजतु रुचिरवेषशिखण्डावश्विनाविव च तौ रघुपुत्रौ॥७०॥**

**कृपा टीका**—अनेक स्थानों पर मार्ग में आकर श्रेष्ठ ब्राह्मणों द्वारा चंदन पुष्प मालाओं से पूजित होकर सुन्दर वेष तथा मोरपंख धारण किये हुए रघुकुल के दोनों राजकुमार श्रीरामलक्ष्मण अश्विनी कुमारों के समान सुन्दर लग रहे थे॥७०॥

**ताटकाथ ददृशे विकराला रामलक्ष्मणपथव्यवधाना।**
**आस्थिता विटपपर्वतवर्षा कालरात्रिरिव भीमशरीरा॥७१॥**

**कृपा टीका**—इसके पश्चात् श्रीराम लक्ष्मण के मार्ग में व्यवधान डालती हुई विकराल भयंकर ताटका पत्थर और वृक्षों का वर्षण करती हुई अपने भयानक

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

शरीर में प्रलयकालीन रात्रि के समान दिखी॥७१॥

**तां विलोक्य मुनिराड्भयभीतो योगिराडिव नितान्तमविद्याम्।**
**पाहि पाहि भगवन्नतिवादं राममेव शरणं मरणेऽगात्॥७२॥**

**कृपा टीका**—उस ताटका को देखकर अविद्या के दर्शन से योगिराज के समान भयभीत विश्वामित्र जी 'भगवन् रक्षा कीजिए' 'रक्षा कीजिए' इस प्रकार बोलते हुए मरण निकट आने पर श्रीरामभद्र के शरणागत हो गये॥७२॥

**मा प्रभोऽतिदययेयमघायुर्नीयतां निशितसायकतीर्थम्।**
**त्यक्तदेहवसना पिशिताशा स्वर्गमेतु मम भीतिरपैतु॥७३॥**

**कृपा टीका**—हे प्रभो ताटका पर अधिक दया न करें इसका जीवन पापमय है, इसे अपने तीक्ष्ण बाण रूप तीर्थ में ले चलें यह मांसाहारिणी वहीं पर देहरूप वस्त्र छोड़कर स्वर्ग पधार जाय और मेरा भय भी दूर हो जाय॥७३॥

**ताटकापि गिरिपादपवर्षैर्व्यावृणोद्रघुवरं कुटिलाशा।**
**बालभानुमिव घोरतमोभिः सिंहिकासुतमयीव विभीषा॥७४॥**

**कृपा टीका**—जिस प्रकार सिंहिका पुत्र राहु की सूर्यग्रहण की विभीषका घोर अन्धकार से प्रातःकालीन सूर्य नारायण को ढक लेती है उसी प्रकार कुटिलहृदया ताटका ने भगवान श्रीराम को पर्वत और वृक्षों की वर्षा करके ढक दिया॥७४॥

**राघवोऽपि विहसन् शरजालैर्नाशयंस्तम इवार्ककराग्रैः।**
**राक्षसीमथ शिलीमुख राजत् पञ्जरेऽपि स रुरोध रुषेव॥७५॥**

**कृपा टीका**—भंगवान श्रीराम ने भी हँसते हुए सूर्यकिरणों से अन्धकार के समान अपने वाणों से ताटका की माया को नष्ट करते हुए, कुछ क्रोध करते हुए से राक्षसी ताटका को वाणों के पिंजरे में बन्द कर दिया॥७५॥

**भूय एवमभिमन्त्र्य महात्मा सन्दधे धनुषि बाणमथोग्रम्।**
**ताटकारुधिरविन्दुपिपासुं भीमवज्रमिव कालदुरन्तम्॥७६॥**

**कृपा टीका**—फिर महात्मा श्रीरामजी ने मंत्र से अभिमंत्रित करके ताटका के रक्त बिन्दुओं के प्यासे दुनिवार्य महाकाल और वज्र के समान भयंकर अत्यन्त उग्र बाण का धनुष पर संधान किया॥७६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**रामचापप्रणवाभि प्रयुक्तो ब्रह्मबोध इव शायक उग्रः।**
**ताटकाभिधमनन्तमविद्या ध्वान्तमन्तमनयत् स निमेषात्॥७७॥**

**कृपा टीका**—श्रीरामजी के धनुष रूप ओंकार से प्रेरित हुए ब्रह्म ज्ञान रूप श्रीराम जीके उग्रवाण ने एक क्षण में ताटका नामक अविद्या के अंधकार को नष्ट कर दिया॥७७॥

**ताटकां च विनिहत्य खलारिः पूजितो विबुधकिन्नरनागैः।**
**ग्राहतो गजपतिं स पुरेव कौशिकं मरणतः परितत्रे॥७८॥**

**कृपा टीका**—इस प्रकार खलों के शत्रु भगवान श्रीराम ने ताटका का वध करके देवता किन्नर तथा नागों से सम्मानित होकर जिस प्रकार पहले, ग्राह से गजेनद्र को छुड़ाया था उसी प्रकार विश्वामित्र जी को भरण से मुक्त कर दिया॥७९॥

**स्वां बलामतिबलामिति विद्या सिंधवेऽपि सददावथ विद्ये।**
**तर्तुकाम इव मोहमहाब्धिं मानबीजजनिके परिचिन्त्य॥७९॥**

**कृपा टीका**—इसके अनंतर विद्यानिधि भगवान श्रीराम को विश्वामित्र जी ने मोहसागर को पार करने की इच्छा करते हुए से विद्याओं को अभिमान बीज की जन्मदायिनी जानकर अपनी बला अतिबला नामक विद्याएँ प्रदान कर दीं॥७९॥

**आयुधानि सकलानि महात्मा राघवाय निदिदेश महान्ति।**
**स्वं समर्प्य परमात्मनि 'सर्वं भाति भक्तिमहितो ह्यपवर्गः॥८०॥**

**कृपा टीका**—पश्चात् महात्मा विश्वामित्र जी ने अपने सम्पूर्ण दिव्य अस्त्रों को श्रीराम के करकमलों में समर्पित कर दिया। क्योंकि भक्त अपना सब कुछ परमात्मा को समर्पित करके अपवर्ग अर्थात् पाप पुण्य फल बंधन भवभय तथा मरण माया से मुक्त होकर भक्ति से सम्मानित होता हुआ सुशोभित होता है॥८०॥

**आनिनाय निजपर्णकुटीरं स्वातिथिं परमसंयुगधीरम्।**
**लक्ष्मणेन सहितं रघुवीरं सिन्धुकोटिशतघोरगभीरम्॥८१॥**

**कृपा टीका**—युद्ध में अत्यन्त धीर, करोड़ों महासागरों के समान भयंकर और गम्भीर श्रीरघुवीर को लक्ष्मण जी के सहित अपना अतिथि बनाकर अपनी पर्णकुटी में ले आये॥८१॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

तं तमालमहसं स समार्चत् कन्दमूलफलपत्रसुमौघैः।
तन्मिषेण निजसर्वफलानि प्रार्पिपद् भगवते स हि योगी॥८२॥

**कृपा टीका**—योगी विश्वामित्र जी ने कन्दमूल, फल, पत्र और पुष्पों से तमाल के समान नील विग्रह वाले श्रीराम की पूजा की और इसी के ब्याज से अपने सम्पूर्ण कर्मफलों को भी भगवान श्रीराम को समर्पित कर दिया क्योंकि वे निष्काम कर्मयोगी थे॥८२॥

प्रातराविशदृषिर्मखदीक्षां सर्त्विजं दहनदीपितवेदीम्।
राघवौ विहितसज्जधनुष्कौ रक्षतःस्म षड्हानि मुनीज्याम्॥८३॥

**कृपा टीका**—ऋत्विजों से युक्त अग्नियों से प्रकाशमान ऐसी यज्ञ दीक्षा में विश्वामित्र जी ने प्रातःकाल प्रवेश किया, और श्रीराम लक्ष्मण ने भी धनुष बाण सुसज्जित करके छः दिन पर्यन्त यज्ञ की रक्षा की॥८३॥

सप्तमेऽहनि मखं विजिघांसू ईयतुस्म मृगबाहुसुबाहू।
राघवत्रिषिखतोऽप्यचिरेण प्राप्स्यमानशलभीयनिसर्गौ॥८४॥

**कृपा टीका**—सातवें दिन यज्ञ में विघ्न डालने के लिए मारीच और सुबाहू आ पड़े जो भविष्य में श्रीराम के बाणरूप अग्नि के पतंगे बनने वाले हैं॥८४॥

मानवायुधनिराकृतवीर्यमग्रजञ्च शतयोजनसिन्धोः।
पारमक्षिपदपारबलाढ्यं नास्तिकं नरकवासमिवाद्यः॥८५॥

**कृपा टीका**—जिस प्रकार प्रभु श्रीराम नास्तिक जीव को नरक में फेंक देते हैं उसी प्रकार उन्होंने अपार बल वाले बड़े भ्राता मारीच को मानवास्त्र से अहंकार चूर करके सौ योजन अपार सिन्धु के पास फेंक दिया॥८५॥

यावदग्निविशिखाग्निमभीतः शालभींगतिमवाप सुबाहुः।
श्रीहरेर्हरिणकानिव तावल्लक्ष्मणो हरिरहन् पिशिताशान्॥८६॥

**कृपा टीका**—जब तक निर्भीक सुबाहु भगवान श्रीराम के आग्नेय बाण के समक्ष आकर पतंगे की गति को प्राप्त हुआ तब तक लक्ष्मण रूप महासिंह ने शेष राक्षस रूप छोटे हरिणों को मार डाला॥८६॥

ध्वस्तराक्षसबलौ रघुवीरौ पूर्णकौशिकमखौ मखभाजौ।
वृष्टदेवकुसुमौ मुदितास्यौ रेजतुर्गजरिपू इव धीरौ॥८७॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—इस प्रकार राक्षस सेना को नष्ट करके विश्वामित्र का यज्ञ पूर्ण कर देवताओं के पुष्पवर्षा से सम्मानित होते हुए रघुवीर श्रीराम लक्ष्मण अति प्रसन्न सिंह के समान सुशोभित हो रहे थे॥८७॥

**मैथिलेन विनिवेदितपूर्वः कौशिको दशरथस्य कुमारौ।**
**आनिनाय मिथिलामथ चैत्रमाधवाविव स मेष दिनेशः॥८८॥**

**कृपा टीका**—मिथिला नरेश जनक के द्वारा पूर्व में ही निमंत्रित हुए महर्षि विश्वामित्र जी चैत्र और वैशाख महीनों को मेष संक्रान्ति के सूर्य के समान श्रीराम लक्ष्मण को मिथिला ले आये॥८८॥

**तत्र वर्त्मनि निवर्तितमायो मायया महितमानवदेहः।**
**दृष्टवान् हरिरवद्यमहल्यामर्दयत् तम इवैन्दवलेखाम्॥८९॥**

**कृपा टीका**—उस मिथिला मार्ग में माया को निवृत्त करने वाले और अपनी योग माया से मनुष्य शरीर को सम्मानित करने वाले श्रीहरि रामचन्द्रजी ने चन्द्रलेखा को मलिन बना रहे राहू के समान, अहल्या को कलंकित कर रहे कलंकात्मक पाप को देखा॥८९॥

**शक्रभुक्तविभवामयुताब्दभोग्यभूरिभयगौतमशापात्।**
**लब्धदारुणाशिलामयदेहां पद्मिनीमिव समावृतपङ्काम्॥९०॥**

**कृपा टीका**—इन्द्र के द्वारा जिसके सौन्दर्य विभव का उपयोग कर लिया गया था ऐसी दश सहस्र वर्ष पर्यन्त भोगे जा रहे अत्यन्त भयंकर शाप से भयानक शिला का शरीर प्राप्त की हुई कींचड़ से ढ़की हुई कमलिनी की भाँति अहल्या को भी प्रभु श्रीराम ने देखा॥९०॥

**वीक्ष्य विस्मितमनाः समपृच्छद्राघवस्तमवदत् करुणार्द्रः।**
**कौशिकः कसमलं कनकाङ्ग्याः पापनाशमिव प्रार्थयमानः॥९१॥**

**कृपा टीका**—अहल्या को देखकर विस्मित मन से भगवान श्रीराम ने विश्वामित्र से पूछा फिर करुणार्द्र विश्वामित्र ने मानो अहल्या के पापनाश की प्रार्थना करते हुए उसकी करुणकथा कह सुनाई॥९१॥

**पावयस्व पदपद्मरजोभिः पापिनीं पतितपावनकीर्ते।**
**कः क्षमोऽघहरणे त्वदृतेऽस्या ध्वान्तहा हि हरिरेव न चान्यः॥९२॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे पतित पावन यश वाले प्रभु राम अपने श्रीचरणकमल की धूलि से इस पापिनी को पवित्र कीजिए आपके अतिरिक्त इसका पापहरण करने में कौन समर्थ है क्योंकि सूर्यनारायण ही अन्धकार को दूर कर सकते हैं॥९२॥

**इत्यसौ कुशिकवंशधरेण प्रार्थितः पतितपावनरामः।**
**पादपद्ममधिमस्तकमस्याः प्रादधान् निखिलभाग्यमिवेड्यम्॥९३॥**

**कृपा टीका**—इस प्रकार विश्वामित्र जी के प्रार्थना करने पर पतितपावन श्रीराम ने सम्पूर्ण प्राणियों के पुञ्जीभूत सौभाग्य जैसे अपने श्रीचरणकमल को अहल्या के मस्तक पर रख दिया॥९३॥

**सा रामचन्द्रपदपङ्कजतीर्थराजे**
**प्रध्वस्तपातकशिला ललिताङ्गयष्टिः।**
**आविर्बभूव गुणसौभगदुग्धसिन्धु-**
**लक्ष्मीरिवामल रुचीरतिकोटिशोभा॥९४॥**

**कृपा टीका**—श्रीरामचन्द्र जी के चरणकमलरूप तीर्थराज प्रयाग में अपनी पापमयी शिला को समाप्त करके ललित शरीर धारण कर अहल्या करोड़ों रतियों की शोभा से युक्त होती हुई गुणों के सौभाग्य रूप क्षीरसागर से प्रकट हुई निर्मल लक्ष्मी के समान श्रीराम लक्ष्मण जी के समक्ष सहसा प्रकट हो गयीं॥९४॥
वसन्ततिलका छन्द।

**दृष्ट्वा धनुर्धरमनन्तगुणैकराशिं**
**राजीवलोचनमनङ्गसहस्रशोभम्।**
**रामं रमार्चितपदं नवकन्दकान्तिम्**
**कान्तालकं मदनमोहनमार्तबन्धुम्॥९५॥**

**नेत्रोत्सवं सुमनसां करुणैकसिन्धुं**
**नेत्राश्रुभिश्च सुमुखी स्नपयाम्बभूव।**
**तुष्टावगद्गदगिरा गिरिशैकगद्य-**
**मिन्दीवरद्युतिमलं मुदिता ह्यहल्या॥९६॥**

**कृपा टीका**—धनुष धारण किये हुए असंख्य गुणों के राशि लाल कमल जैसे नेत्र वाले हज़ारों कामदेवों के समान सुन्दर, लक्ष्मी द्वारा पूजित श्रीचरण, नवीन

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

बादल के समान कमनीय, सुन्दर अलकावली से युक्त कामदेव को मोहित करने वाले, आर्तो के बन्धु श्रीराम जी को निहारकर, सज्जनों के नेत्रों के लिए उत्सव स्वरूप, करुणा के एकमात्र सागर, श्रीराम को सुमुखी अहल्या ने नेत्रों के आँसुओं से स्नान करा दिया फिर भगवान शंकर द्वारा गाये जाने योग्य नील कमल के समान सुन्दर प्रभु श्रीराम की अहल्या ने गदगद् वाणी में स्तुति की॥९५-९६॥ वसन्ततिलका छन्द।

**नवजलधरनीलं वेदविख्यातलीलं**
**धृतकरशरचापं भानुकोटिप्रतापम्।**
**तरुणतुलसिमालं भावगम्यं रसालं**
**सकलगुणसमुद्रं भावये रामभद्रम्॥९७॥**

**कृपा टीका**—नवीन जलधर के समान नीलवर्ण तथा वेद में विख्यात लीलाओं से युक्त हाथ में धनुर्बाण धारण किये हुए नवीन तुलसीमाला वाले, भाव से प्राप्त करने योग्य, सम्पूर्ण गुणों के महासागर, श्रीरामभद्र जी की मैं मानसी भावना करती हूँ॥९७॥ मालिनी छन्द।

**दिनकरकुलकेतो भीमविश्वाब्धिसेतो**
**भुवनजननहेतो योगिनां ध्यानसाक्षिन्।**
**भयद खलजनानां सज्जनाहलादकारिन्**
**मुनिमनसि विहारिन् हे हरे त्वां प्रपद्ये॥९८॥**

**कृपा टीका**—सूर्य कुल की पताका संसार सागर के सेतु सम्पूर्ण लोकों की उत्पत्ति के कारण योगियों के ध्यान के साथी, दुष्टों के भयदाता, सज्जनों को आनंद देने वाले, मुनिजनों के मन में विहार करने वाले, हे हरि, भगवान श्रीराम मैं आपकी शरणागत हूँ॥९८॥ मालिनी छन्द।

**यदमलमनसां वै योगिनां ध्यानमूलं**
**विधिहरिहरनम्यं ज्ञानगम्यं सताञ्च।**
**तदनघपदपद्मं मूर्ध्निमेऽधाः कृपालो**
**किमहह कथयेयं मामकं भागधेयम्॥९९॥**

**कृपा टीका**—आपके जो निर्मल चरण कमल निर्मल मन वाले योगियों के ध्यान मूल हैं जो ब्रह्मा, विष्णु और शंकर के भी प्रणम्य और सन्तों के ज्ञानगम्य हैं

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

उन्हीं निर्मल श्रीचरणकमलों को आपने मेरे मस्तक पर पधराया। अहह, आज मैं अपने भाग्य की कैसे प्रशंसा करूँ?॥९९॥ मालिनी छन्द।

**इति स्तुत्वा नत्वा प्रभुपदपयोजातरजसा**
**पवित्रा संतृप्ता रघुतिलकसौन्दर्यसुधया।**
**अहल्या श्रीरामं जनदृगभिरामं सुमुदिता**
**मनोगेहे धृत्वा प्रथित पतिलोकं गतवती॥१००॥**

**कृपा टीका**—इस प्रकार भगवान श्रीराम के श्रीचरण कमल के पराग से पवित्रित तथा रघुश्रेष्ठ श्रीराम की सौन्दर्य सुधा से पूर्णरुपेण तृप्त, प्रसन्न हुई अहल्या भगवान श्रीराम को नमन करके उनका स्तवन करके प्रभु को अपने मनो मंदिर में प्रतिष्ठित करके श्रुतियों में प्रसिद्ध पतिलोक को पधार गयीं॥१००॥ शिखरिणी छन्द।

**इत्थं शुभे भार्गवराघवीये**
**भव्ये महाकाव्य उदारवृत्ते।**
**बाणैक सर्गः कविरामभद्रा-**
**चार्यप्रणीते विदुषां श्रियेऽस्तु॥१०१॥**

**कृपा टीका**—इस प्रकार कल्याणकारी भव्य सुन्दर छन्छों वाले भार्गवराघवीयम् नामक महाकाव्य में महाकवि रामभद्राचार्य द्वारा प्रणीत पन्द्रहवाँ सर्ग विद्वज्जन की प्रपत्ति और सम्पत्ति श्री के लिए हों॥१०१॥ उपजाति छन्द।

**इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामिरामभद्राचार्यप्रणीते श्रीभार्गवराघवीये महाकाव्ये "अहल्योद्धरणं" नाम पञ्चदशः सर्गः॥**

**॥श्रीराघवः शन्तनोतु॥**

इस प्रकार धर्मचक्रवर्ती महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामी रामभद्राचार्य द्वारा विरचित श्रीभार्गवराघवीय नामक महाकाव्य में 'अहल्योद्धरण' नामक पन्द्रहवाँ सर्ग सम्पन्न हुआ।

॥श्रीराघवः शन्तनोतु॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीमद्राघवो विजयते ॥

# अथ षोडशः सर्गः

**अथ मुनीन्द्रकरो मुनिभीहरो रघुवरोऽवरजाभिहतावरः।**
**समुदितो मुदितो यशसाययौ स मिथिलां मिथिलाधिपपालिताम्॥१॥**

**कृपा टीका**—इसके अनंतर जिनके छोटे भ्राता लक्ष्मण जी द्वारा अनेक अवर अर्थात् निम्न राक्षस युद्ध में मारे गये ऐसे मुनियों को आनंद देने वाले, मुनियों का भय हरने वाले, दिव्ययश से युक्त, परमप्रसन्न रघुकुल में श्रेष्ठ, प्रभु श्रीराम जनक जी द्वारा पालित मिथिला नगरी को पधारे॥१॥ इस सर्ग में १ से ६८ श्लोक तक द्रुतविलम्बित छन्द है।

**सुसलिलां कमलाकमलावलीमधुभरभ्रमरीमुखरीकृताम्।**
**सुविमलां विमलातरलैरलं कलितपण्डितमण्डनमण्डलीम्॥२॥**

**कृपा टीका**—सुन्दर जल से युक्त कमलानदी के कमल समूहों के मकरन्द से छके हुए भ्रमरों द्वारा गुञ्जन से शब्दायमान विमला नदी की तरंगों से अत्यन्त निर्मल याज्ञवल्क्य अष्टावक्र जैसे श्रेष्ठ पण्डितों की मंडली से युक्त मिथिला पुरी में भगवान राम पधारे॥२॥

**कलमरालमृणालसुवापिकां पिकरसालरसालितवाटिकाम्।**
**सुसरितं सरसां सरसीरुहैः स्फुटपरागजुषां सरसां रसैः॥३॥**

**कृपा टीका**—सुन्दर राजहंसों से युक्त, कमलनाल से पूर्ण सुन्दर बावडियों वाली, कोकिल के संगीत रस से युक्त, आम्र फलों से पूर्ण वाटिकाओं से सुशोभित, सुन्दर नदियों वाली, स्फुट पराग से युक्त, सरोवरों के रस भरे कमलों से मकरन्दमयी एवम् आनंदपूर्ण मिथिलापुरी में प्रभु पधारे॥३॥

**सकलशस्यसनाथितसम्पदं विविपदं विपदं विपदां पदम्।**
**सुखपदं द्विपदाञ्च चतुष्पदां प्रतिपदं प्रपदामभयास्पदम्॥४॥**

**कृपा टीका**—सभी हरी भरी फसलों से सुशोभित सम्पत्ति वाली विपदाओं से रहित भगवान विष्णु के भी आश्रय और श्रीविष्णु के चरण चिन्तकों के भी

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

विश्राम स्थान रूप मनुष्य एवं पशुओं के सुख की निवासस्थली और निरंतर शरणागतों की अभयदायिनी मिथिलापुरी को प्रभु ने देखा॥४॥

**पुरटतोरणवज्रकपाटिकां कपटपाटवपूगविपाटिकाम्।**
**शुभसमञ्चितविश्वललाटिकां विबुधविघ्नवरूथविघाटिकाम्॥५॥**

**कृपा टीका**—स्वर्ण के तोरणों और हीरे के किवाड़ों से युक्त कपटपूर्ण चतुरता समूहों को नष्ट करने वाली विश्व, की मस्तकरूप श्रीअयोध्या को भी शुभों और मंगलों से सजाने वाली देवताओं के विघ्न वरूथों को भी विघटित अर्थात् समाप्त करने वाली श्रीमिथिला को भगवान ने निहारा॥५॥

**क्वचिदनुष्ठितपावकहोतृकां क्वचिदधिश्रितशास्त्रपरम्पराम्।**
**क्वचिदलङ्कृत पण्डितमण्डलां क्वचिदुपाकृत भावसमुज्ज्वलाम्॥६॥**

**कृपा टीका**—कहीं पर अग्निहोत्र किया जा रहा था और कहीं शास्त्रों का पारम्परिक पठन-पाठन किया जा रहा था और कहीं पण्डितमण्डल का सम्मान किया जा रहा था और कहीं शास्त्रों से सुन्दर भाव उपस्थापित हो रहे थे ऐसी मिथिलापुरी में भगवान ने प्रवेश किया॥६॥

**सुबलभीं बलिभिर्बलितेश्वरां कनकमन्दिरजुष्टमहेश्वराम्।**
**परिसमीरितवेदवटुस्वरां रचितहाटकमन्दिरचत्वराम्॥७॥**

**कृपा टीका**—सुन्दर छतों वाली, पूजा के उपहारों से जहाँ ईश्वर की समर्चा की गयी है और जिसके सुवर्ण मंदिरों में शिवजी की प्रेमपूर्वक सेवा की जाती है और जहाँ बटुओं के वेदपाठ के स्वर से दिशाएँ गुञ्जित थीं तथा जहाँ स्वर्ण के मन्दिर और चबूतरे बनाये गये थे। ऐसी मिथिला के भगवान ने दर्शन किये॥७॥

**धनदतुल्यसमृद्धसमन्वितां मणिललामसुवीथिविधान्विताम्।**
**पुरजनप्रथितां धृतगौरवां जनकराजपुरीं हृतरौरवाम्॥८॥**

**कृपा टीका**—कुबेर के समान समृद्धि से युक्त सुन्दर रत्नों से खचित, गलियों की विविध विधाओं से समन्वित, नागरिकों द्वारा प्रशंसित, गौरवपूर्ण, रौरव नरक की यातना को हरने वाली, जनकराज की नगरी मिथिला में परमात्मा श्रीराम ने प्रवेश किया॥८॥

**विरजसं रजसा परिवर्जितां वितमसं तमसोऽपि विदूरगाम्।**
**कलितदुग्धमतीं मतिमत्प्रियामशिथिलां मिथिलां मिथनिर्भिताम्॥९॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—धूलि से रहित और रजोगुण से हीन अन्धकार रहित और अविद्या के अन्धकार से बहुत दूर, दुग्धमती नदी से युक्त, बुद्धिमानों को बहुत प्रिय, महाविष्णु को भी भाव से शिथिल कर देने वाली, पापों को हरने वाली, महाराज मिथ द्वारा रचित ऐसी मिथिला नगरी को भगवान ने बहुत निकट से देखा॥९॥

**स नगरीं नगरीप्रभुतामयीं सदबलां न बलेन विवर्जिताम्।**
**धृतवनीमवनीमवलोकयन् प्रमुमुदे मुमुदे न नृपावली॥१०॥**

**कृपा टीका**—देवनगरी की प्रभुता से युक्त अथवा विषैले सर्पों के प्रभाव से रहित भगवान ही जिनके बल हैं ऐसी अबला अर्थात् परम भागवत मिथिलानियों से तथा अवल अर्थात् भगवदीयबलवाले संतों से सेवित होने पर भी बल के अभाव से रहित, नाना प्रकार के वनों से युक्त पृथ्वी को देखते हुए भगवान श्रीराम बहुत प्रसन्न हुए, परन्तु स्वयंबर मेंआये हुए राजागण प्रसन्न नहीं हुए॥१०॥

**नवलनीलपयोधरसुन्दरो दरदरोदरदीर्णदरोदरः।**
**हरहरारिशरः शरजन्मकृत् कृदभितो ह्यहितोषणतोषणः॥११॥**

**कृपा टीका**—नवीन नीले कमल के समान सुन्दर, भय के भी भय एवं अपने भय से भय के परिणामी काल को भी नष्ट करने वाले हर अर्थात् भगवान शंकर के हर अर्थात् महाकाल के भी शत्रु अमोघबाण धारण करने वाले, शरजन्मा कार्तिकेय के भी पिता भगवान शंकर के भी जन्म के कारण ब्रह्मा जी के द्वारा पूजित, शेष को सन्तुष्ट करने वाले, भगवान शंकर के भी संतोषदाता श्रीराम मिथिला में सुशोभित हुए॥११॥

**मकरकेतनकेतनकुण्डलोज्ज्वलकपोललसन्मुखमाधुरी।**
**मिषदलोलविलोलविलोचनभृकुटिभग्नमनोभवचातुरी॥१२॥**

**कृपा टीका**—मीनकेतु कामदेव की पताका मछली के समान कुण्डल एवम् सुशोभित, कपोल तथा सुन्दर मुख की माधुरी से सम्पन्न निर्दोष चञ्चल और अचंचल भक्तों को आनंदित करने वाले उन्हीं के लिए चञ्चल नेत्र और भ्रुकुटि विलास से कामदेव की भी चतुरता को नष्ट करने वाले प्रभु मिथिला में विराजित हुए॥१२॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सुभुजभोजनमञ्जुशरावलीहरजहस्तसमानमहाभुजः।**
**करसरोजधृतेषु शरासनो विगणितामितमानसशासनः॥१३॥**

**कृपा टीका**—सुबाहु को नष्ट करने वाली सुन्दर बाण पंक्तियों से युक्त तथा शिवपुत्र गणपति के सूँड के समान सबल भुजदण्ड वाले, करकमल में धनुषबाण धारण किये हुए अनेक मन के शासक अर्थात् कामदेवों को भी तिरस्कृत करने वाले राघव सरकार मिथिला भूमि में विराजे॥१३॥

**दशनदीधितिलीननिशाकरो वसनसौभगदीनदिवाकरः।**
**प्रणतपालकचारुयशस्करो रघुवरस्मरकोटिमनोहरः॥१४॥**

**कृपा टीका**—जिन्होंने अपनी दन्तावली की कान्ति में चन्द्रमा को भी छिपा दिया और जिनके वस्त्र की सुन्दरता से बालसूर्य भी दीन हो गये। जिन्होंने प्रणत पालक रूप सुन्दर यश प्रकट किया ऐसे कोटि कामदेवों के मन को चुराने वाले श्रीरघुवर जनकपुर में सुशोभित हुए॥१४॥

**वृहदुरस्यथलक्ष्मलघूद्वहन् श्रियं उदञ्चित चित्रपराक्रमः।**
**न रमणी रमणी मणिवल्लभो भुवि बभौ भगवान् मिथिलापुरः॥१५॥**

**कृपा टीका**—विशाल वक्षस्थल पर अपने अत्यन्त प्रिय श्रीवत्सलाञ्छन को धारण करते हुए आश्चर्यजनक पराक्रम प्रस्तुत करने वाले, मनुष्यों में श्रेष्ठ तथा नारी शिरोमणि सीताजी के प्राणप्रिय भगवान श्रीराम मिथिलापुरी की भूमि पर सुशोभित हुए॥१५॥

**समुदितं मुदितं मिथिलाम्बरे विमलराघवचन्द्रमसं जनाः।**
**कृतविलोचन चारुचकोरकाः परिपपुः सुवपुः सुषमासुधाम्॥१६॥**

**कृपा टीका**—इस प्रकार मिथिला रूप आकाश में प्रसन्नतापूर्वक पूर्णरूप से उदित परम शोभा रूप सुधा से परिपूर्ण निर्मल श्रीरामरूप चन्द्रमा को मिथिलावासियों ने अपने नेत्रों को चकोर बनाकर पूर्ण आनंद के साथ पिया॥१६॥

**प्रणिनिशम्य मुनिं पुरमागतं श्रितकुमारयुगं किल कौशिकम्।**
**स मिलितुं मिलितैः सचिवैर्द्विजैर्द्विजवरं द्विजदेव उपागमत्॥१७॥**

**कृपा टीका**—विश्वामित्र जी के साथ दो राजकुमार अर्थात् श्रीराम लक्ष्मण को नगर में पधारे हुए सुनकर ब्राह्मणों में देवबुद्धि रखने वाले, मंत्रियों एवं विश्वामित्र

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जी के पूर्व परिचित ब्राह्मणों के साथ जनकजी विश्वामित्र जी से मिलने नगर के बाहर गये॥१७॥

**कृतनमस्यममुष्य पदाम्बुजं समवलोक्य रघूद्वहसौभगम्।**
**विशिथिलो मिथिलाधिपतिर्मुनिं वच उवाच कृताञ्जलिरादरात्॥१८॥**

**कृपा टीका**—विश्वामित्र जी के चरणकमल को प्रणाम करके श्रीराम जी का सौन्दर्य निहारकर प्रेम से शिथिल मिथिलाधिराज जनक हाथ जोड़कर महर्षि से आदरपूर्वक यह वचन बोले॥१८॥

**जयति तत्र भवान् किल कौशिको विबुधभूसुरशस्यबलाहकः।**
**बहुमता भवता विहितावयं पदपयोरुहदर्शनतो मुने॥१९॥**

**कृपा टीका**—देवता और ब्राह्मणरूप शस्य के लिए बादल आदरणीय विश्वामित्र की जय हो, हे महर्षे आपने श्रीचरण कमल के दर्शन से हमें बहुत भाग्यशाली बना दिया॥१९॥

**कुत इमौ हरितुल्यपराक्रमौ जलदहाटकसुन्दरवर्णिनौ।**
**सुरवराविव चात्र समागतौ नरवरौ किमु देव दिवः किल॥२०॥**

**कृपा टीका**—हे देव विष्णु के समान पराक्रम वाले बादल एवं स्वर्ण के समान सुन्दर वर्ण वाले देवताओं के समान ये दो नर श्रेष्ठ कहाँ से आये हैं, क्या ये स्वर्ग से उतरे हैं?॥२०॥

**हरिहरावुतवा मुनिबालकौ रविसुतावुत भूपकिशोरकौ।**
**किमुत ते सुकृतस्य फलं मुने धृतशरीरयुगं प्रतिभाति मे॥२१॥**

**कृपा टीका**—हे महर्षे क्या ये विष्णु अथवा शंकर हैं अथवा कोई मुनिकुमार या अश्विनिकुमार या किसी राजा के पुत्र अथवा आपका पुण्य ही दो शरीर धारण करके प्रस्तुत हो गया है ऐसा मुझे प्रतीत होता है॥२१॥

**मम निसर्गविरागमयं मनः समवलोकयतो नितरामिमौ।**
**स्थिरगतीव शरद्रजनीविधूक्षुधितनेत्रचकोरकशावकम्॥२२॥**

**कृपा टीका**—हे प्रभो स्वभाव से वैराग्य में लगा हुआ मेरा मन इन्हें निहार निहारकर उसी प्रकार स्थिर हो चुका है मानो इसे शरद्काल के दो चन्द्रमा प्राप्त हो गये हों और इसने दोनों नेत्रों को इनका चकोर बना दिया हो॥२२॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**अहह धन्यतमौ पितरौ किल यदनयोर्मुखपङ्कजमाधुरीम्।**
**प्रपिबतोऽनिमिषैः सुकृतां बुधी दृगभिधैश्चषकैश्चलपक्ष्मभिः॥२३॥**

**कृपा टीका**—अहो इन दोनों बालकों के वे माता पिता धन्य हैं जो पुण्य पुंज महानुभाव अपने सुकृत महासागर के फलस्वरूप निर्निमेष नेत्र रूप पात्र से इनके मुख सौन्दर्य की सुधा पीते रहते हैं॥२३॥

**सहजसुन्दरमञ्जुमरालकौ विहितबालतनू किल काविमौ।**
**सुविमले कमले इव पश्यतो मम मनो मधुपं हरतो हठात्॥२४॥**

**कृपा टीका**—हे भगवन्, ये बालरूपधारी निसर्ग सुन्दर बाल हंस कुमार कौन है? जो निहारते हुए मेरे मन मधुप को विकसित दो कमलों के समान हठात् चुरा रहे हैं॥२४॥

**कथय नाथ कथां व्यथितव्यथां मनुजदारकयोरनयोर्मुदा।**
**किमुत पावयितुं मिथिलावनिं नयनगोचरतामगमत् परः॥२५॥**

**कृपा टीका**—हे नाथ इन दोनों मनुष्य बालकों की व्यथाहारिणी कथा कहिए, क्या मिथिला भूमि को पवित्र करने के लिए परब्रह्म ही हमारे नेत्रगोचर हो गये हैं?॥२५॥

**इति निशम्य गिरं गदिताक्षरां सुमतिनावनिपेन महामुनिः।**
**पतितपावनरामयशस्सुधां किमपि पाययितुं ह्युपचक्रमे॥२६॥**

**कृपा टीका**—इस प्रकार स्पष्ट अक्षर वाली सुन्दर बुद्धि से युक्त महाराज जनक द्वारा कही हुई वाणी को सुनकर महर्षि विश्वामित्र ने पतित पावन श्रीरामचन्द्रजी की यशः सुधा को कुछ दिलाने का उपक्रम किया॥२७॥

**दशरथस्यसुतः प्रथमः पुमाञ्जजलदनीलतमालतनुच्छविः।**
**मदनमोहनमूर्तिरनुत्तमो जगति राजति राम इति श्रुतः॥२७॥**

**कृपा टीका**—हे महाराज ये नीले बादल और नीले तमाल के समान शोभा वाले पुरुषोत्तम काम को भी मोहित करने वाले श्यामलमूर्ति महाराज दशरथ के प्रथम पुत्र हैं और ये पुरुष श्रेष्ठ रामनाम से जगत में शोभित हो रहे हैं॥२७॥

**कमनकोसलजासुरवल्लिकासुफलमेष मुखस्मितमञ्जुलः।**
**भुवनमंगलसद्गुणसागरो गरहरो हरहृद्यवपुर्धरः॥२८॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे महाराज ये मुख की मुस्कान से मधुर लग रहे लोग मंगलकारी सद्‌गुणों के महासागर विषयविष को समाप्त करने वाले, शंकर भगवान के हृदय को प्रिय, मधुर शरीर धारण किये हुए श्रीराम कौशल्या रूप सुन्दर कल्पलता के सुन्तरतम फल हैं॥२८॥

**दनुजसूदन एष महाभुजो भुजमहानलदग्धसुबाहुकः।**
**बलप्रभावप्रतापपराक्रमा इह- चकासति सोदरका इव॥२९॥**

**कृपा टीका**—हे महाराज, अपने बाण की महाग्नि में सुबाहु राक्षस को भस्म करने वाले, ये ही महाबाहु श्रीराम राक्षसों के नाशकर्ता हैं। इन्हीं में बल, प्रभाव, प्रताप और पराक्रम आदि सद्‌गुण सगे भ्राताओं की भाँति सुन्दर लग रहे हैं॥२९॥

**अयममुष्य लघुर्दयितोऽनुजो जनभृतां चरितैरिव देशिकः।**
**कनककेशरचम्पकसुन्दरोऽविलुलितोऽललितोऽवति लक्ष्मणः॥३०॥**

**कृपा टीका**—ये देखिए, अपने चरित्रों से प्राणियों के आचार्य रूप, सुवर्ण, पीले पराग, चम्पा के समान सुन्दर, प्रभु के चरणों में स्थिर देखने में बड़े ही सुन्दर इन श्रीराम जी के छोटे प्रिय भाई लक्ष्मण सुशोभित हो रहे हैं॥३०॥

**असितपीतपयोरुहसुन्दरौ रघुवरौ कलकेशरिकन्धरौ।**
**दशरथस्य सुतौ महितौ हितौ जगति जाग्रति राघवलक्ष्मणौ॥३१॥**

**कृपा टीका**—नीले और पीले कमल के समान सुन्दर रघुकुल में श्रेष्ठ सिंह के समान कंधे वाले संसार के पूजनीय सबके हितैषी दशरथ जी के दोनों राजकुमार इस जागरुक जगत में श्रीराम जी लक्ष्मण नाम से प्रसिद्ध हैं॥३१॥

**मखरुजो विजिघातयिषन् नृप कुशलकोसलपालपुरीं गतः।**
**दशरथं समयाच इमावहञ्जरठमीनमिवाम्बुविनिर्दयः॥३२॥**

**कृपा टीका**—हे महराज यज्ञ के विघ्नकर्ताओं को नष्ट कराने की इच्छा से श्रेष्ठ कोसलपुरी में जाकर बूढ़ी मछली से जल के समान मैंने दशरथ जी से इन दोनों राजकुमारों की याचना की मैं कितना निर्दय हूँ॥३२॥

**दशरथोऽगणयन् दशमीं दशां स दशमं निगमो यतये यथा।**
**सुतयुगं प्रददौ दयितं हि मे न रघवो हि निराकृतयाचकाः॥३३॥**

**कृपा टीका**—जिस प्रकार वेद त्रिदण्डी संन्यासी को दशमस्त्वमसि (श्रुति के तात्पर्य)

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दशम ब्रह्म प्रदान कर देता है। उसी प्रकार दसवीं दशा अर्थात् मृत्यु की कोई चिन्ता न करते हुए महाराज दशरथ जी ने मुझे अपने दोनों प्यारे पुत्र दे दिये क्योंकि रघुवंशी लोग कभी याचकों को तिरस्कृत करके नहीं लौटाते॥३३॥

**बलनिधी गुणमन्दिरसुन्दरौ जलदहाटकमञ्जुमहाद्युती।**
**अनुगताविव मां मधुमाधवौ दिशमितं शमितं रविमुत्तराम्॥३४॥**

**कृपा टीका**—हे महाराज उत्तर दिशा को प्राप्त परम शान्त सूर्यनारायण का जैसे चैत्र वैशाख मास अनुगमन करते हैं उसी प्रकार बल के खजाने गुणों के सुन्दर मंदिर बादल और सुवर्ण के समान शोभावाले ये दोनों अलौकिक बालक मेरा ही अनुगमन कर रहे हैं॥३४॥

**कलितकेलिशरासनसायकौ शुभशिखण्डधरौ रघुनायकौ।**
**समरमूर्धनि नाशितनैरतौ मम मखं ससुखं समरक्षताम्॥३५॥**

**कृपा टीका**—हे महाराज खिलौने के धनुष बाण लिये हुए मोरपिच्छधारी रघुनायक रामलक्ष्मण युद्धभूमि में राक्षसों को मारकर मेरे यज्ञ की सानंद रक्षा कर चुके हैं॥३५॥

**पथि प्रपूय पदाम्ब्जपरागकैर्मुनिवधूं कमनीयकलेवराम्।**
**रघुवरोऽथ धनुर्मखदर्शनोत्सुक इहागत एष स लक्ष्मणः॥३६॥**

**कृपा टीका**—हे महाराज मार्ग में अपने चरणकमल के परागों से मुनिप्पत्नी अहल्या को पवित्र एवं सुन्दर शरीरवाली बनाकर लक्ष्मण जी के सहित ये प्रभु श्रीराम धनुर्यज्ञ देखने की उत्सुकता से यहाँ पधारे हैं॥३६॥

**इति निवेद्य मुनौ विरते रते प्रभुपदाम्बुजयो स जयोचितम्।**
**रघुपतिं परिपूज्य पुराणवित् समनयन् नयनैकफलं गृहम्॥३७॥**

**कृपा टीका**—इस प्रकार कहकर प्रभु के श्रीयुगल चरणकमल में भक्तिमान महर्षि विश्वामित्र जी के चुप हो जाने पर पुराणवेत्ता जनकजी नेत्रों केएकमात्र फल रघुपति श्री राम को सम्मानित करके विजयोचित विभूति के रूप में उन्हें राजभवन ले आये॥३७॥

**अथ विदेहपुरीं पुरुषोत्तमो ललितलक्ष्मणलालसयेरितः।**
**अनुमतो गुरुणाभिमतो गतः स जगतां जगतां प्रभुरीक्षितुम्॥३८॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—इसके अनंतर सभी प्राणियों के प्रिय तथा सभी जड़चेतनों के स्वामी पुराणपुरुषोत्तम प्रभु श्रीराम सलोने लक्ष्मणलाल की नगरदर्शन लालसा से प्रेरित होकर गुरुदेव की अनुमति पाकर जनक नगर देखने को पधारे॥३८॥

**जलजसुन्दरनीलकलेवरो वरधर्नुधरधुर्यसमर्चितः॥**
**मलयमञ्जुलचन्दनचर्चितः परिवृतो महसेवमहैर्वृतः॥३९॥**

**कृपा टीका**—कमल के समान सुन्दर नीले से विग्रह वाले श्रेष्ठ धनुर्धर धुरीणों से भी पूजित मलयचंदन से सुशोभित उत्सवों से घिरे हुए मानो तेज से अलंकृत प्रभु नगरदर्शन को पधारे॥३९॥

**करिकराभकरे वरकार्मुकं श्रितशरं सशरं धृतिमान् धरन्।**
**कटितटे च निषङ्गमिवात्मना समनसा प्रणवं परमात्मवित्॥४०॥**

**कृपा टीका**—जिस प्रकार परमात्म वेत्ता अहम और मन के साथ ओंकार को नियंत्रित करके धारण करता है उसी प्रकार धैर्यशील श्रीराम हाथी के सूँड के समान अपने दोनों कर कमलों में धनुषबाण तथा कटितट पर अक्षय बाणों से भरे हुए तिरकस को धारण करके मिथिला दर्शन को पधारे॥४०॥

**विपुलवक्षसि मौक्तिकमालिका परिललास परा परमात्मनः।**
**गजमुखो धृतमौक्तिकविग्रहो हरिमुपासितुमेव किमागतः॥४१॥**

**कृपा टीका**—परमात्मा के विशाल वक्षस्थलपर श्रेष्ठ मोतियों की माला बहुत सुन्दर लग रही थी, क्या स्वयं भगवान गणेश ही मौक्तिकमाला का रूप धारण करके प्रभु की उपासना करने के लिए यहाँ उपस्थित हुए॥४१॥

**किमुत वैष्णवयुक्तमहात्मनां चय इवाश्रितमौक्तिकदेहभाक्।**
**वृहदुरस्यथ लक्ष्मणपूर्वजं कृतनिवास इमं रमयत्यहो॥४२॥**

**कृपा टीका**—क्या श्रीवैष्णवजीवनयुक्त महात्माओं का समूह ही मौक्तिक माला बनकर भगवान के विशाल वक्षस्थल पर निवास करके लक्ष्मण जी के बड़े भैया प्रभु श्रीराम को तो नहीं रमा रहा है॥४२॥

**पथि विराजति राजसुतोत्तमे भुवनमंगलधाम्नि सलक्ष्मणे।**
**प्रमुदिता शिशवः समुपाययुः शशिनि किन्न चकोररतिर्भवेत्॥४३॥**

**कृपा टीका**—मिथिला के राजमार्ग पर सम्पूर्ण संसार के मंगलमंदिर श्रेष्ठ

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

राजकुमार प्रभु श्रीराम के लक्ष्मण जी के साथ विराजमान होते ही जनकपुर के बालक प्रसन्नता से समीप आ गये। भला चन्द्रमा में चकोरों का राग क्यों नहीं होगा?॥४३॥

**विविधवेषधराः सरलाः स मे क्रमविवर्जितभाषणशालिनः।।**
**गतभया परिषस्वजिरे हरिं सरलता महतां हि विभूषणम्।।४४।।**

**कृपा टीका**—अनेक वेषभूषा से सुसज्जित सीधे साधे बिना क्रम के वाक्य बोलते हुए सभी मैथिलबालक निर्भीक होकर प्रभु को आलिंगन करने लगे। क्योंकि सरलता ही महापुरुषों का आभूषण है॥४४॥

**अहह दाशरथी मिथिलापुरीं ससुखमागतयोर्युवयोर्वयम्।**
**प्रकरवाम सुवस्तु निदर्शनां भुवनभूषणता भवतोर्यतः।।४५।।**

**कृपा टीका**—अहो, दशरथ राजकुमारो! मिथिला में सुखपूर्वक पधारे हुए आप दोनों को हम सुन्दर वस्तु दिखा सकते हैं क्योंकि आप ही दोनों संसार के आभूषण हैं॥४५॥

**इत इतो रघुनन्दन ईक्षतामशिथिला विमला मिथिलापुरी।**
**कलिततोरणवज्रकपाटिका सुजनपापकदम्बविपाटिका।।४६।।**

**कृपा टीका**—हे रघुनंदन इधर देखिए, इधर देखिए यह मिथिलापुरी बड़ी ही सक्रिय निर्मल हीरों के किवाड़ों से शोभित तथा सज्जनों के पापसमूह को नष्ट करने वाली है॥४६॥

**मिथमियं विलुनाति भयावहं मथति पातकपुञ्जमसौ सताम्।**
**मिथमहीपतिना विहितापुरा अत इयं मिथिला परिगीयते।।४७।।**

**कृपा टीका**—हे राघव! यह संसार के अशास्त्रीय तथा भगवद्भजन बाधक अमर्यादित भयंकर संयोगों को नष्ट कर देती है और यह सन्तों के पापसमूह को भी समाप्त कर देती है इसे महाराज मिथ ने बहुत पहले बसाया था इसीलिये इसे मिथिला कहकर गाते हैं॥४७॥

**सुरसरित्पयसैव पवित्रिता विमलगण्डकिवीचिविलासिता।**
**हिमगिरेरधिराजदुपत्यकं धृतपदा मिथिला भुवि शोभते।।४८।।**

**कृपा टीका**—हे राघव! हिमालय की उपत्यका में विराजमान गंगाजी के जल से

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पावन गण्डकी जी की लहरों के विलास से अलंकृत यह मिथिलापुरी पृथ्वी की एक शोभा है।४८॥

इह विलोकय दुग्धमतीं नदीं विदधतीं गुणतश्च मुधा सुधाम्।
दुहितरं परिपालयितुं भुवा प्रकटितां कटितां पयसाहिताम्॥४९॥

**कृपा टीका**—हे श्रीराम यहाँ देखिए अमृत को भी अपने जल के स्वाद से फीका करनेवाली दूधमती नदी को अपनी पुत्री सीता जी का पालन करने के लिए पृथ्वी के द्वारा इन्हें प्रकट किया गया और ये द्रवित हुईं तथा जलरूप वस्त्र के साथ प्रवाहित भी हुईं॥४९॥

सुनयना पयसः प्रथमं प्रभो वसुमतीतनया सनयानया।
निजपयोभिरतोषि ततः सुरैरभिहिता भुवि दुग्धमती सती॥५०॥

**कृपा टीका**—हे भगवन् परमनीतिमती पृथ्वीपुत्री सीताजी को सुनयना जी के दुग्धपान से पहले ही इसी नदी ने अपने दूध से संतुष्ट किया था अर्थात् सीताजी ने पहले इन्हीं का दूध पिया इसीलिए देवताओं ने पृथ्वी पर इन्हें दुग्धमती नाम से पुकारा॥५०॥

इदमथो परिलोकय लोकपस्पृहितवासविलासमनोरमम्।
जनकराजगृहं विलसद्गृहं सुनयनादिवधूभिरलंकृतम्॥५१॥

**कृपा टीका**—हे प्रभो लोकपालों द्वारा भी जिसके मनोहारी वास और विलास की स्पृहा की जाती है ऐसे अनेक उपभवनों से सुसज्जित सुनयना आदि महारानियों से सुशोभित योगिराज जनक के इस राजभवन को देखिए॥५१॥

इदमखण्डितदीपमणिप्रभं सुभवनं भगवन् भवतेक्ष्यताम्।
सुनयना नयनाम्बुधिकौमुदी कनति काचिदयोनिजकन्यका॥५२॥

**कृपा टीका**—हे भगवन्! यह अखण्डित मणिदीप की प्रभा से जगमगाता हुआ सुन्दर भवन तो आप कृपया देखिए। इसी भवन में सुनयना महारानी के नेत्र महासागर की चन्द्रिका एक अयोनिजा कन्या खेलती हुई सदैव प्रकाशमान रहती है॥५२॥

भुवमिमां हलतः परिशोधयन् समधिगम्य महीपमणिर्मुदा।
सुनयनामनया सममानयत् तनय एव मतिं परविद्यया॥५३॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे महाराज कुमार! अपने हल़ से पृथ्वी का परिशोधन करते हुए इन्हीं सीताजी को प्राप्त करके जनक जी ने ब्रह्मविद्या द्वारा बुद्धि के समान इन्हीं अयोनिजा पुत्री सीताजी से महारानी सुनयना जी का सम्मान किया था॥५३॥

**इयमनुत्तमपादपमण्डिता लसति मैथिलवल्लभवाटिका।**
**विहरतीह हरारिसखः सदा कुसुमपल्लवसौरभसम्पदा॥५४॥**

**कृपा टीका**—ये देखिए सुन्दर वृक्षों से सुशोभित सीताजी की प्रिय वाटिका यहाँ पुष्पों और पल्लवों की सुगंध की सम्पत्ति के साथ भगवान शंकर के शत्रु कामदेव का मित्र वसंत यहाँ निरन्तर विहार करता रहता है॥५४॥

**अधिनिकुञ्जमिहावनिबालिकासशुकगार्गितनूः शुकसारिका।**
**कनकसुन्दरमञ्जुलपञ्जरे समनुपाठ्यते सुकुमारिका॥५५॥**

**कृपा टीका**—हे राजकुमार इसी वाटिका के निकुञ्ज में शुकदेव एवम् गार्गी स्वरूप तोता एवं मैना को सुकुमारी पृथ्वीपुत्री सीता जी स्वर्ण के पिंजड़े में पालकर श्रीवैष्णव सिद्धान्त पढ़ाती हैं॥५५॥

**श्व उषसीह महीसुतया तया निजकरग्रहपूर्वदिने मुदा।**
**कनकमन्दिरमध्यगता शिवा सविधि पूजयिता गिरिजासती॥५६॥**

**कृपा टीका**—हे राजपुत्र अपने स्वयं के पूर्वदिवस अर्थात् कल प्रातःकाल पृथ्वीपुत्री सीताजी इसी वाटिका के मध्य कनकमंदिर में विराजमान श्रीपार्वती जी की विधिवत् पूजा करेंगी॥५६॥

**इत इतः पुरतः पुरतो धनुर्मखगृहं जनकस्य धनुर्यतः।**
**अहमिवैतदहो तनुमानिभिः सुमहितं सहितं मिथिलाधिपैः॥५७॥**

**कृपा टीका**—हे राघवेन्द्र यहाँ आइये यहाँ आइये यह देखिए मिथिलापुर के पूर्व में विराजमान है जनकराज की यह धनुर्यज्ञशाला जहाँ रखा हुआ शिवधनुष देहाभिमानी लोगों द्वारा अहंकार के समान ही मैथिल राजाओं द्वारा प्रेमपूर्वक पूजा जाता है॥५७॥

**धनुरिदं गिरिशस्य निरीक्ष्यतां जडितपूर्वमदो युधि शार्ङ्गिणा।**
**क्षपितभूपबलं पतितं भुवि प्रथितभैरवमन्दरगौरवम्॥५८॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे भगवन्! शंकर भगवान का यह धनुष देखिए इसीको बहुत पहले युद्ध में भगवान विष्णु ने जड़ बना दिया था। इसमें सुमेरु एवं मन्दराचल का वजन है तथा इसने असंख्य राजाओं का बल समाप्त किया है फिर भी पृथ्वी पर पड़ा है॥५८॥

**यदसुरा न सुरा न च किन्नरा न दनुजा मनुजा न कदाचन।**
**चलयितुं तिलमात्रमपि क्षमाः कुविषया न महात्ममनो यथा॥५९॥**

**कृपा टीका**—जिस प्रकार विषयी लोग महात्मावों का मन नहीं डिगा पाते उसी प्रक़ार जिस धनुष को असुर, देवता, किंनर, दैत्य, मनुष्य कभी भी तिलमात्र भी नहीं हिला सके॥५९॥

**तदिदमीशधनुर्धरणीसुता करजकन्दुकितं कमलेक्षणा।**
**करसरोजपुटेन मनस्विनी कुतुकतो बहुशः समनर्तयत्॥६०॥**

**कृपा टीका**—उसी शिव धनुष को अपनी अँगुलियों की गेंद बनाकर कमलनयनी पृथ्वीपुत्री सीताजी ने करकमल के करतल से उठाकर खेल खेल में बार बार नचाया॥६०॥

**इति निदर्शपुरं पुरुषोत्तमं पुलकिताः परमं परिरेभिरे।**
**मधुरमूर्तिमयं रघुनन्दनं सदसवः शिशवः शिशुचन्दनम्॥६१॥**

**कृपा टीका**—इस प्रकार नगर निखाकर श्रेष्ठ प्राणोंवाले मिथिला के बालकों ने पुलकित होकर परम पुरुषोत्तम शिशुओं को आह्लादित करनेवाले श्रीरामका आलिङ्गन कर लिया॥६१॥

**रघुवरोऽपि विभाव्य विभाकरं जिगमिषुं निजविश्रमणं गिरिम्।**
**शिशुगणांश्च विसर्ज्य विसर्गवित् समगृणादनुजं रिपुहानुजम्॥६२॥**

**कृपा टीका**—विसर्गवेत्ता भगवान् श्रीराम भी सूर्यनारायण को अस्ताचल जाने के लिए इच्छुक देखकर बालकों को विदा करके शत्रुघ्न के बड़े भाई किन्तु स्वयं के छोटे भाई श्रीलक्ष्मण जी से बोले॥६२॥

**ललितलक्ष्मण लक्षय पश्चिमामनुपमानुपमामुपमामुमाम्।**
**रविकरैररुणां नववल्लभां स्वपतिनारमितामिव कुंकुमैः॥६३॥**

**कृपा टीका**—हे लक्ष्मण उपमारहित और उत्तम एवम् उपकृत छवि से युक्त

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

लक्ष्मी के समीप विराजमान साक्षात् पार्वती जैसी अरुण वस्त्र धारण की हुई अपने पति सूर्यनारायण द्वारा कुंकुमलेप के द्वारा आनंदित की हुई सूर्यकिरणों से अनुरंजित ऐसी पश्चिम दिशा को निहारो॥६३॥

**रसितरश्मिरथो रथिनां रथोपरि वरो विचकास्ति विभास्वरः।**
**कमलिनीरमणी कुचकुंकुमारुणिमचारुकरोऽथ नभश्चरः॥६४॥**

**कृपा टीका**—हे लक्ष्मण! रसमय किरणोंके रथवाले रथियों में श्रेष्ठ दिव्यरथ के ऊपर कमलिनी रूपिणी नायिका के वक्ष के कुंकुम से रंगे हुए अरुण किरण रूप हाथ से युक्त आकाशचारी श्रेष्ठ सूर्यनारायण बहुत शोभित हो रहे हैं॥६४॥

**वियति भूरिविहृत्य पयोजिनीप्रियकरो रसरञ्जितरश्मिमान्।**
**अभिसरन्निव मञ्जुलमण्डलो दिशमुदञ्चति सम्प्रति पश्चिमाम्॥६५॥**

**कृपा टीका**—आकाश में बहुत भ्रमण करके कमलिनी को सुख देकर उसके पराग से रंगी हुई किरणों वाले सूर्य नारायण इस समय मानो अभिसार करते हुए मधुर मण्डलाकार होकर पश्चिम दिशा की ओर जा रहे हैं॥६५॥

**कमलिनीं विरहेण सयोजयन् स्वभगिनीं रजनीमिवमानयन्।**
**मुखरयन् वयसां च कुटुम्बकं दिनकरोऽवति पश्चिमपर्वतम्॥६६॥**

**कृपा टीका**—कमलिनी को विरह से युक्त करते हुए बहिन के समान रात्रि का सम्मान करते हुए पक्षी समूह को मुखरित करते हुए सूर्य नारायण पश्चिम पर्वत की ओर जा रहे हैं॥६६॥

**अभिमुखो ननु पश्चिमसागरं रविरभूल्लघुशीतकरः किल।**
**अनुसरन्निव पश्चिमसभ्यतां क्षपितशर्ममहो मनुजाधमः॥६७॥**

**कृपा टीका**—हे लक्ष्मण जैसे पश्चिमी सभ्यता का अनुकरण करता हुआ दुष्ट मनुष्य सुख और उत्सव से शून्य हो जाता है उसी प्रकार सूर्यनारायण पश्चिम सागर की ओर आकर टेढ़े और छोटी किरणवाले हो गये हैं॥६७॥

**अथ गुरुं समुपेत्य तदाज्ञया विहितसान्ध्यविधिर्विधिकोविदः।**
**जनकजागुणचिन्तनतत्परो निशमिमामनयत् क्षणकल्पिकाम्॥६८॥**

**कृपा टीका**—इसके अनंतर वैदिक विधानों में निष्णात भगवान श्रीराम ने गुरुदेव के पास आकर उनकी आज्ञा से संध्या वंदन करके सीताजी के गुणों का चिन्तन

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

करते हुए उस रात्रि को एक क्षण के समान बिताया॥६८॥

प्रातरुत्थाय रामो रमावल्लभः
कौशिकानुज्ञया योगिनां दुर्लभः।
बन्धुनेवर्तुराजेन पुष्पायुधः
पुष्पहेतोर्गतो जानकीं वाटिकाम्॥६९॥

**कृपा टीका**—योगियों के लिए दुर्लभ महालक्ष्मीपति भगवान श्रीराम प्रातः उठकर लक्ष्मण जी के साथ पुष्प चयन के लिए वसंत के साथ कामदेव के समान जनकराज की वाटिका में पधारे॥६९॥ यहाँ से श्लोक ९८ तक स्रग्विणी छन्द है।

कोकिलाकाकलीभिः कलं कूजिताम्
सद्विहंगावलीभिः पुनः पूजिताम्।
रम्यराजीवराजीवशैः षट्पदै
र्मञ्जुमानन्ददानं द्रुतं गुञ्जिताम्॥७०॥

**कृपा टीका**—कोकिलाओं की वाणी से शब्दायमान श्रेष्ठ पक्षियों के समूह से सतत सम्मानित सुन्दर कमलसमूहों के वशवर्ती भ्रमरों द्वारा लक्ष्मी जी के आनंददान के साथ बार बार गुंजित वाटिका में श्रीराम जी पधारे॥७०॥

पादपाः पल्लवाढ्याः सुपुष्पाः फलव्रातकाः पारिजाता इवा जातकाः।
राजिता नान्दनीं सम्पदं सम्पदा व्रीडयन्तो हि राजन्ति ते सर्वदा॥७१॥

**कृपा टीका**—वहाँ के वृक्ष, पल्लवों से युक्त पुष्पित फलों से लदे हुए स्वर्ग से उतरे हुए पारिजात वृक्ष जैसे अपनी अलौकिक सम्पत्ति से नंदन वन की सम्पदा को भी लज्जित करते हुए विराज रहे थे॥७१॥

वाटिकामध्यतस्तोयजालीलसन्मञ्जुमाद्यन्मयूरेन्द्रशुभ्रं सरः।
मैथिलीस्नानदिव्याम्भसा पूरितं हंसपारावतैः सन्ततं कूजितम्॥७२॥

**कृपा टीका**—बाटिका के मध्य में कमलों पर मंडराते हुए मतवाले भ्रमरों से तथा मयूरों से सुशोभित तथा जानकी जी के स्नान से पवित्र जल से पूर्ण हंस तथा पारावतों से शब्दायमान एक सुन्दर सरोवर था॥७२॥

वीक्ष्य वापीं तटागं तथा वाटिकां मञ्जुनृत्यं मयूरं वनं पावनम्।
लोकलोकाभिरामो रमावल्लभो रामचन्द्रोऽपि रेमे समं बन्धुना॥७३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—इस प्रकार बावड़ी तालाब, वाटिका एवं मयूरों का नृत्य एवं सुन्दर उपवन देखकर संसार के नेत्रों को आनंद देने वाले भगवान श्रीराम भी लक्ष्मण जी के साथ वहीं रम गये॥७३॥

**मालिनासंस्तुतो मञ्जुमाली भुवो वाटिकायाः करे द्रोणिकां धारयन्।**
**पुष्पपूगं विचिन्वन् विभुश्चिन्तयन् जानकीदर्शनौत्सुक्यलोलन्मनाः॥७४॥**

**कृपा टीका**—पृथ्वीरूप वाटिका के सुन्दर माली भगवान श्रीराम माली की अनुमति से हाथ में दोना लेकर पुष्पों का चयन करते हुए जानकी जी के दर्शन की उत्सुकता से चञ्चल मन के साथ चिन्तन करने लगे॥७४॥

**तत्क्षणे संक्वणत्किङ्किणीनूपुरारावराजद्दिगन्ता सुदन्तप्रभा।**
**भूषणैर्भूषिता मातृसम्प्रेषिता पार्वतीपूजनायागता मैथिली॥७५॥**

**कृपा टीका**—उसी समय बजती हुई किंकिणीऔर नुपूर के शब्द से सम्पूर्ण दिगन्त को शब्दायमान करती हुई आभूषणों से सुसज्जित सीताजी माँ सुनयना जी के भेजने पर पार्वती पूजन के लिए वहाँ पधारीं॥७५॥

**कामवामाविभाव्रीडितेन्दुप्रभा भव्यनीलाम्बरा स्त्रीवरा स्रग्विणी।**
**मत्तमातङ्गिनी हंसिनी गामिनी भामिनी भाविभान्तीव सौदामिनी॥७६॥**

**कृपा टीका**—रात्रि के समान सुन्दर, चन्द्रमा की कान्ति को लज्जित करने वाली, नील वस्त्र धारण की हुई, नारी श्रेष्ठ, दिव्यमाला से युक्त, गजशावक और हंस की भाँति चलनेवाली सुलक्षणा सीताजी बिजली की भाँति प्रकाशमान हो रही थीं॥७६॥

**चम्पकाभास्मितज्योत्स्नया भासिता भूषिता दिव्यभूषाम्बरै वर्णिनी।**
**पद्मपद्भ्यां चलन्ती लसन्ती रुचा कोटिकोटीर्हसन्ती रतीः स्वत्विषा॥७७॥**

**कृपा टीका**—चम्पा के समान शोभावाली मुस्कान की चन्द्रिका से सुशोभित दिव्य भूषणों और वस्त्रों से सजी हुई पतिंवरा सीताजी अपने चरणकमलों से धीरे धीरे चलती हुई अलौकिक प्रकाश से प्रकाशित होती हुई अपनी शोभा से करोड़ों रतियों का भी उपहास कर रहीं थीं॥

**आननं चुम्बितुः स प्रयत्नानिव स्निग्ध केशान्रुषा वारयन्ती सती।**
**कोटिलक्ष्मी विभां बिभ्रती धीमती श्रीमती श्रीःश्रियो राघव प्रेयसी॥७८॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—अपने मुख का प्रयासपूर्वक स्पर्श करते हुए नीले केशों को बारबार ऊपर करती हुई करोड़ों लक्ष्मियों की कान्ति धारण करती हुई प्रशस्त बुद्धिवाली अलौकिक शोभावती श्री की भी श्री श्रीराम की प्रिया सीताजी पुष्पवाटिका में आयीं॥७८॥

**स्वाभिरष्टाभिरीड्यप्रभाभिः सुखं सेव्यमाना यशो गीयमाना मुदा।**
**मञ्जु मञ्जीरसिञ्जत् पदा प्रस्थिता सुस्थिता संयमे धारणेयी बभौ॥७९॥**

**कृपा टीका**—स्तुति योग्य कान्ति वाली अपनी आठ सखियों द्वारा सेवित तथा उन्हीं के द्वारा अपनी यशोगान का विषय बनती हुई मधुर मधुर नूपुर के स्वर से झंकृत चरणों से चलती हुई कन्योचित संयम में स्थित पृथ्वीकन्या सीताजी शोभित हो रही थीं॥७९॥

**रामचन्द्रोऽपि तां दृष्टवान् पार्थिवीं दूरतो दुर्विभाव्यां सतां चेतसाम्।**
**वल्लभां श्रीश्रियं श्रेयसीं प्रेयसीं मञ्जुराजीव दृग्भ्यां सतृष्णं प्रभुः॥८०॥**

**कृपा टीका**—भगवान श्रीरामचन्द्र ने भी सज्जनों के चित्त के चिन्तन से भी बहुत दूर श्री की भी श्री कल्याणकारिणी प्रियतमा वल्लभा पृथ्वीनन्दिनी जानकी जी को बहुत दिनों के प्यासे मधुर अरुण कमलनयनों से दूर से निहारा॥८०॥

**दीपयन्ती दिगन्तं दिवो दीपिका रामचेतःकुरङ्गं कुरङ्गेक्षणा।**
**कोसलाधीशचक्षुश्चकोरास्पदं स्वाननेन्दुं समारोपयत् पार्थिवी॥८१॥**

**कृपा टीका**—दिगन्त को प्रकाशित करती हुई साकेतलोक की दीपिका मृगनयनी भूमिपुत्री सीताजी ने कोसलाधिपति श्रीराम जी के नेत्र चकोरों के आश्रय अपने मुखचन्द्र को श्रीरामजी के चित्तरूप मृग वाहन पर आरुढ़ कर दिया॥८१॥

**यस्य योषा कटाक्षेषुभिर्नोमनो विव्यथे क्वापि विद्धं प्रवृद्धात्मकम्।**
**तस्य रामस्य तद्भृङ्गितं मानसं निघ्नमासीन् महीजाननाम्भोरुहे॥८२॥**

**कृपा टीका**—जिन श्रीराम का मन कभी भी नारियों के कटाक्ष वाणों से अध्यात्म सुख की समृद्धि के कारण नहीं बिद्ध हुआ उन्हीं श्रीराम का मनमधुप सीताजी के मुखकमल के अधीन हो गया और वहीं मँडराने लगा॥८२॥

**वीक्ष्यमाणो दृशा राजकन्यां रहो राजसूनूरसेशाम्बुधेश्चन्द्रिकाम्।**
**स्वञ्च सस्मार साकेतलोकोचितं नेत्रयोर्निनिमेषत्वमत्र क्षणे॥८३॥**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—निभृत निकुञ्ज में श्रृंगाररस महासागर की चन्द्रिका के समान जनकराज पुत्री सीताजी को निहारते हुए राजकुमार श्रीराम ने साकेतलोक में प्राण नेत्रों की निर्निमेषता को भूलोक में भी स्मरण कर लिया अर्थात् जैसे देवाधिदेव होने के कारण साकेतलोक में भगवान श्रीराम की पलकें नहीं गिरतीं उसी प्रकार की भावना का स्मरण करने से मनुष्यावतार में भी सीता जी के निरीक्षण के समय श्रीराम की पलकें नहीं गिरीं॥८३॥

**कापि कादम्बरी कापि कादम्बिनी कापि सौदामिनी कापि भा भामिनी।**
**एवमेषा शुभोत्प्रेक्षिकाभिः प्रिया प्रेक्षिता प्रेयसा प्रेक्षण प्रेयसी॥८४॥**

**कृपा टीका**—अरे यह कोई प्रेम की मदिरा है अथवा यह कोई सौन्दर्यजलधारा की मेघमाला अथवा क्या संसार की सम्पूर्ण आभा ही नारी बन गयी है अथवा क्या बिजली ही शरीर धारण करके वाटिका में भ्रमण कर रही है इस प्रकार अनेक सुन्दर उत्प्रेक्षाओं से उत्प्रेक्षित करके श्रीराम ने दर्शन में प्रिय लगनेवाली प्राणप्रिया सीताजी का प्रेक्षण किया॥८४॥

**वीक्ष्य तां वीक्षणीयाम्बुजास्यश्रियं स्वश्रियं श्री श्रियं ब्रह्मविद्या श्रियम्।**
**धीधियं ह्री ह्रियं भूभुवं भूभुवं राघवः प्राह सल्लक्षणं लक्ष्मणम्॥८५॥**

**कृपा टीका**—इस प्रकार दर्शनीय कमल के समान मुखशोभावाली ब्रह्मविद्या की भी शोभा लक्ष्मी की भी लक्ष्मी बुद्धि की भी बुद्धि लज्जा की भी लज्जा पृथ्वी की भी पृथ्वी अर्थात् अनादिसत्ता अपनी महालक्ष्मी भूमिनंदिनी सीताजी को देखकर श्रीराघव ने श्रेष्ठ लक्षणोंवाले लक्ष्मण जी से कहा॥८५॥

**वीक्ष्यतां वीक्षणीया कुमारीवरा वाटिकां भासयन्ती तनुज्योतिषा।**
**रत्नदीपस्य साध्वी शिखेवामला देवतेवैति चाराममिन्दूज्ज्वला॥८६॥**

**कृपा टीका**—हे लक्ष्मण! मणिदीप की निर्मल शिखा की भाँति वाटिका को प्रकाशित करती हुई इस दर्शनीय कुमारी को देखो। चन्द्र के समान उज्ज्वल हासवाली यह कन्या देवता जैसी इस उद्यान में पधार रही हैं॥८६॥

**सेयमम्भोरुहाक्षी विदेहात्मजा यत्कृते चापयज्ञः समायोजितः।**
**दक्षिणा यस्य सीतैव सङ्कल्पिता वीर्यशुल्का धनुर्भञ्जिने यज्वने॥८७॥**

**कृपा टीका**—हे लक्ष्मण यही कमलनयनी जनकराजपुत्री हैं जिनके लिए इस धनुष

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

यज्ञ का आयोजन किया गया है। इस धनुष को तोड़नेवाले यज्वा के लिए पराक्रम के शुल्क से प्राप्त सीताजी ही दक्षिणारूप में संकल्पित की गयी हैं। अर्थात् धनुष तोड़नेवाले के साथ ही सीताजी का ब्याह होगा॥८७॥

**अद्य पूर्वे दिने पाणिपीडाविधेः पार्वतीमर्चितुं सानुगासागता।**
**द्योतयन्ती दिशो वाटिकां भामिनी दिव्य दीपप्रभेवार्चिषा चिन्मयी॥८८॥**

**कृपा टीका**—हे लक्ष्मण दीपप्रभा की भाँति दिशाओं और वाटिका को प्रकाशित करती हुई परम चिन्मयी सम्माननीय सीताजी आज स्वयंवर के प्रथम दिन आज सखियों के सहित पार्वती जी की पूजा करने पधारी हैं॥८८॥

**एतादास्येशरच्चारुचन्द्रप्रभे लोचने मे चकोरायिते लक्ष्मण।**
**नो जिहासेत्क्षणं भृङ्गभूतं मनस्तन्मुखाम्बोरुहस्यासवं वै नवम्॥८९॥**

**कृपा टीका**—हे लक्ष्मण शरदकालीन पूर्णचन्द्र के समान इनके मुख के मेरे नेत्र चकोर हो गये हैं इनके मुखकमल के नवीन मकरन्द को मेरा मनमधुप एक क्षण के लिए भी त्यागना नहीं चाहता॥८९॥

**किंनिमित्तं मनोऽस्यां स्पृहावद्धि मे जैत्र! जागर्ति रागो ममास्यां कथम्।**
**चातकस्येव बन्धो पयोदस्रजि प्रौढ़भृङ्गस्य भावो नलिन्यां यथा॥९०॥**

**कृपा टीका**—हे विजयशील लक्ष्मण जिस प्रकार मेघमाला में चातक का राग होता है तथा जिस प्रकार युवक भ्रमर का कमलिनी के प्रति आकर्षण होता है ठीक उसी प्रकार मेरा मन किस कारण से इनमें स्पृहा कर रहा है और मेरा इनमें क्यों इतना राग है॥९०॥

**नूनमत्रास्ति किञ्चित् विधात्रे हितं नान्यथा मन्मनोऽस्यां प्रवृत्तं भवेत्।**
**स्वप्नकालेऽपि मन्मानसाम्भोधिजो नान्यनारीनलिन्यां स्पृहामावहेत्॥९१॥**

**कृपा टीका**—निश्चित इस प्रसंग में ब्रह्माजी ने कुछ गोपनीय चेष्टा कर ली है नहीं तो सीताजी में मेरा मन प्रवृत्त न होता क्योंकि स्वप्नकाल में भी मेरा मनश्चन्द्र परनारीरूप कमलिनी में स्पृहा धारण कर ही नहीं सकता॥९१॥

**इत्थमाकर्ण्य विश्वैकभर्तुर्वचो लक्ष्मणो नैव किञ्चिज्जगादोत्तरम्।**
**सस्मितं वीक्ष्य सीता पदाम्भोरुहं भ्रातृजायां ववन्दे स्वमातुर्धिया॥९२॥**

**कृपा टीका**—इस प्रकार त्रैलोक्यनाथ प्रभु श्रीराम का वचन सुनकर लक्ष्मण जी

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ने मुस्कुराते हुए कुछ भी उत्तर नहीं दिया उन्होंने सीताजी के चरणकमलों को देखकर अपनी भाभी को मातृबुद्धि से वंदन किया॥९२॥

**भूमिजा भूमिभूयिष्ठभारं हरिं सञ्जिहीर्षन्तमत्रागतं मैथिली।**
**राघवं मञ्जुकुञ्जे लतामन्दिरे रम्यराजीवदृग्भ्यां समर्चन् मुदा॥९३॥**

**कृपा टीका**—भूमि पुत्री जानकी जी ने पृथ्वी के अपार भार को हरण करने की इच्छा से भूलोक में पधारे हुए श्रीहरि साकेतबिहारी भगवान रामचन्द्र जी को सुन्दर कुञ्ज में प्रतिष्ठित लतानिर्मित मंदिर में अपने नेत्रकमलपुष्पों से प्रेमपूर्वक समर्चित किया अर्थात् प्रभु को निहारकर ही उनकी मानसी पूजा कर ली॥९३॥

**कोटिकन्दर्पदर्पघ्नमिन्दीवरश्यामलं कोमलं निर्मलं सद्बलम्।**
**विश्ववारान्निधेर्मन्दरं सुन्दरं भीहरं भूधरं श्रेयसां मन्दिरम्॥९४॥**

**कृपा टीका**—करोड़ों कामदेवों के गर्व को नष्ट करनेवाले, नीलकमल के समान श्यामल, कोमल, निष्कलंक, सज्जनों के बलस्वरूप, संसारसागर को मथने के लिए मन्दराचल अत्यन्त सुन्दर, भक्तभयहारी, पृथ्वी को धारण करने वाले, समस्त कल्याणों के मंदिर श्रीरामजी की सीताजी ने मानसी पूजा की॥९४॥

**सर्वलोकैककान्तं सदा सुस्मितं राममात्माभिरामं सुखाम्भोनिधिम्।**
**वीक्षमाणा समानं प्रभुं सानुजं नैव तृप्तिं जगामावनेयी चिरम्॥९५॥**

**कृपा टीका**—सम्पूर्ण लोकों में एकमात्र सुन्दर निरंतर हँसमुख सुख के सागर परमसमर्थ आत्माओं को आनंदित करनेवाले छोटे भाई सहित श्रीराम को निहारती हुई पृथ्वीपुत्री सीताजी चिरकाल तक तृप्त नहीं हुईं॥९५॥

**वीक्ष्य वीक्षावतां वीक्षणानां फलं भक्तिमद्वत्सलं निर्बलानां बलम्।**
**सा चकोरी किशोरीव भौमी शरच्चारुराकाविधुं वीक्षतेस्मादरात्॥९६॥**

**कृपा टीका**—नेत्रवान जनों के नेत्र के फल, भक्तवत्सल, निर्बलों के बल, श्रीराम को बारम्बार देखकर भी शारदी पूर्णिमा के चन्द्रमा को चकोरकन्या की भाँति भूमिनंदिनी सीताजी श्रीराम को आदरपूर्वक देखती ही रहीं॥९६॥

**प्रेमपाथोनिधौ धैर्यनौकां सती मज्जयित्वा विदित्वा स्वकान्तं प्रभुम्।**
**प्राणनाथं जगन्मङ्गलं माबलं मानसे षष्वजे जानकीजीवनम्॥९७॥**

**कृपा टीका**—सती शिरोमणि सीताजी ने अपनी धैर्यरूप नौका को प्रेमसागर में

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

डुबोकर अपने पति श्रीराम को प्राणों के नाथ परम समर्थ जगत के मंगल और स्वयं आदि शक्ति के बल समझकर अपने जीवन धन को मन से आलिंगन कर लिया॥९७॥

**नेत्ररन्ध्रैःसमानीयहृन्मन्दिरं रामचन्द्रं शरच्चन्द्रिका सौभगा।।**
**सा सखीमध्यगागाद्भवानीगृहं चोरयित्वा जगच्चित्तचोरं द्रुतम्।।९८।।**

**कृपा टीका**—शरद कालीन चन्द्रिका सी सुन्दरीसीताजी अपने सुन्दर नेत्रों के मार्ग से श्रीरामचन्द्र को मन मंदिर में पधराकर जगत चित्तचोर प्रभु को चुराकर सखियों के साथ द्रुत गति से पार्वती जी के मंदिर में पधार गयीं॥९८॥

**गोपं गोपं हृदयसदने रामरत्नं मनोज्ञं**
**ह्लेयं ह्लेयं निजतनुरुचा कामवामा असंख्याः**
**गापं गापं निजविधिकरी रामबाहुप्रतापं**
**गौरीं सीता निजपितृगृहं पूजयित्वा प्रतस्थे।।९९।।**

**कृपा टीका**—अपने हृदय भवन में सुन्दर रामरत्न को बार बार छिपाकर अपने शरीर की कान्ति से कोटि कोटि रतियों को बार बार लज्जित करके अपनीअन्तरंग सखियों से श्रीराम के भुज प्रताप का बारम्बार भान कराकर भगवती सीताजी पार्वजी जी की पूजा करके पिताश्री के राजभवन में प्रस्थान कर गयीं॥९९॥ यहाँ मन्दाक्रान्ता छन्द है।

**श्रीरामोऽपि सलक्ष्मणोऽथ विलसत् पुष्पोच्चयश्चिन्मयो**
**विश्वामित्रमुपेत्यसर्वमवदत् सीतानुरागं स्वकं**
**सत्याशीर्भिरलङ्कृतोऽथ गुरुणा प्रीतश्च सैरध्वजी**
**स्मेरास्यं शशिनश्छलेन रजनीञ्जाग्रज्जगौ गौरवात्।।१००।।**

**कृपा टीका**—इसके पश्चात् लक्ष्मण जी के साथ पुष्प के दोने से सुशोभित विशुद्ध चेतनधन श्रीराम जी ने विश्वामित्र जी के पास आकर सीताजी के प्रति अपने अनुराग का सांगोपांग वर्णन कर दिया और गुरुदेव से सत्य आशीर्वाद प्राप्त करके प्रसन्नतापूर्वक सम्पूर्ण रात्रि जागरण करते हुए चन्द्रमा के बहाने सीताजी जी के मुस्कानयुक्त मुख का ही गान करते रहे॥१००॥ यहाँ शार्दूलविक्रीडित छन्द है।

**इत्थं शुभे भार्गवराघवीये भव्ये महाकाव्य उदारवृत्ते।**
**सर्गःकलाख्यः कविरामभद्राचार्यप्रणीते जगतां श्रियेऽस्तु।।१०१।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—इस प्रकार कल्याणकारी भव्य सुन्दर छन्दों में निबद्ध महाकवि स्वामी रामभद्राचार्य द्वारा प्रणीत भार्गवराघवीय नामक महाकाव्य में प्रस्तुत सोलहवाँ सर्ग संसार की प्रपत्ति और सम्पत्ति श्री के लिए हो॥१०१॥ उपजाति छन्द।

**इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामिरामभद्राचार्यप्रणीते श्रीभार्गवराघवीये महाकाव्ये "श्रीराघवप्रियादर्शनम्" नाम षोडशः सर्गः॥**

**॥श्रीराघवः शन्तनोतु॥**

इस प्रकार धर्मचक्रवर्ती जगद्गुरु रामानन्दाचार्य स्वामी रामभद्राचार्य द्वारा विरचित श्रीभार्गवराघवीय नामक महाकाव्य में "श्रीराघवप्रियादर्शन" नामक सोलहवाँ सर्ग सम्पन्न हुआ॥

॥श्री राघवः शन्तनोतु॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीमद्राघवो विजयते ॥

# अथ सप्तदशः सर्गः

**अथ प्रभातेऽरुणचूडवन्दिभिर्विबोधितः कोसलराजनन्दनः।**
**पुरः स्थितं प्राञ्जलिमेत्य लक्ष्मणं जगाद गां गाम्िव गापयन् गवा॥१॥**

**कृपा टीका**—इसके अनंतर प्रभातकाल में मुर्गारूप वंदियों द्वारा जगाए हुए दशरथनंदन भगवान श्रीराम अपने समक्ष हाथ जोड़कर उपस्थित हुए लक्ष्मण जी को देखकर मानो सरस्वती वेदवादी को गान में प्रवृत्त करते हुए यह वाणी बोले॥१॥ यहाँ से श्लोक ८८ तक वंशस्थ छन्द है।

**तमालनीलो द्विजनायकत्विषां करैर्द्विजानां तिमिरं हरन् हरिः।**
**निदर्शयन् नन्वयमब्दचन्द्रयोः समन्वयाध्यायमिवोद्गिरन् गिरा॥२॥**

**कृपा टीका**—तमाल के समान नीले वर्णवाले भगवान् श्रीराम, चन्द्रमा के समान सुन्दर दाँतों की किरणों से अंधकार दूर करते हुए बादल और चन्द्रमा का संयोग प्रदर्शित करते हुए मानो अपनी वाणी से ब्रह्मसूत्र के समन्वयाध्याय की व्याख्या कर रहे थे। तात्पर्य यह है कि प्रभु श्रीराम का श्रीविग्रह बादल के समान नीला तथा उनके दशन चन्द्रमा के समान श्वेत थे और उनके भाषण में दोनों झाँकियों का संयोग हो रहा था जबकि चन्द्रमा बादल का समन्वय सम्भव ही नहीं है क्योंकि बादल चन्द्रमा को ढक देता है॥२॥

**मुखानिलेनामरपद्मगन्धिना विलुब्धरोलम्बकदम्बकाननः।**
**कृपार्द्रदृष्ट्या सदयं विलोकयन् शरन्मयूखाढ्यकुमुत्समाननः॥३॥**

**कृपा टीका**—प्रभु श्रीराम के नंदनवन के कमल के समान सुगन्ध वाले मुख के वायु से भ्रमर समूहों के वन को ही लुब्ध कर रहे थे। अर्थात् प्रभु की मुखसुरभि से आकृष्ट होकर नंदन वन के भ्रमर भी प्रभु पास आकर मंडराने लगे थे। प्रभु करुणाभरी दृष्टि से दयापूर्वक निहार रहे थे और उनका श्रीमुख शरद् पूर्णिमा के चन्द्र के समान था॥३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**उदीक्षतां प्रागुदितोऽरुणोऽरुणः प्रवालवर्णो नवकुंकुमच्छविः।**
**पुरन्दराशाललनाललाटके प्रलिप्तसिन्दूर इवाद्भुतद्युतिः॥४॥**

**कृपा टीका**—हे लक्ष्मण! देखो पूर्व दिशा में नवीन पल्लव एवं कुंकुम के समान कान्तिवाला यह अरुणवर्ण सूर्यनारायण का सारथि अरुण अपनी अद्‌भुत शोभा के साथ उदित हुआ, पूर्व दिशा के मस्तक के सिन्दूर के समान शोभित हो रहा है॥४॥

**नवीनराजीवनिभस्त्वदाकृतिस्तमो निरास्यत् प्रथमं खगोदयात्।**
**यथा त्वमाजौ सुभुजं मयि घ्नति क्रुधाखिलानक्षपयः क्षपाचरान्॥५॥**

**कृपा टीका**—हे लक्ष्मण! देखो नवीन लालकमल के समान कान्तिवाला यह अरुण तुम्हारे ही समान आकृति और स्वभाव वाला है। इसने सूर्यनारायण के उदय के पहले ही अन्धकार को उसी प्रकार नष्ट कर दिया जैसे तुमने युद्ध में मेरे द्वारा सुबाहु को मारने से पूर्व ही क्रोध में आकर सम्पूर्ण राक्षसों को मार डाला था॥५॥

**अहो सुधन्योऽरुण ऊरुवर्जितोऽप्यनन्तपारं नभउष्णदीधितिम्।**
**रथेन चाह्नैव नयत्यमोघदृक् सतां हि सङ्कल्पदृढ़त्वमादृतम्॥६॥**

**कृपा टीका**—अहो, चरणों से रहित होने पर भी यह अरुण अत्यन्त धन्य है जो एक ही दिन में स्वयं रथ चलाकर सूर्यनारायण को अपार आकाशमण्डल से पार ले जाता है, क्योंकि सन्तों की संकल्पदृढ़ता ही आदरणीय होती है॥६॥

**जगाद सौमित्रिरथान्तरं वचो रवेरयं स्यान्महिमा न सारथेः।**
**क्व वैनतेयःकरपादविक्लबः क्व सूर्यसौत्यं ह्यसमञ्जसं महत्॥७॥**

**कृपा टीका**—इसके अनन्तर सुमित्रानन्दवर्धन लक्ष्मण जी ने अर्थभरी वाणी में कहा- प्रभो! यह सूर्यनारायण की महिमा हो सकती है सारथि अरुण की नहीं, कहाँ हाथ पैर से रहित विकलांग विनता के पुत्र अरुण और कहाँ सूर्यनारायण का सारथि बनकर निरालम्ब आकाश में रथ का चलाना यह बहुत बड़ा असामञ्जस्य है॥७॥

**क्व सप्तसप्तेरथ एकचक्रको नभो निरालम्बमनन्तयोजनम्।**
**गतोरुकस्यापि नियन्त्रिता क्व च श्रितः समर्थं हि समर्थ उच्चते॥८॥**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे भगवन्! कहाँ तो सूर्यनारायण का एक चक्केवाला रथ और आधाररहित अनंत योजनों का आकाश, और कहाँ चरणों के बिना भी इस दुरूह मार्ग में अरुण का रथ को चलाना। वास्तव में समर्थ का आश्रय लेकर असमर्थ भी समर्थ बन जाता है॥८॥

**इति प्रभाष्यैव नरेन्द्रनन्दनौ विधाय पौर्वाह्णिकमीड्यतेजसौ।**
**गुरुं समागत्य मुदा प्रणेमतुर्विनीतवेशौ ननु रामलक्ष्मणौ॥९॥**

**कृपा टीका**—इस प्रकार परस्पर चर्चा करके परमतेजस्वी दशरथ राजकुमार रामलक्ष्मण ने सन्ध्यावन्दन से निवृत्त होकर गुरुदेव के पास आकर विनम्र मुद्रा में साष्टांग प्रणाम किया॥९॥

**शुभाशिषा गाधिकुलावतंसकः समर्चयत् तौ रघुवंशवर्धनौ।**
**जगाम ताभ्यां सहितः स जानकीस्वयंवरं भूपतिनाभिमन्त्रितः॥१०॥**

**कृपा टीका**—गाधिकुलनन्दन विश्वामित्र जी ने श्रीरामलक्ष्मण का समर्चन किया तथा जनकराज के द्वारा आमन्त्रित होकर रामलक्ष्मण के साथ सीताजी के स्वयंवर में पधारे॥१०॥

**स्वरङ्गभूमिं मुनिना सहागतौ नरेन्द्रसूनू ननु रामलक्ष्मणौ।**
**निशम्य पौराःप्रमुदा समाययुः सुधाकरं चारुचकोरका इव॥११॥**

**कृपा टीका**—रंगभूमि में विश्वामित्र जी के साथ पधारे हुए श्रीरामलक्ष्मण जी के समाचार पाकर मिथिलानगरवासी उन्हें देखने उसी प्रकार प्रसन्न होकर दौड़े जैसे चन्द्रमा को निहारने के लिए चकोर दौड़ पड़ते हैं॥११॥

**स बालवृद्धास्तरुणास्तपस्विनः स्त्रियस्तरुण्यो वनिता वनप्रियाः।**
**रघूत्तमालोकनलोलचक्षुषः सरस्तृषार्ता इव रंगमाययुः॥१२॥**

**कृपा टीका**—बालक, वृद्ध, युवक, तपस्वी, स्त्रियाँ और यौवनप्रिय किशोरियाँ श्रीरामलक्ष्मण को निहारने के लिए आतुर नेत्र होकर उसी प्रकार रंगभूमि की ओर दौड़ीं जैसे प्यासे तालाब की ओर दौड़ते हैं॥१२॥

**स्थितेषु भूपेषु यथोचितासनं सुदानदर्पेषु गजायितेष्वथ।**
**समाययौ राघवबालकेशरी स्वयंवरारण्यविभां विवर्धयन्॥१३॥**

**कृपा टीका**—दान के अहंकाररूप मद के गर्व से गर्वीले, हाथियों की जैसी

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रकृतिवाले, राजाओं के अपने आसनों पर स्थित हो जाने पर स्वयंवर भूमिरूप वन की शोभा को बढ़ाते हुए श्रीरामरूप बाल सिंह ने प्रवेश किया॥१३॥

**सलक्ष्मणो लक्ष्मणपूर्वजो जनान् जनार्दनो जिष्णु जनेशतल्लजान्।**
**प्रसादयन् सादिततटकाग्रहो ग्रहर्क्षतारा इव तारकेश्वरः॥१४॥**

**कृपा टीका**—जिस प्रकार पूर्णचन्द्रमा ग्रह नक्षत्र तारागणों को प्रसन्न करते हैं उसी प्रकार ताटकारूप ग्रह को नष्ट करने वाले लक्ष्मणजी के बड़े भ्राता भगवान श्रीराम ने लक्ष्मण जी के साथ उपस्थित होकर विजयशील श्रेष्ठ राजाओं को और सामान्य लोगों को भी प्रसन्न कर लिया॥१४॥

**विलोभितास्तेन कुजैकलोभिना विलोभिना कोटिमनोजशोभिना।**
**विलोलचित्ता मिथिलामृगीदृशो दृशोन्यषेधन्न ततो दृशोऽबलाः॥१५॥**

**कृपा टीका**—सीताजी के प्रति अद्वितीय लोभ रखने वाले अन्य लोभों से रहित कोटि कोटि कामदेवों के समान सुन्दर उन भगवान श्रीराम द्वारा लुभायी हुई चंचल नेत्रोंवाली हृदय में भगवान के ही बल से पूर्ण मिथिला की मृगनयनियों ने प्रभु के दर्शन से अपनी दृष्टियों को रोका नहीं, अर्थात् निर्निमेष नयनों से प्रभु को निहारती रहीं॥१५॥

**तमालनीलं स्मरकन्दसुन्दरं प्रलम्बबाहुं मृगराजकन्धरम्।**
**सुनासिकं कञ्जविलोललोचनं भ्रुवा स्मरेषु क्षिपदर्पमोचनम्॥१६॥**

**कृपा टीका**—तमाल के समान नीलवर्ण कामदेव एवं बादल के समान सुन्दर लम्बी भुजाओं वाले, सिंह के समान स्कन्ध वाले, सुन्दर नासिका एवं कमल जैसे शान्त नेत्रवाले तथा अपनी भृकुटि से कामारि भगवान शंकर अर्थात् महाकाल के भी अहंकार को दूर करने वाले भगवान श्रीराम को मिथिलानियों ने निहारा॥१६॥

**विशालभाले कलितोर्ध्वपुण्ड्रकं समावहन्तं तिलकं तिलार्चितम्।**
**कलिन्दजाक्रोडगतां सरस्वतीं त्रिमार्गगा युग्ममयीमिवादरात्॥१७॥**

**कृपा टीका**—विशाल मस्तक पर तिल से युक्त ऊर्ध्वपुण्ड्र तिलक धारण करते हुए, यमुनाजी की गोद में दो गंगधाराओं से युक्त सरस्वती को आदरपूर्वक स्वीकार करते हुए के समान श्रीराम को मिथिलानियों ने निहारा॥१७॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मनोजकेतूपमलोलकुण्डलोल्लसत् कपोलस्मितपल्लवाधरम्।
द्विजावलीदाड़िमकुन्दकुड्मलच्छबिं शरच्चारुसुधाकराननम्।।१८।।

**कृपा टीका**—कामदेव के ध्वज मछली के समान चंचल कुण्डलों से सुशोभित कपोल एवं मुस्कान से युक्त आम्रपल्लवं के समान अधरवाले तथा दन्तावली की अनार की कली के समान शोभा से युक्त शरद् काल के पूर्ण चन्द्रमा के समान मुखवाले श्रीराम को मिथिलानियों ने देखा॥१८॥

स पाञ्चजन्योपमकण्ठमालिकालसल्ललामेभमनोज्ञमौक्तिकम्।
विशालवक्षस्तुलसीसुमालिकासमेधितामोदवशप्रियालिकम् ।।१९।।

**कृपा टीका**—पाञ्चजन्य शंख के समान कंठ में रत्नों की माला एवं श्रेष्ठ गजमुक्ता से सुशोभित तथा विशाल वक्षस्थल पर विराजमान श्रीतुलसीमाला की सुगन्ध से अपने प्रिय भक्तरूपी भ्रमरों को आकर्षित करने वाले प्रभु को मिथिलानियों ने देखा॥१९॥

अशेषविघ्नौघवनद्विजाग्रभूकरप्रतीकाशकरारविन्दयोः।
करालकालानलबाणभास्वरप्रचण्डकोदण्डधरं धराधरम्।।२०।।

**कृपा टीका**—सम्पूर्ण विघ्नसमूहों के वन को नष्ट करने के लिए अग्निस्वरूप भगवान गणपति के सूँड के समान सुन्दर करकमलों में कराल कालाग्नि के समान-बाण से सुशोभित प्रचण्ड धनुष को धारण करनेवाले ऐसे पृथ्वी के आश्रय महाविष्णु को मिथिलानियों ने निहारा॥२०॥

कटौ निषङ्गं शरसङ्गिबिभ्रतं कदम्बकिञ्जल्कसमानवाससम्।
प्रतप्तचामीकरदाममण्डितं मखोपवीतं दधतं धृतव्रतम्।।२१।।

**कृपा टीका**—कटि में बाण के सहित तरकस धारण करते हुए, कदम्ब पुष्प के पराग के समान पीला वस्त्र धारण करने वाले, तपे हुये सुवर्ण के सूत्र से निर्मित यज्ञोपवीतधारी ब्रह्मचर्यव्रती राघव को मिथिलानियों ने देखा॥२१॥

मुनीन्द्रपत्नीदुरितक्षयक्षमं त्रिमार्गगासम्भवपादपङ्कजम्।
समस्तसौन्दर्यनिधानविग्रहं निराग्रहं श्रीसदनुग्रहाग्रहम्।।२२।।

**कृपा टीका**—गौतमपत्नी अहल्या के पापहरण में समर्थ, गंगाजी के जन्मदाता श्रीचरणकमल तथा समस्त सुन्दरता के खजानेरूप श्रीविग्रह वाले आग्रहरहित

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सेवकोऽसि यदि राम नो बको हंसवंशभव हंसतां व्रज।**
**तत् पृथक् कुरु धनुर्भिदं सदः क्षीरनीरभिदयैव हंसता॥६२॥**

**कृपा टीका**—हे राम! यदि तुम सेवक हो बक नहीं अर्थात् बगुले के समान कपटी नहीं हो तो हे हंसवंशभव अर्थात् सूर्यकुल में उत्पन्न अब तुम सही सही में हंस बन जाओ। जिस प्रकार हंस दूध से पानी को अलग कर देता है, उसी प्रकार धनुष तोड़ने वाले को सभा में से अलग कर दो। क्योंकि क्षीरनीर का विवेक करने से ही हंस की हंसता सिद्ध होती है॥६२॥

**अन्यथा सकलभूभृतोऽचिरं तीग्मनिष्कृपकुठारधारया।**
**वृक्णबाहुशिरसो विधाय वै तोषयामि हरिणाङ्कशेखरम्॥६३॥**

**कृपा टीका**—नहीं तो अतिशीघ्र अपने तीखे कृपारहित फरसे की धारा से सभी राजाओं की भुजा और सिर को काटकर भगवान चन्द्रशेखर शिव को संतुष्ट कर दूँगा॥६३॥

**राममेवमवमानयत्यृषौ रामचन्द्रसुयशोध्वजोपमः।**
**रोषदुर्गमकषायलोचनो लक्ष्मणोऽथ निजगाद भार्गवम्॥६४॥**

**कृपा टीका**—इस प्रकार परशुराम जी के द्वारा रामजी का अपमान करने पर श्रीरामजी की कीर्तिपताका के दण्डसदृश श्रीलक्ष्मण क्रोध के कारण आँखों को लाल करके परशुरामजी से बोले॥६४॥

**लक्ष्मणः—साधु भार्गव विरम्यतां क्षणं पीयताममृतशीतलं जलम्।**
**किं महर्षिकुलभूषणस्य ते मन्युना क्षपितभूपमौलिना॥६५॥**

**कृपा टीका**—बहुत अच्छा हे परशुराम जी महाराज! एक क्षण विश्राम कीजिये, अमृत के समान शीतल जल पीजिये। हे भृगुकुल भूषण! आपके राजविनाशकारी क्रोध से क्या लाभ?॥६५॥

**धन्विनो हि रघुवंशिनो वयं त्रोटितानि च धनूंषि शैशवे।**
**तत् कदापि कुपितं न भूसुरैः किन्निमित्तमिह कुप्यते मुने॥६६॥**

**कृपा टीका**—हम रघुवंशी धनुर्धर हैं, बाल्यकाल में हमने बहुत से धनुष तोड़े, तब किसी ब्राह्मण ने कभी क्रोध नहीं किया, किन्तु आप इस धनुष के तोड़े जाने पर इतने कुपित क्यों हो रहे हैं?॥६६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

क्षत्रियो धनुषिबद्धनिष्ठकस्त्वं यथा श्रुतिगणे समादृतः।
कर्तुमेव गुणदोषनिश्चयं राघवोऽपि तदतूतुलद्धनुः।।६७।।

**कृपा टीका**—भगवन्! जिस प्रकार आप वैदिक सिद्धान्त में आदर रखते हैं, उसी प्रकार क्षत्रिय धनुष में निष्ठा रखता है। इसी अभिप्राय से पिनाक धनुष का गुणदोष निश्चय करने के लिये राघव जी ने भी उसे उठाया।।६७।।

वंशखण्डमिव जीर्णजर्जरं तत् पिनाकमबलं पुरातनम्।
स्पृष्टमात्रमथ रामपाणिना भग्नमास्त न हरेर्हि दूषणम्।।६८।।

**कृपा टीका**—भगवन! वह शिवधनुष पुराने बांस के टुकड़े की भाँति निर्बल, जीर्ण और जर्जर हो चुका था। वह तो रामजी के कर कमल के स्पर्शमात्र से ही टूट गया, इसमें श्रीराम का कोई दोष नहीं है।।६८।।

ज्ञानवान् हि परिगद्यते भवान् भार्गवो जगति विश्रुतो बुधः।
ज्ञानिनस्तु ममताविवर्जिताः किं ममत्वमिह जीर्णकार्मुके।।६९।।

**कृपा टीका**—हे भगवन! आप जगत में प्रसिद्ध ज्ञानवान और पंडित कहे जाते हैं, ज्ञानियों के पास ममता नहीं होती, फिर आप इस पुराने धनुष पर ममता क्यों कर रहे हैं?।।६९।।

शम्भुवल्लभतया यदि प्रियं तत्कृपालुहृदयैः प्रतीक्ष्यताम्।
आनयामि कमपीह वर्धकिं नूतनीकृतमुपाहरामि ते।।७०।।

**कृपा टीका**—यदि शंकर भगवान को प्रिय होने से यह धनुष आपको प्रिय है तो करुणा करके थोड़ी प्रतीक्षा कीजिये, मैं किसी बढ़ई को बुला ले आता हूँ, इसे नया बनाकर आपको उपहृत कर दूँगा।।७०।।

भार्गवः—कोटिकालकरवालदारुणं कार्तवीर्यभुजसिन्धुकुम्भजम्।
ब्रह्मवैरिनृपरक्तपायिनं पश्य मे कटुकुठारमर्भक।।७१।।

**कृपा टीका**—परशुरामजी ने कहा हे बालक! करोड़ों काल की तलवारों से भी भयंकर सहस्रबाहु के भुजारूप महासागर को शोषण के लिए अगस्त्य के समान ब्राह्मणद्रोही राजाओं का रक्त पीनेवाले मेरे कठोर फरसे को देखो।।७१।।

बालकोऽसि न निहन्यसे ततो जल्पसि त्वमत एव निर्भयः।
मां न विद्धि मुनिमेव केवलं कालवह्निमपि विप्रविद्विषाम्।।७२।।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—तुम बालक हो इसी लिये नहीं मारे जा रहे हो, इसीलिये निर्भयता से बोल रहे हो, मुझे केवल मुनि मत समझो, मैं ब्राह्मणद्वेषी राजाओं के लिए कालाग्नि भी हूँ॥७२॥

**लक्ष्मणः—कालवह्निरसिभूसुरद्रुहाम् ब्राह्मणार्चककृतेऽसि चन्द्रमाः।**
**नो बिभेमि भवतस्ततः प्रभो किं बिभेति शशिनश्चकोरकः॥७३॥**

**कृपा टीका**—हे प्रभो! आप ब्राह्मणद्रोहियों के लिए कालाग्नि हैं, तो ब्राह्मण पूजकों के लिये चन्द्रमा भी, इसीलिये मैं आपसे नहीं डर रहा हूँ। क्या चकोर चन्द्रमा से डरता है?॥७३॥

**त्वां विशुद्धजमदग्निरेणुकासंभवं मुनिमवैमि केवलम्।**
**कोटिवज्रसमदुर्वचांसि ते स्वस्तिवाचनधिया ततः सहे॥७४॥**

**कृपा टीका**—हे महर्षे! आपको मैं केवल जमदग्नि और रेणुका से उत्पन्न विशुद्ध मुनिकुमार ही समझता हूँ, इसीलिये करोड़ों वज्र से भी कठोर आपके दुर्वचनों को स्वस्तिवाचन की बुद्धि से सह ले रहा हूँ॥७४॥

**ब्राह्मणो बहुविरुद्धधर्मवान् शस्यते नहि यतः स सङ्करः।**
**ब्रह्मवल्लभतयैव भार्गवः शङ्करोऽस्ति न भवान् हि सङ्करः॥७५॥**

**कृपा टीका**—यद्यपि बहुत विरुद्धधर्मोंवाला होने के कारण व्यक्ति प्रशंसनीय नहीं होता, परन्तु ब्राह्मणों के स्वामी होने के कारण आपको हम शंकर ही कह रहे हैं संकर नहीं॥७५॥

**रामचन्द्रमुखचन्द्रलोकने लोचने मम चकोरिते मुने।**
**अन्यवीक्षणकृते कुतः क्षणः शक्र एव बहुनेत्रता श्रियै॥७६॥**

**कृपा टीका**—हे मुने! श्रीरामचन्द्र के मुखचन्द्र के दर्शन में ही मेरे नेत्र चकोर हो चुके हैं, और किसी के निहारने के लिये मेरे पास कहाँ समय है। क्योंकि बहुत नेत्रों का होना इन्द्र के लिये ही कल्याणकारक है, सबके लिये नहीं॥७६॥

**गर्भकार्भकविनाशकारणादाविलं यदिह बालहत्यया।**
**मातृमस्तकविघातपातकं किं कुठारमवलोकयानि ते॥७७॥**

**कृपा टीका**—भगवन्! जो गर्भ के बालकों का विनाश करने के कारण बालहत्या के पाप से दूषित है, तथा जो माता के मस्तक काटने से उद्भूत भयंकर पाप से लदा है, ऐसा आपका फरसा क्या देखूँ?॥७७॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**ब्राह्मणत्वमवलोक्य भार्गवे यज्ञसूत्रमपि वीक्ष्यते शिखाम्।**
**कालकूटमपि ते मुखोद्‌गतं स्निग्धकर्णपुटकः पिबाम्यहम्॥७८॥**

**कृपा टीका**—आपमें ब्राह्मणत्व देखकर और आपके शिखासूत्रों का अवलोकन करके आपके मुख से निकले हुए कालकूट को भी स्नेहिल कान के दोने से पी रहा हूँ॥७८॥

**दर्शयन् स्वपरशुं पुनः पुनर्भीषयन्निव शिशुं प्रतीयसे।**
**नास्मि कद्रुफलकं म्रियेत यत् तर्जनीविहिततर्जनान्मुने॥७९॥**

**कृपा टीका**—बार बार अपना फरसा दिखाकर आप बालक को डराते हुए से लग रहे हैं, हे महर्षे! मैं कुम्हड़े की बतिया नहीं हूँ? जो तर्जनी अंगुली के तर्जन से मर जायेगी॥७९॥

**बालका अपि न बालपौरुषा क्षत्रिया द्विजकुलैकसेवकाः।**
**सर्वमेव भवतां सहामहे न द्विजेषु रघवो हि शस्त्रिणः॥८०॥**

**कृपा टीका**—हम बालक होकर भी बालक पराक्रम वाले नहीं हैं, अर्थात्‌हमारा पराक्रम प्रौढ़ है। हम क्षत्रिय लोग ब्राह्मणों के एकमात्र सेवक हैं। इसीलिये आपका सबकुछ सह ले रहे हैं, क्योंकि रघुवंशी ब्राह्मणों पर शस्त्र नहीं उठाते॥८०॥

**भार्गवः – बालकोऽपि बहुधा विकत्थसे मां न वेत्सि समुपेतमन्तकम्।**
**कौशिकायमधुना निवार्यताम् लक्ष्मणो रविकुलेन्दु लक्ष्म वै॥८१॥**

**कृपा टीका**—हे विश्वामित्र! यह बालक होकर भी बहुत बोल रहा है, मुझे अपने पास आया हुआ काल नहीं समझ रहा है, इसे शीघ्र ही मना कर दीजिये। यह सूर्यकुलरूप चन्द्रमा का कलंक है॥८१॥

**लक्ष्मणः – कालदूत इव भासि भार्गव त्वं कृते मम तमेव सूचयन्।**
**तद् बुभुक्षितनिदानवित्तया सूपकार इव तन्नियोजितः॥८२॥**

**कृपा टीका**—हे परशुराम! आप मेरे लिये काल की सूचना देते हुए काल के दूत (उल्लू) जैसे लग रहे हैं। उसकी भूख का निदान जान लेने से मानो काल के द्वारा स्वयं उसके रसोइया नियुक्त किये गये हैं॥८२॥

**कालतोऽपि रघुवंशिनो वयं न त्रसाम इतरे नृपा यथा।**
**धर्मनिष्ठधरणीसुरावलीप्रीणनव्रतनिरस्तमृत्यवः॥८३॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे महाराज! धर्मनिष्ठ ब्राह्मणसमूहों के परितोषण व्रत से मृत्यु को भी दूर भगा देनेवाले हम रघुवंशी अन्य राजाओं की भाँति काल से नहीं डरते हैं॥८३॥

**नैव मां खरकुठारधारया छेत्तुमर्हसि कदाचन द्विज।**
**ब्राह्मणर्षभवसिष्ठकौशिकप्रीतिवीतमरणामयं मुहुः॥८४॥**

**कृपा टीका**—हे परशुराम जी! ब्राह्मणश्रेष्ठ वसिष्ठ एवं विश्वामित्र की प्रसन्नता ने मुझे मरण और रोगों से मुक्त कर दिया है। इसीलिये आप अपने फरसे की तीक्ष्णधारा से भी मुझे कभी नहीं काट सकते॥८४॥

**शेषितं कुटिलकालमालिना शेषिणा परिकृतौ च शेषितम्।**
**शिष्टमेव गुरुभिः सदा श्रुतौ शेषमेष किमु केश कृन्तसि॥८५॥**

**कृपा टीका**—हे महर्षे! जिसको क्रूर कालमाली भी नहीं काट पाया और समस्त जीवों के शेषी स्वामी और अंशी परमात्मा श्रीराम ने परिकृति अर्थात् सेवा में शेषित अर्थात् नियुक्त किया, और जो गुरुजनों द्वारा शास्त्रों में शिष्ट अर्थात् अनुशासनपूर्वक विहित किया गया, ऐसे मुझ शेष को हे शिवभक्त ब्राह्मणदेव! आप कैसे काट सकेंगे?॥८५॥

**भार्गवः – भूप बालक न वेत्सि मां कथं भूपवंशदमनं दवप्रियम्।**
**विप्रशस्यविलसद् बलाहकं घोरशोणितनदीप्रवाहकम्॥८६॥**

**कृपा टीका**—हे राजकुमार! मुझको तुम राजवंश का नाशक, वनवासप्रिय ब्राह्मणरूप धान्य के लिये श्रेष्ठ बादल, और घोर रक्तनदी का प्रवाहक क्यों नहीं समझ रहे हो?॥८६॥

**कौशिकाभिमतमेव मानयन् त्वां न हन्मि हननार्हमप्यहो।**
**अन्यथा त्वदभिमूर्धपुष्पया शङ्करञ्च मृडये शिरस्रजा॥८७॥**

**कृपा टीका**—मरण के योग्य होने पर भी तुझे विश्वामित्र का प्रिय मानकर नहीं मार रहा हूँ, नहीं तो तुम्हारे अभीष्ट मस्तकरूप पुष्प से सजी हुई मुण्डमाला से भगवान शंकर को संतुष्ट कर देता॥८७॥

**मूर्तिमन्तमिव कालमुल्वणं कार्तवीर्यबलसिन्धुवाडवम्।**
**ब्रह्मशत्रुनृपसर्वनाशनं कोऽपि मां न परिकोप्य जीवति॥८८॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—मूर्तिमान भयंकर काल के समान सहस्रबाहु के भुजा महासागर के लिये वाडवाग्नि ब्रह्मद्रोही राजाओं के सर्वनाशक मुझ परशुराम को कुपित करके कोई भी जीवित नहीं रह सकता॥८८॥

**गच्छ लक्ष्मण निज़ाग्रजं भज मा वृथैव परिकोप्य कोपनम्।**
**अन्यथा मम शितैः शिलीमुखैर्नेष्यसे यमपुरीं सहानुगः॥८९॥**

**कृपा टीका**—हे लक्ष्मण! जाओ अपने बड़े भाई की सेवा करो मुझ क्रोधशील परशुराम को और कुपित करने से क्या लाभ? नहीं तो मेरे तीखे बाणों के द्वारा तुम अपने अनुगामियों सहित यमपुरी पहुँचा दिये जाओगे॥८९॥

**चारुचम्पकसमानसुन्दरं कम्रकेशरिकिशोरकन्धरम्।**
**त्वां विलोक्य मयि निर्दये दया वर्धते त्वमतएव मोक्ष्यसे॥९०॥**

**कृपा टीका**—सुंदर चंपा के समान मनोहर बाल सिंह के समान स्कन्धवाले तुझे देखकर मुझ निर्दय को भी दया आ रही है। लक्ष्मण! इसीलिये तुम बचते जा रहे हो॥९०॥

**लक्ष्मणः – विक्रमस्तु भवतः श्रुतो मया मातरञ्च महितां विनिघ्नतः।**
**स्वान्निपात्य किल बान्धवान् मुने गेहशूरविरुदं त्वयार्जितम्॥९१॥**

**कृपा टीका**—महर्षे! अपनी पूजनीया माँ को भी मारनेवाले आपका पराक्रम मैंने सुना। महर्षे! अपने ही तीनों भाइयों को अपने ही फरशे से काटकर आंपने गेहशूर अर्थात् घर में ही वीर होने का विरुद प्राप्त कर लिया है॥९१॥

**ब्रह्मणां परिभवाद्गतायुषः क्षत्रियान् हि विनिहत्य कत्थसे।**
**नो वसिष्ठवरदानवर्धितान् त्वं रघूनिह मनाग् प्रपीडयेः॥९२॥**

**कृपा टीका**—ब्राह्मणों का अपमान करने से पहले ही क्षीण आयुष्यवाले मृत क्षत्रियों को मारकर आप अपनी वीरता का बखान कर रहे हैं। महर्षे! परंतु वसिष्ठजी के वरदान से पालित रघुवंशियों को आप थोड़ा भी पीड़ित नहीं कर सकते॥९२॥

**शङ्करेण न कृता प्रतिक्रिया भग्नचापमपि राघवं प्रति।**
**त्वं मुधैव भगवद्विनिन्दनैः पुण्यरत्नमपहातुमुद्यतः॥९३॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—भगवन्! शिवधनुष तोड़ने पर भी भगवान शंकर ने प्रभु श्रीराम के प्रति कोई प्रतिक्रिया नहीं की, परंतु आप व्यर्थ ही भगवान श्रीराम की निन्दा के द्वारा अपना पुण्यरत्न ही नष्ट करने को तुल गये हैं॥९३॥

**त्वं क्षरं धनुरवेहि शाङ्करं यद् विभग्नमिह ताटकारिणा।**
**तज्जडं ह्यचिदनाप्तचेतनं तत्र तेऽतिममता लघीयसी॥९४॥**

**कृपा टीका**—महर्षे! आप शंकर के धनुष को क्षर समझिये, जिसे ताटका के शत्रु श्रीराम ने तोड़ा। वह चेतनारहित जड़ अचित् का विकार था, उस पर आपकी इतनी बड़ी ममता यह कितना बड़ा आश्चर्य है॥९४॥

**अक्षरोऽहमिहते पुरस्थितो नित्यदासविभवः खरद्विषः।**
**राघवेन्द्रपदपद्मकिङ्करो नो कदापि ममनाश ईप्सितः॥९५॥**

**कृपा टीका**—हे महर्षे! पूर्वकाल्पिक खर के शत्रु श्रीरामजी के नित्य दास्य के वैभव से युक्त, राघवेन्द्रजी के चरणकमल का नित्यसेवक मैं जीवात्मा अक्षर तत्त्व के रूप में आपके सामने उपस्थित हूँ, मुझ जीवात्म तत्त्व (चित् तत्त्व का कभी विनाश संभव ही नहीं है॥९५॥

**राघवस्तु परतोऽनयोर्द्वयोर्निर्विकल्प इह सर्वकारणम्।**
**त्यक्तहेयगुणको गुणालयो योग एष पुरुषोत्तमः स्मृतः॥९६॥**

**कृपा टीका**—भगवान श्रीराम शिव धनुषरूप क्षरतत्त्व और मुझ अक्षरतत्व से भी परे सबके अभिन्न निमित्तोपादान कारण हेय गुण से रहित और सभी कल्याण गुणगणों के निलय हैं, यही स्मृतियों का पुरुषोत्तम योग भी है॥९६॥

**राम एष भगवान् परात्परो व्यापको जलदसुन्दरो हरिः।**
**जानकी भगवती तदात्मिका किङ्करा वयमथो सह त्वया॥९७॥**

**कृपा टीका**—हे महर्षे! नीले बादल के समान सुन्दर श्रीराम ही भगवान और सर्वव्यापक परब्रह्म हैं, भगवती जानकी जी भी श्रीराम की आह्लादिनी शक्ति और भगवद्रूपा हैं जीव नहीं। श्रीराम कारणब्रह्म सच्चिदानन्द हैं, और श्रीसीताजी कार्यसंविदानन्द हैं। ये दोनों ही चित् और अचित् से विशिष्ट हैं और इन्हीं दोनों का एकत्व ही विशिष्टाद्वैत है, आपके सहित हम सब इन्हीं श्रीसीताराम जी के दास हैं॥९७॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

त्वं तु मोहविवशो रघूद्वहं मन्यसे मनुजदारकं द्विज।
नो दिवापि यदुलूकको रविं वीक्ष्यते किमु दिनेशदूषणम्।।९८।।

**कृपा टीका**—हे ब्राह्मणश्रेष्ठ! आप मोहके विवश होकर ही श्रीराम को मनुष्य बालक मान बैठे हैं, यदि दिन में भी उल्लू सूर्यनारायण को नहीं देख पाता तो क्या उसमें सूर्यनारायण का दोष है?।।९८।।

इति बहुविधवक्रवाक्यबाणैः समभिहतो भृगुराट् सलक्ष्मणेन।
तमगमदनघं कुठारपाणिर्मृग इव हन्तुमिभारिमाप्तकोपः।।९९।।

**कृपा टीका**—इस प्रकार बहुत से वक्रोक्ति भरे वाक्य बाणों से लक्ष्मण जी के द्वारा आहत किये गये परशुराम जी क्रुद्ध होकर हाथ में फरसा लेकर निरुपाय लक्ष्मण जी को मारने के लिये उसी प्रकार दौड़े, जैसे छोटा सा हरिण सिंह पर आक्रमण करने का साहस करे।।९९।। यह पुष्पिताग्रा छन्द है।

सम्यक् सौमित्रिहोत्रा प्रतिवचनसरत्सर्पिषा हूयमानम्
मिथ्याहङ्कारमूलं बलमतिसमिधं ब्रह्मचर्यप्रकाशम्।
सोत्कर्षज्ज्वालयाढ्यं ज्वलितमतितरां भार्गवक्रोधवह्निम्।
शान्तं कुर्वन् कृपालुर्वरवचनवनैर्राघवर्त्विक् सिषेच।।१००।।

**कृपा टीका**—लक्ष्मण जी रूप होता के द्वारा प्रत्युत्तररूप फैलते हुये घी की आहुति से पूर्णरूप से धधकते हुए, मिथ्या अहंकार के मूल से युक्त, बलाभिमानरूप समिधा से उद्धत, ब्रह्मचर्य के प्रकाश से देदीप्यमान, अपने उत्कर्ष की ज्वाला से व्याप्त अत्यंत प्रज्वलित ऐसी यज्ञवेदी की सीमा को अतिक्रान्त करते हुए परशुरामजी की क्रोधाग्नि को शान्त करते हुए श्रीरामरूप कुशल ऋत्विक् ने अपनी अमृतवाणीरूप जल से उसे सींच दिया।।१००।। यह स्रग्धरा छन्द है।

इत्थं शुभे भार्गव राघवीये
भव्ये महाकाव्य उदारवृत्ते।
सर्गोष्टकेशः कविरामभद्रा-
चार्यप्रणीते च सतां श्रियै वः।।१०१।।

**कृपा टीका**—इस प्रकार परम कल्याणकारी भव्य उदार छन्दों में निबद्ध महाकवि रामभद्राचार्य द्वारा प्रणीत "भार्गवराघवीयम्" नामक महाकाव्य में वर्णित

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अठारहवाँ सर्ग रचयिता और अध्येताओं की प्रपत्ति संपत्ति श्री का संवर्धन करे॥१०१॥ उपजाति छन्द।

**इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामिरामभद्राचार्यप्रणीते श्रीभार्गवराघवीयेमहाकाव्ये "भार्गवलक्ष्मणयोः संवादः" नाम अष्टादशः सर्गः॥**

**॥श्री राघवः शन्तनोतु॥**

इस प्रकार धर्मचक्रवर्ती महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामी रामभद्राचार्य द्वारा प्रणीत "श्रीभार्गवराघवीयम्" नामक महाकाव्य में "भार्गवलक्ष्मणसंवाद" नामक अठारहवाँ सर्ग पूर्ण हुआ॥

॥श्रीराघवः शन्तनोतु॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीमद्राघवो विजयते ॥

# अथ ऊनविंश: सर्ग:

**नाथ कृपा क्रियताम् नतभाले लक्ष्मणमञ्जुलबालमराले।**
**दीनदयालुतया क्षमितव्यं रोषभरादथ विश्रमितव्यम्॥१॥**

**कृपा टीका**—श्रीराम ने परशुराम जी से कहा हे नाथ! आपके श्रीचरणों में मस्तक झुकाये हुए लक्ष्मणरूप कोमल बालहंस पर आप कृपा करें। अपनी दीनदयालुता के कारण आपको क्षमा करनी चाहिये और निरर्थक क्रोध के भार से अब विश्राम लेना चाहिये॥१॥ इस सर्ग में श्लोक संख्या १ से ३० तक धोधक छन्द है।

**लोकविनिन्द्यतमं यदशुद्धं वीक्ष्य मनागिव धर्मविरुद्धम्।**
**यद्भणितं तव कष्टकरं मे बन्धुवरेण तदर्पय मह्यम्॥२॥**

**कृपा टीका**—आपके ऐसे आचरण जो लोक में निन्दनीय थे, जो अशुद्ध एवं ब्राह्मणधर्म के विरुद्ध थे, उन्हें देखकर मेरे श्रेष्ठ भ्राता लक्ष्मण ने जो कुछ आपके लिये कष्टकर कह दिया हो वह आप मुझे दे दें॥२॥

**चापमभञ्जि मया गुरुवाक्यान्नापि विदेहसुतां लषताद्धा।**
**नैव कदापि शशी सुधयार्थी सा तु तदीयतयैव निसृष्टा॥३॥**

**कृपा टीका**—हे महर्षे! मैंने सीताजी को प्राप्त करने की इच्छा से नहीं, प्रत्युत विश्वामित्र जी की आज्ञा से शिवधनुष तोड़ा। अरे, कभी चन्द्रमा अमृत की इच्छा नहीं करता, क्योंकि अमृत तो उसी के लिये ही निर्मित हुआ है, उसी प्रकार सीताजी तो मेरी अपनी आह्लादिनी शक्ति हैं ही॥३१॥

**भञ्जयतामिथिलाधिपतापं रञ्जयता निखिलानथ लोकान्।**
**धर्मरिपून् जयतावनिपालान् नाथ पिनाकमभञ्जि मयैव॥४॥**

**कृपा टीका**—हे प्रभो! जनक जी का कष्ट दूर करते हुए, संपूर्ण प्राणियों को आनन्द देते हुए और धर्मद्रोही राजाओं को पराजित करते हुए मेरे द्वारा ही पिनाक धनुष तोड़ा गया॥४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**नात्र मनाक् समलञ्च सुमित्रागर्भभुवो मम दूषणमेतत्।**
**दण्डविधानमतो मयि कार्यं प्रस्तुत एष जनो नतमूर्धा॥५॥**

**कृपा टीका**—इस संदर्भ में सुमित्रानन्दन लक्ष्मण का कोई दोष नहीं है, इसमें संपूर्ण दोष मेरा है, इसलिये मुझ पर ही दण्डविधान किया जाय। यह जन शिर झुकाकर आपके समक्ष समक्ष प्रस्तुत है॥५॥

**कोपकृपावधबन्धभयेषु प्रह्वमिमं किमपीह यथेच्छम्।**
**वा सकलं परिषाहय साधो त्वं हि गुरू रघवश्च विधेयाः॥६॥**

**कृपा टीका**—हे साधुप्रवर! आप इस चरणसेवक को क्रोध-कृपा-वध-बन्धन अथवा भय मनमें से कोई एक अथवा इन सबको ,सहन करने की अनुमति दें, क्योंकि आप हमारे गुरु हैं और हम रघुवंशी आपके शिष्य॥६॥

**ब्राह्मणवंशविरुद्धमशुद्धं वेशमिमं भवदीयमवेक्ष्य।**
**लक्ष्मण आह किमप्यनपेक्षं शस्त्रधरं नहि मृष्यति शस्त्री॥७॥**

**कृपा टीका**—हे भगवन्! आपके इस ब्राह्मणधर्म विरुद्ध अशुद्ध वीरवेश को देखकर लक्ष्मण ने कुछ अनपेक्षित कह दिया। क्योंकि शस्त्रधारी शस्त्रधारी को सहन नहीं कर पाता॥७॥

**वीक्ष्य कुठारलसद्विपुलांसबाणशरासनमण्डितपाणिम्।**
**तूणधरं धृतरोषभरं त्वां वीरममन्यत वीरवरोऽसौ॥८॥**

**कृपा टीका**—वास्तव में वीर श्रेष्ठ लक्ष्मण ने आपके स्कन्ध पर फरसा, आपके हाथ में धनुषबाण, आपके कटितट पर तरकस और आपके हृदय में क्रोध में देखकर आपको वीर ही मान लिया॥८॥

**एकत एष भयङ्करवेषो भूय इयं कुलिशोपमवाणी।**
**सर्वमिदं ह्यसमञ्जसमेतं क्रोधवशं व्यदधादनुजं मे॥९॥**

**कृपा टीका**—वस्तुतः भगवन्! एक ओर आपका भयंकर वेश दूसरीओर आपकी बज्र के समान तीक्ष्ण वाणी इन सभी असमंजसों ने मेरे छोटे भ्राता को क्रोधवश कर दिया॥९॥

**अप्रतिरूपमनेन यदुक्तं ह्यज्ञतया समभूत्त्रुटिरेषा।**
**तत्क्षमये क्षमया परिपूर्णं त्वां प्रणिपत्य महीसुररत्नम्॥१०॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—अज्ञानतावश मेरे भ्राता ने आपके प्रतिकूल जो कुछ कहा वह त्रुटि हो गई, मैं आप ब्राह्मणश्रेष्ठ को प्रणाम करके क्षमा से पूर्ण आपसे ही मैं उसे क्षमा करा रहा हूँ॥१०॥

**यद्भगवन् मुनिराज इवेयाः सात्त्विकवेश उपासितकोपः।**
**तत् तव पादपयोरुहधूलिं भूरिधरेच्छिरसाप्यनुजोऽयम्॥११॥**

**कृपा टीका**—हे भगवन! यदि क्रोध को उपासना में परिवर्तित करके सात्विक वेष धारण करके आप मुनिराज की भाँति आये होते तो मेरा छोटा भाई आपकी श्रीचरणकमल धूलि शिर पर धारण करता॥१०॥

**वीक्ष्य कुठारधनुश्शरचण्डं त्वां रणरङ्गलसद्भुजदण्डम्।**
**वीरधिया विहिता वरिवस्या विप्रधिया च कृता न नमस्या॥१२॥**

**कृपा टीका**—आपके फरशे धनुष तथा तीक्ष्ण बाण को एवं समरभूमि में सुशोभित होनेवाले भुजदण्डधारी आपको देखकर लक्ष्मण ने वीरबुद्धि से तो आपकी पूजा की किन्तु ब्राह्मणबुद्धि से आपको प्रणाम नहीं किया॥१२॥

**नामशुभं श्रुतवान् स कनिष्ठो देव न वेद तथापि भवन्तम्।**
**वंशनिसर्गतया समभाणीदुत्तरमत्र विमर्षय विप्र॥१३॥**

**कृपा टीका**—मेरे छोटे भाई ने आपका सुन्दर नाम तो सुना था, फिर भी वह आपको पहचान नहीं पाया। वंश के स्वभाव से उसने आपका प्रत्युत्तर किया। हे ब्राह्मणवर्य! उसे आप क्षमा कर दीजिये॥१३॥

**बालवचो गणयन्ति न सन्तस्तैश्च विनोद्य सुखं हि लभन्ते।**
**वानरबालकवृत्तसमत्वं प्रेक्ष्य भृगूद्वह सन्त्यज कोपम्॥१४॥**

**कृपा टीका**—सन्तलोग बालकों की वाणी पर विचार नहीं करते। बच्चों के साथ विनोद करके सुख ही प्राप्त करते हैं। वानरों और बालकों का स्वभाव एक जैसा होता है। हे महर्षे! ऐसा समझकर आप अपना क्रोध छोड़ दें।१४॥

**अस्ति समत्र मुकुन्दनिवासो बालतनौ स्फुट एव तथापि।**
**निर्मलबालतनोसु परात्मा दृश्यत ईश इवाप्सु विवस्वान्॥१५॥**

**कृपा टीका**—हे भगवन! यद्यपि भगवान का सर्वत्र निवास है, परंतु बालकों के शरीर में वह बहुत स्पष्ट हो जाता है। जैसे सूर्यनारायण जल में बहुत स्पष्ट

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दिखते हैं, उसी प्रकार निर्मल बालक के शरीर में भी भगवान के बहुत स्पष्ट दर्शन होते हैं॥

**इत्थमसौ रघुनाथवचोभिर्यावदुपैति शमं हृदि किञ्चिद्।**
**तावदुमासमरोचिरनन्तः किञ्चिदुदीर्य पुनर्विजहास॥१६॥**

**कृपा टीका**—इस प्रकार श्रीरामचन्द्रजी के वचनों से जब तक परशुरामजी कुछ शान्त हुए थे कि तब तक हल्दी के समान पीतवर्ण लक्ष्मण जी कुछ कहकर फिर हँस पड़े।

**प्रेक्ष्य हसन्तमिमञ्च कुमारं देहविनिन्दितचम्पकमारम्।**
**भार्गव उग्ररुषा स्फुरदोष्ठो राम उवाच वचो रघुरामम्॥१७॥**

**कृपा टीका**—अपने शरीर की कान्ति से चंपा और काम की निन्दा करने वाले कुमार लक्ष्मण को हँसते हुए देखकर उग्रक्रोध के कारण हिलते हुए ओष्ठ से परशुराम जी श्रीरामचन्द्र भगवान से फिर बोले॥१७॥

**पश्य रघूद्वह लक्ष्मणमेतं पापकृतं विहसन्तमभीकम्।**
**मामवमान्य मनस्यतिमात्रं मोदमुपेतमपेतमिव त्वत्॥१८॥**

**कृपा टीका**—हे राघव! इस पापकारी निर्भीक लक्ष्मण को देखो, जो मेरा अपमान करके मन में बहुत प्रसन्न है। और वह तुमसे भी बहुत दूर हो चुका है॥१८॥

**वीक्ष्य दयामयि वर्धत एषा न प्रणिहन्मि ततस्तमसाधुम्।**
**कुंठितधारकुठारकरो मे नोच्चलतीव चलोऽचलश्रृङ्गः॥१९॥**

**कृपा टीका**—इसे देखकर मेरे मन में दया बढ़ती जा रही है, इसीलिये असाधु आचरण करने पर भी मैं इसे नहीं मार रहा हूँ। मेरे कुठार की धारा भी कुंठित होगयी है, मेरा चंचल हाथ भी निश्चल पर्वत श्रृंग के समान ऊपर नहीं उठ रहा है॥१९॥

**नैव भिनद्मि गलं तव बन्धोः सौहृदमेव तवात्र महात्मन्।**
**तर्जय तर्जितमन्महसं तं नीलतमालरुचेऽवरजं स्वम्॥२०॥**

**कृपा टीका**—मैं तुम्हारे भाई का गला नहीं काट रहा हूँ, इसमें तुम्हारा ही संकोच है। हे नीलतमालके समान शोभा वाले महापुरुष! मेरे भी तेज को भयभीत कर देने वाले अपने छोटे भाइ को तर्जना दो अर्थात् इसे डाँटो॥२०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**लक्ष्मण आह हसंस्तव धन्या देवदया शिशुरक्तनदीष्णा।**
**रेणुकया च सभाजितपूर्वा किं दययात्र कृतागसि विप्र॥२१॥**

**कृपा टीका**—बीच में ही लक्ष्मण जी ने हँसते हुए कहा क्या बात है ब्राह्मण देवता! आपकी दया वास्तव में धन्य है, जिसने बालकों के रक्त की नदी में स्नान किया और जिसको पूर्व में ही आपकी माता रेणुका जी द्वारा बहुत सम्मानित किया गया। फिर तो मुझ अपराधी पर दया करना व्यर्थ ही है॥२१॥

**छिन्धि गलं मम ते यदि शक्तिः किं रघुनाथमुपालभसेऽत्र।**
**नैव भटाः प्रलपन्ति प्रतापं पौरुषमेव रणे घटयन्ति॥२२॥**

**कृपा टीका**—यदि आपका सामर्थ्य हो तो मेरा गला काट दीजिये, श्रीराम को व्यर्थ ही क्यों उपालंभ दे रहे हैं। वीर अपना प्रताप नहीं कहते, वे तो युद्ध में पराक्रम दिखाते हैं॥२२॥

**भार्गव उग्र उदञ्चति यावतद्धन्तुमिमं रघुराजकुमारम्।**
**तावदयं तृणपत्रमिवारात् पृष्टमितः पवनेन विनुन्नः॥२३॥**

**कृपा टीका**—जब तक परशुराम जी श्रीलक्ष्मण को मारने के लिए जितना उनके निकट जाना चाहते हैं वे लक्ष्मण जी से उतने ही पीछे चले जाते हैं, जैसे वायु ने सूखे घास और पत्ते को फेंक दिया हो॥२३॥

**वीक्ष्य समान् हसतोऽथ जनौघान् ध्वस्तमदो द्विजराज इवाज्ञः।**
**क्रोधकषायितलोचनयुग्मो राममुवाच वचो भृगुरामः॥२४॥**

**कृपा टीका**—इस प्रकार सभी लोगों को हँसते हुये देखकर अपने अहंकार के चूर्ण हो जाने पर क्रोध से अरुणनेत्रवाले भृगुराज परशुराम जी अज्ञानी की भाँति भगवान श्रीराम से यह वाक्य बोले॥२४॥

**राम तवाभिमतोऽनुज एषो मां तुदतीव शरोपमवाक्यैः।**
**त्वं कपटी विहिताञ्जलिकोऽथ प्रार्थयसेऽर्थयसे च शमं माम्॥२५॥**

**कृपा टीका**—हे राम! तुम्हारा यह प्यारा छोटा भाई मुझे वाक्य बाणों से बींध रहा है और तुम कपट की मुद्रा में प्रार्थना करते हुए मुझसे शान्ति की भीख माँग रहे हो॥२५॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**त्वं च विभज्य शरासनमैशं यत्कृतवान् मम विप्रियमद्य।**
**द्वन्द्वरणं कुरु चाद्य मया त्वं त्वां न तु हन्मि सहानुजमाजौ॥२६॥**

**कृपा टीका**—तुमने शंकर भगवान का धनुष तोड़कर मेरी बहुत बड़ी हानि की है, इसीलिये मेरे साथ द्वन्द्व युद्ध करो नहीं तो युद्ध में तुम्हें अनुजसहित मार डालूँगा॥२६॥

**राघव! भग्नमहेशमहास्त्रो रूढ़महामद एव विभाषि।**
**भिक्षुक विप्रधियैव वदान्यं स्वं ध्रियसे च निराद्रियसे माम्॥२७॥**

**कृपा टीका**—हे राघव! भगवान शंकर का धनुष तोड़कर तुम अहंकारवान हो चुके हो। अपने को तो दानशील मानते हो और मुझे भिक्षुक ब्राह्मण मानकर अपमानित कर रहे हो॥२७॥

**नास्मि तथाविधविप्रवदज्ञ ये प्रतिगेहमसाधुचरित्राः।**
**लोभजुषो मृगयन्ति कणान् वै चाटुकृतो धनदृप्तनृपाणाम्॥२८॥**

**कृपा टीका**—हे राम! मैं उस प्रकार के चरित्रहीन ब्राह्मणों जैसा नहीं हूँ जो धनमदान्ध राजाओं की चाटुकारिता करके लोभासक्त होकर घर घर अन्न की भीख माँगते फिरते हैं॥२१॥

**राघव! नास्मि कदापि च भिक्षुर्भूमिरियं विजता परिदत्ता।**
**ब्राह्मणकीर्तिविशुद्धपताकां नित्यमहं चरितेन बिभर्मि॥२९॥**

**कृपा टीका**—श्रीराघव! मैं भिक्षुक ब्राह्मण नहीं हूँ। यह भूमि मैंने जीती भी और ब्राह्मणों को दी भी। मैं अपने चरित्र से ब्राह्मणवंश की कीर्ति पताका को दिग्दिगन्त में फैलाता हूँ॥२९॥

**त्वं यदि शम्भुधनुःप्रविभज्य स्वं जगतीजयिनं परिवेत्सि।**
**द्वन्द्वरणं घटयस्व मया तन्मामविजित्य कथं विजयी त्वम्॥३०॥**

**कृपा टीका**—यदि तुम शिवधनुष तोड़कर अपने को जगत विजयी मानते हो तो मेरे साथ द्वन्द्व युद्ध करो। मुझे जीते बिना तुम कैसे विजयी हो सकते हो॥३०॥

**इत्युक्तवन्तं भृगुवंशकेतुं रुषा समाकम्पितधर्मसेतुम्।**
**प्रसाद्य शीलेन विनैव कोपं सीताभिरामः समुवाच रामः॥३१॥**

**कृपा टीका**—इस प्रकार क्रोध से धर्म के सेतु को कंपित करके कटुवाक्य बोलते

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

हुये भृगुवंश के पताकास्वरूप परशुराम जी को अपने शील से प्रसन्न करके क्रोध के बिना ही सहज मुद्रा में सीताजी को आनन्दित करनेवाले श्रीराम बोले॥३१॥ श्लोक संख्या ३१ से ५६ तक उपजाति छन्द है।

**प्रसीद मे भार्गवकञ्जभानो त्रायस्व मां धार्मिकसंकटात्त्वम्।**
**किं द्वन्द्वयुद्धं भवते प्रदद्यां द्वन्द्वानि पूर्वं हि विनाशितानि॥३२॥**

**कृपा टीका**—हे भृगुवंश कमल के सूर्य मुझ पर आप प्रसंन्न हों, मुझे धर्म संकट से बचा लें, मैं आपसे कैसे द्वन्द्व युद्ध करूँ। क्योंकि मैंने पहले ही द्वन्द्वों का विनाश कर दिया है॥३२॥

**स्याद्द्वन्द्वयुद्धं समशीलमेव समानता का मम भार्गवेण।**
**क्व मस्तकं चुम्बितपुष्पगुच्छं क्व तत्पदं पांशुविगुण्ठितश्रि॥३३॥**

**कृपा टीका**—समान स्वभाव में ही द्वन्द्व युद्ध होता है और मेरी आपसे क्या समानता? कहाँ पुष्पों के समूह से सेवित मस्तक और कहाँ धूलि से धूसरित चरण?॥३३॥

**मैवं प्रवादीर्भृगुवंशदीप का चावयोर्धर्मसमानता भो।**
**क्व क्षत्रियोऽहं रघुराजपुत्रः को वै भवान् ब्राह्मणवंशरत्नम्॥३४॥**

**कृपा टीका**—हे भृगुवंश के दीपक आप इस प्रकार न बोलें आप की हमारी धर्म से कैसी समानता कहाँ मैं क्षत्रियवंश में उत्पन्न राजकुमार कहाँ आपं ब्राह्मण वंश के रत्न॥३४॥

**अहं च लोके युगलाक्षरेण ख्यातोऽस्मि नाम्ना किल राममात्रः।**
**भवांस्तु रामः परशूक्तपूर्वः किं ते समत्वं रघुभिश्च दासैः॥३५॥**

**कृपा टीका**—मैं लोक में दो अक्षर वाले राम नाम से प्रसिद्ध हूँ आप परशुपूर्वक राम अर्थात् पंचाक्षर नाम से प्रसिद्ध हैं। रघुवंशी आपके दास हैं। सेवक की स्वामी से क्या तुलना?॥३५॥

**एको गुणो मे धनुरेव देव सन्निर्गुणो येन गुणालयोऽहम्।**
**भवांस्तु दिव्यैर्नवभिर्गुणैःस्वैर्ग्रहैरिवव्योम्नि विधुर्विभाति॥३६॥**

**कृपा टीका**—हे भगवन् मेरे पास धनुष ही एक गुण है जिससे मैं निर्गुण होकर भी सभी कल्याणगुणों का आगार कहा जाता हूँ। आप तो दिव्य अपने नौ गुणों

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

से उसी प्रकार शोभित होरहे हैं जैसे आकाश में नवग्रहों से चन्द्रमा शोभित होते हैं॥३६॥

**सर्वप्रकारैर्लघुरेष दासः पराजितो द्वन्द्वरणं विनापि।**
**किं द्वन्द्वयुद्धेन महर्षिपुत्र प्रसादितस्त्वं शिरसा मयैव॥३७॥**

**कृपा टीका**—मैं द्वन्द्वयुद्ध के बिना भी सब प्रकार से आपसे पराजित हो चुका हूँ। मैं एक छोटा दास हूँ द्वन्द्व युद्ध से क्या लाभ? मैं आपको सिर झुकाकर प्रसन्न कर रहा हूँ॥३७॥

**यदात्थ विद्वन् द्विजदेवतानां निरादरं राघव आतनोति।**
**तन्निर्व्यलीकं भ्रमजल्पितं ते रामः सदा ब्राह्मणपादनिष्ठः॥३८॥**

**कृपा टीका**—हे महर्षे! जो आपने यह कहा कि रघुवंशी ब्राह्मणों का अपमान करते हैं यह आपका कथन भ्रमपूर्ण और असत्य है क्योंकि मुझ राम की ब्राह्मणों के चरणों में निरंतर निष्ठा रही है॥३८॥

**निराद्रिये चेद् द्विजपुङ्गवान् भो तदा तु सत्यं श्रृणु भार्गवेन्द्र।**
**को वा त्रिलोक्यां दिविदेवतासु साष्टाङ्गनामं यमहं नमेयम्॥३९॥**

**कृपा टीका**—हे परशुराम जी यदि मैं ब्राह्मणों का निरादर करता होता तो सुनिये, तीनों लोकों में साकेत में या गोलोक या वैकुण्ठ में कौन ऐसा है जिसे मैं साष्टांग प्रणाम करूँ॥३९॥

**जगन्नियन्ताऽपि भवन्नियम्यः सदासमर्थोऽपि भवद्विधेयः।**
**त्रिलोकनाथोऽपि च विप्रदासो रामोऽस्म्यहं दाशरथिर्द्विजेन्द्र॥४०॥**

**कृपा टीका**—हे ब्राह्मण श्रेष्ठ! मैं जगत का नियंता होकर भी आपका नियम्य हूँ। सर्वसमर्थ होकर भी आपका आज्ञाकारी हूँ मैं दशरथपुत्र राम तीनों लोकों का नाथ होकर भी ब्राह्मणों का दास हूँ॥४०॥

**बिभेमि नाहं पुरुहूतवज्रान्न विष्णुचक्रान्न महेशशूलात्।**
**न वित्तपास्त्रान्न यमस्य दण्डाद् बिभेम्यहं ब्रह्मकुलापमानात्॥४१॥**

**कृपा टीका**—हे भगवन्! मैं इन्द्र के वज्र से नहीं डरता, मैं विष्णु के चक्र तथा शंकर के त्रिशूल से नहीं डरता, मैं कुबेर के अस्त्र तथा यम के दण्ड से भी नहीं डरता, केवल ब्राह्मणकुल के अपमान से डरता हूँ॥४१॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सूर्यश्च चन्द्रो मरुतोऽनलश्च वायुस्त्रिदेवा निरतिश्च कालः।**
**यद्भीतभीता निजकार्यलग्ना सोऽहं सदा ब्राह्मणतो बिभेमि॥४२॥**

**कृपा टीका**—हे भगवन्! सूर्य-चन्द्र-मरुत-अग्नि-वायु-ब्रह्मा-विष्णु-शंकर, मृत्यु और काल जिसके भय से भयभीत होकर अपने अपने कार्य में लगे रहते हैं, वही मैं परब्रह्म राम ब्राह्मणों से निरंतर डरता रहता हूँ॥४२॥ यह इन्द्रवज्रा छन्द है।

**यद् ब्राह्मणान् देव निराद्रियेय त्वत्पादपद्मं कथमानमेयम्।**
**तदा गृहीतेषु शरासनोऽहं क्रुद्धो नियुद्धेय सह त्वयाद्य॥४३॥**

**कृपा टीका**—हे भगवन्! यदि मैं ब्राह्मणों का अपमान करता तो आपके चरण कमलों में क्यों प्रणाम करता? तब तो धनुष बाण लेकर आपके साथ आज युद्ध करता॥४३॥

**देवेषु दैत्येषु निशाचरेषु गन्धर्वविद्याधरकिन्नरेषु।**
**को मां त्रिलोक्यां युधिचण्डकोपं सहेत कालानलतुल्यवेगम्॥४४॥**

**कृपा टीका**—हे भगवन! देवता-दैत्य-राक्षस-गन्धर्व-विद्याधर-किन्नर अथवा तीनों लोकों में कौन ऐसा है, जो युद्ध में प्रचण्ड क्रोध को प्राप्त हुए कालाग्नि के समान वेगवाले मुझ राम को सहन कर सके॥४४॥

**स्रष्टा विधाता किल वेदवक्त्रो रथाङ्गपाणिर्भगवांश्च विष्णुः।**
**त्रिशूलहस्तो वृषभध्वजो वा क्रुद्धाननं नालमपीक्षितुं माम्॥४५॥**

**कृपा टीका**—वेदवक्ता जगत के सृष्टा ब्रह्मा, चक्रपाणि भगवान नारायण अथवा त्रिशूलधारी भगवान शंकर भी क्रोध से व्याप्त मुझ राम को निहार भी नहीं सकते॥४५॥

**एकोऽद्वितीयोऽप्यगुणोऽव्ययोऽपि त्रैलोक्यलक्ष्मीसुभगालयोऽपि।**
**सोऽहं हृदा ब्राह्मणपादचिह्नं श्रीवत्सलक्ष्मानुचरं बिभर्मि॥४७॥**

**कृपा टीका**—हे महर्षे! मैं एक निरुपम-निर्गुण-अव्यय तथा तीनों लोकों की लक्ष्मी का एकमात्र आश्रय होता हुआ भी, सर्वसमर्थ परमेश्वर राम, ब्राह्मणों के चरणचिह्न को श्रीवत्स के साथ अपने हृदय पर धारण करता हूँ॥४६॥

**यस्याङ्घ्रिपद्मं परिचर्य धीरास्तरन्ति मृत्युं गतसर्वरोगाः।**
**सोऽहं भवत्पादपयोजपांशुं बिभर्मि मूर्ध्नाद्विजदेवनिष्ठः॥४७॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—जिसकी चरणकमल की सेवा करके धीर जन सभी रोगों से मुक्त होकर मृत्यु को पार कर लेते हैं, वही मैं राम ब्राह्मणों में निष्ठा रखने के कारण ही आपके चरणकमल का पराग अपने सिर पर धारण करता हूँ।।४७।।

**द्विजाः सदा नः कुलदैवतानि प्रत्यक्षरूपाणि महानुभावाः।**
**तान् पूज्यपादान् परिपूज्य नित्यं स्वं मानये मङ्गलभागधेयम्।।४८।।**

**कृपा टीका**—हे भगवन्! ब्राह्मण हमारे कुल के देवता प्रत्यक्षतः सिद्ध हैं। उन पूज्यचरणों की पूजा करके ही मैं अपना मंगल भाग्य समझता हूँ।।४८।।

**विप्रस्सदा वैदिकधर्मरक्षी श्रुतिप्रमाणैकरतःसुशीलः।**
**तं वै तिरस्कृत्य नरस्त्रिलोक्यां क्षेमं कथं विन्दतु मन्दभाग्यः।।४९।।**

**कृपा टीका**—ब्राह्मण वेदप्रमाण में निष्ठा रखनेवाला सच्चरित्र और वैदिक धर्म का रक्षक होता है, उसका तिरस्कार करके कौन अभागा मनुष्य तीनों लोकों में कल्याण प्राप्त कर सकता है।।४९।।

**यदैव विप्रो निजवर्णधर्मं त्यक्त्वा विधर्मे कुरुतेऽनुरागम्।**
**तदैव लोकैरमयन्यतेऽसौ सौमित्रिणेवाद्य भवान्सभायाम्।।५०।।**

**कृपा टीका**—जिस समय ब्राह्मण अपने धर्मबाण को छोड़कर परधर्म में अनुराग करने लगता है उसी समय वह लोगों द्वारा अपमानित होता है। जैसे आज आप भरी सभा में लक्ष्मण द्वारा अपमानित हुए।।५०।।

**इति ब्रुवाणो ननु ताटकारिराविश्चिकीर्षन् परमात्मतत्त्वम्।**
**स्वं दर्शयामास भृगूद्वहाय वक्षोलसत् ब्राह्मणपादलक्ष्म।।५१।।**

**कृपा टीका**—इस प्रकार कहते हुए, अपने परमात्म तत्व को प्रकट करने की इच्छा से ताटका के शत्रु भगवान श्रीराम ने ब्राह्मण चरणचिह्न से युक्त अपने वक्षस्थल का परशुराम जी को दर्शन करा दिया।।५१।।

**साकेतसीताकुचकुंकुमश्रीसंलिप्तमासञ्जितकौस्तुभाभम्।**
**सरस्वतीजह्नुसुताप्रवाहं वहद्यथा मारकताद्रिशृङ्गम्।।५२।।**

**कृपा टीका**—भगवान के उस वक्षस्थल पर नित्य साकेतवासिनी श्रीसीता जी के वक्ष पर लगे हुए कुंकुम की शोभा थी, वह कौस्तुभमणि से युक्त होकर ऐसा लग रहा था मानो सरस्वती और गंगाजी के प्रवाह से युक्त मरकत का समतल शिखर हो।।५२।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**सीतातनुत्विट्क्षुरितं सहारं मालां दधानं चलवैजयन्तीम्।**
**शतप्रभातारकभूषिमध्यं नवाम्बुदं व्योम्नि यथा लसन्तम्॥५३॥**

**कृपा टीका**—प्रभु का वक्षस्थल सीताजी की शरीरशोभा से चमत्कृत, हारयुक्त तथा कुछ हिलती हुई वैजयन्ती माला को धारण करके बिजली और तारा से सुशोभित मध्य आकाश में विराजमान नीलमेघ के समान सुशोभित हो रहा था॥५३॥

**दक्षे लसत् विप्रपदाब्जचिह्नं नीलोत्पलस्यान्तरितं यथालिम्।**
**संसूचयद् वामविभागभागं श्रीवत्सलक्ष्मार्जितभाग्यलक्ष्मि॥५४॥**

**कृपा टीका**—जिनके दाहिने भाग में ब्राह्मण का चरणकमलचिह्न उसी प्रकार विराज रहा था जैसे नीले कमल के मध्य में भ्रमर और इधर श्रीवत्सचिह्न से अर्जित भाग्यशोभा से युक्त भगवान का वक्षस्थल, बाँयें भाग की भी सौभाग्य की सूचना दे रहा था॥५४॥

**विलोक्य वक्षो विततं विभूम्नः समुल्लसद् ब्राह्मणपादलक्ष्म।**
**विज्ञाय नारायणदेवदेवं सविस्मयोऽवेपत जामदग्न्यः॥५५॥**

**कृपा टीका**—इस प्रकार ब्राह्मण के चरणचिह्न से सुशोभित प्रभु श्रीराम के विशाल वक्षस्थल को देखकर उन्हें भगवान नारायण का भी अंशी महाविष्णु समझकर परशुरामजी आश्चर्यचकित होकर कंपित हो उठे॥५५॥

**निष्ठां गतं स्वाभिनयञ्च विप्रो विश्रामयंश्चापि निजावतारम्।**
**रामे विपश्चिद् विपदां विरामे रामस्तु रामं रमयन् ररास॥५६॥**

**कृपा टीका**—अपने अभिनय की लक्ष्यपूर्ति देखकर विपत्तियों के विरामस्थल श्रीराम में अपने अवतार को विश्राम देते हुए श्रीराम को आनन्दित करते हुए विद्वान् ब्राह्मणश्रेष्ठ परशुराम जी बोले॥५६॥

**हे हेरम्बशराम्बशैलतनयासंसेव्यशोभानिधे**
**हे हे त्र्यम्बकहृत्सरोरुहलसद्रोलम्बरोचिर्मय।**
**रम्यं राम रमापतेर्धनुरिदं विज्यं गृहाणाम्बुदो**
**दैवं वा प्रगुणं विकृष्य सशरं निःसंशयं मां कुरु॥५७॥**

**कृपा टीका**—हे गणपति और कार्तिकेय तथा पार्वती जी के भी सेव्य, शोभा के

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

धाम तथा हे भगवान शंकर के हृदयकमल के भ्रमर, परम प्रकाशमान प्रभु श्रीराम! इन्द्रधनुष को बादल की भाँति प्रत्यंचा से रहित भगवान नारायण के इस धनुष को ग्रहण कीजिये, इस पर प्रत्यंचा चढ़ाकर एवं इसे बाणसहित खींचकर मुझे संशयशून्य कर दीजिये॥५७॥ श्लोक संख्या ५७ से ६२ तक शार्दूलविक्रीडित छन्द है।

**इत्युक्त्वा स तथास्त्वितीरितवते पूर्णाय पुंसे मुदा**
**सान्द्रानन्दपयोमुचे हरिधनुर्विज्यं विडौजा यथा।**
**कौसल्यातनयाय तद्भगवते कस्मैचिदस्मै धनुः**
**शार्ङ्गं स्वेन पिनाककोटिकठिनं रामाय रामो ददौ॥५८॥**

**कृपा टीका**—इस प्रकार कहकर ऐसा ही हो इस प्रकार श्रीरामजी की स्वीकृति दे देने पर पुराणपुरुष कौसल्यानन्दवर्धन प्रभु श्रीराम को परशुराम जी ने प्रसन्न होकर स्वयं के साथ करोड़ों पिनाकों से भी कठोर प्रत्यंचारहित शार्ङ्गधनुष को उसी प्रकार समर्पित कर दिया, मानो इन्द्र, घनीभूत आनन्द के बादल को साक्षात् इन्द्रधनुष समर्पित कर रहे हों॥५८॥

**श्रीरामं समकालमेव धनुषो दानस्य दानव्रती**
**फुल्लेन्दीवरसुन्दरं सुरवरं सीतावरं श्रीधरम्।**
**पूर्णं श्रीपुरुषोत्तमं किल महाविष्णुञ्च नारायणो**
**विद्युत्पुञ्जमिवाविवेश जलदं श्रीराघवं भार्गवः॥५९॥**

**कृपा टीका**—धनुष प्रदान के साथ ही दानव्रत में निपुण, भृगुवंश में उत्पन्न, नारायण परशुराम जी, विकसित नीले कमल के समान सुन्दर, देवताओं में श्रेष्ठ, शोभाधाम, पुराणपुरुषोत्तम, महाविष्णु भगवान रामचन्द्र जी राघव सरकार में नवीन मेघ में विद्युत की भाँति प्रवेश कर गये॥५९॥

**याते तेजसि राघवं मुनितनोर्दीपादिवज्ज्योतिषि**
**निर्याते किल दिव्यशस्त्रनिकरे नष्टे कुठारे सति।**
**निर्वीर्यो हतदर्पसाहसबलोऽदर्शेन्दुकल्पो मुनि**
**र्मन्दंमन्दमुदैक्षताम्बुजदृशं रामश्चिरं राघवम्॥६०॥**

**कृपा टीका**—इस प्रकार दीपक से ज्योति के समान परशुराम जी के शरीर से

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

समस्त तेज के श्रीराम में प्रविष्ट होजाने पर एवं उसी के साथ सभी दिव्यशस्त्रों के चले जाने पर और देखते ही देखते फरसे के लुप्त हो जाने पर अमावस्या के चन्द्रमा के समान पराक्रमरहित तथा गर्व साहस एवं बल से शून्य भृगुपति परशुराम जी कमलनयन भगवान श्रीराघव सरकार को धीरे धीरे पलकें खोलकर बहुत देर तक निहारते रहे॥६०॥

**श्रीरामो भगवांस्तदा भृगुपतेः शार्ङ्गं गृहीत्वा करात्**
**सानन्दं प्रगुणं विकृष्य बलवत् सज्यं चकार क्षणात्।**
**मुष्णन् सेन्द्रधनुर्नवाम्बुदरुचिं पुष्णन् सतो वैष्णवान्**
**निघ्नन् भार्गवदर्पशैलशिखरं चापे शरं संदधे॥६१॥**

**कृपा टीका**—भगवान श्रीराम ने परशुरामजी के हाथ से शार्ङ्ग धनुष लेकर उस पर प्रत्यंचा चढ़ाकर बलपूर्वक खींचकर एक क्षण में ही डोरी से युक्त कर दिया। इन्द्र धनुष से युक्त बादल की शोभा चुराते हुए, सन्त वैष्णवों का पालन करते हुये तथा परशुरामजी के अहंकार के पर्वत शिखर को ढहाते हुए धनुष पर बाण का संधान किया॥६१॥

**शार्ङ्गे श्रीरघुनन्दनेन तरसा सन्धीयमाने शरे**
**त्रेसुर्भूतगणानि धैर्यधरणी साद्रिश्च कम्पे धरा।**
**वृत्तं भार्गवराघवीयमनघं द्रष्टुं दिवश्चागता**
**देवा नन्दनपुष्पवर्षणपरा श्रीराघवं तुष्टुवुः॥६२॥**

**कृपा टीका**—इस प्रकार भगवान श्रीराम द्वारा शार्ङ्ग पर बाण का संधान करते ही सभी प्राणी डर गये और परम धैर्यवती पृथ्वी पर्वतों के साथ काँप उठी। इस प्रकार निष्पाप भार्गवराघवीय चरित्र का दर्शन करने के लिये देवता आकाश में आ गये। और नन्दनवन के पुष्प बरसाते हुए श्रीरामघव की स्तुति करने लगे॥६२॥

**कृतकोसलजास्तनपान प्रभो धृतभारतभाग्यविधान विभो।**
**अवलम्बय नः कलकञ्जकरे विजयीभव राघव राम हरे॥६३॥**

**कृपा टीका**—कौसल्या जी के स्तन को पान करने वाले एवं भारत के भाग्य का विधान करने वाले, हे सर्वसमर्थ व्यापक, श्रीहरि राघवेन्द्र भगवान राम! हमें

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कोमल कमलकर का अवलम्बन दें, आप विजयी हों॥६३॥ श्लोक ६३ से ७० त्रोटक छन्द है।

**धृतचापशराकरसायक हे रघुनायक मंगलदायक हे।**
**कुरुदेव कृपां सुरवृन्दकरे विजयी भव राघव राम हरे॥६४॥**

**कृपा टीका**—हे तरकस धनुर्बाण धारण करने वाले, हे रघुनायक! हे मंगलदाता श्रीराघव! देववृन्दों के समूह पर कृपा कीजिये। आप सदैव विजयी रहें॥६४॥

**रघुनन्दन नन्दितनन्दन हे जनचन्दन चन्दितचन्दन हे।**
**महिजामुखचन्द्रचकोरप्रभो विजयी भव राघव राम विभो॥६५॥**

**कृपा टीका**—हे रघुनन्दन! हे नन्दनवन को भी आनन्दित करने वाले, हे भक्तों के आनन्ददाता, हे चन्दन को भी शीतल करनेवाले, हे सीताजी के मुखचन्द्र के चकोर, सर्वसमर्थ विष्णु को भी सत्ता देनेवाले राम राघव! आप विजयी हों॥६५॥

**नवनीलतमालसमानतनो गुणरञ्जितसिद्धमुनीन्द्रमनो।**
**रघुकञ्जदिवाकर दिव्यमते विजयी भव राघव विश्वपते॥६६॥**

**कृपा टीका**—हे नीले तमाल के समान श्रीविग्र वाले, हे अपने गुणों से सिद्धों मुनीन्द्रों और मनुओंको प्रसन्न करने वाले, हे अलौकिक बुद्धिसंपन्न, हे सूर्यकुल कमल के सूर्य, विश्व के पति श्रीराम आप विजयी हों॥६६॥

**हृतदूषण दूषणदूषण हे, हनुमत्प्रिय भावविभूषण हे।**
**परिपाहि सुरान् व्यथितान् विपदा विजयी भव राघव राम सदा॥६७॥**

**कृपा टीका**—दूषण राक्षस के शत्रु दोषों को नष्ट करने वाले, हनुमानजी के प्रिय भावों को भी अलंकृत करने वाले, प्रभु, विपत्ति से व्यथित देवताओं की रक्षा कीजिये, और हे राघव! आप सदैव विजयी हों॥६७॥

**जनरञ्जन जानकिनाथ हरे परिपालय नः पतितान्नृहरे।**
**बलवीर्यनिधानदयाजलधे विजयी भव राघव शीलनिधे॥६८॥**

**कृपा टीका**—हे भक्तों के रंजक, हे जानकीपते, हे मनुष्य श्रेष्ठ श्रीहरि! हम पतितों की रक्षा कीजिये। हे बलपराक्रम के कोष, हे दयासागर, हे शीलनिधे श्रीराघव! आप विजयी हों॥६८॥

**श्रितलक्ष्मणलक्षितलाघव भो, रिपुवीर्यमहोदधिवाडव भो।**
**भरतादिकसेवित शास्त्ररते विजयी भव राघव भूमिपते॥६९॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे लक्ष्मण के आश्रय, हे हस्तलाघव में निपुण, हे शत्रुमहासागर के वाडवाग्नि, हे भरतादि से सेवित, हे शास्त्रानुरागी महाराज श्रीराघव! आप विजयी हों॥६९॥

**भवभावन रावणसूदन हे खलसूदन हे, मधुसूदन हे।**
**प्रणिधेहि पदं मम नेत्रपथे विजयी भव राघव दाशरथे॥७०॥**

**कृपा टीका**—हे संसार के उत्पादक, हे रावण के नाशक, हे खलों के शत्रु, हे मधुमास में उत्पन्न होने वाले, और करुणार्द्र, हमारे पलकों पर अपने चरण रखिये। हे दशरथनन्दन, हे भगवान राम, हे राघव! आप विजयी हों॥७०॥

**जडीकृतं विलोक्य लोकमाकुलं शुचाकुलं**
**भयाकुलं विपक्ष्मणां शरेण शार्ङ्गपाणिना।**
**भयङ्करोऽपि शङ्करो विनम्रकन्धरो हरो**
**हरिं शिखण्डशेखरं जगाद चन्द्रशेखरः॥७१॥**

**कृपा टीका**—इस प्रकार भगवान श्रीराम द्वारा अपने बाण से देवलोक को जड़ीभूत, शोकाकुल, भयपूर्ण और विस्मित देखकर भयंकर भगवान शंकर भी अपना शिर झुकाकर शशांकशेखर जगत्संहर्ता शिव, मिथिला में पधारकर मयूरपिच्छधारी भगवान श्रीराम से बोले॥७१॥ श्लोक संख्या ७१ से ७६ तक पंचचामर छन्द है।

**जयत्यनन्तकच्छमत्स्यभीमदंष्ट्रशूकर–**
**प्रचण्डनारसिंहविष्णुभार्गवावतारधृक्।**
**व्यपेतकार्यकारणो धराभरापहारणः**
**पिनाकपद्मदारणः प्रमत्तरामवारणः॥७२॥**

**कृपा टीका**—शेष–कच्छप–महामत्स्य–भयंकर दाँतों वाले महावराहरूप, भयंकर नृसिंह–वामन एवं परशुरामावतार लेने वाले, कार्यकारण से परे श्रीकृष्ण बौद्धावताररूप, भूभारहारी हलधर एवं कल्किरूप, पिनाकरूप कमल के विनाशक, श्रीरामरूप मतवाले गजेन्द्र की जय हो॥७२॥

**नमः प्रचण्डबाहवे नमोऽसुरेन्दुराहवे**
**नमः सुबाहुशत्रवे नमो निगूढजत्रवे।**
**नमः पिनाकदारिणे नमः समावतारिणे**
**नमो विदेहनन्दिनीमनोवने विहारिणे॥७३॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे प्रचण्डबाहो, हे असुररूपचन्द्र के राहु, हे सुबाहु के शत्रु, हे गूढ़ अस्थिवाले, हे पिनाक तोड़नेवाले, हे सभी के अवतारी, हे जानकी जी के मन वन में विहार करने वाले प्रभु श्रीराम! आपको नमस्कार हो नमस्कार हो॥७३॥

**नवीनकन्दसुन्दरं हरिं भवाब्धिमन्दरम्**
**सुशीलसौख्यमन्दिरं पदे नमत् पुरन्दरम्।**
**समस्तसद्गुणाकरं जितानानामृताकरम्**
**दिनेशवंशभास्करं ब्रुवे विदेहजावरम्॥७४॥**

**कृपा टीका**—नवीन बादल के समान सुन्दर, भवसागर के मन्दराचल के समान सुन्दर, स्वभाव और सुख के मन्दिर, अपने चरण में इन्द्र को भी नत करने वाले, संपूर्ण कल्याणगुणों के आगार, मुख की कान्ति से चन्द्रमा को भी जीतने वाले, सूर्यकुल के सूर्य, सीतावर श्रीहरि का मैं यशोगान करता हूँ॥७४॥

**मृगेन्द्रकम्रकन्धरं नियम्य पंक्तिकन्धरम्**
**सरोल्लसत्धनुर्धरं स्वधर्मभृद्धुरन्धरम्।**
**सुराधरं धराधरं धराधराधराधरम्**
**चकोरबन्धुबन्धुरं स्मरामि रामसिन्धुरम्॥७५॥**

**कृपा टीका**—सिंह के समान स्कन्धवाले, दशकन्धर रावण को भी नियंत्रित करने वाले, बाण से सुशोभित धनुष को धारण करने वाले, स्वधर्म पालन करने वालों के भी धुरंधर देवताओं को आदरपूर्वक धारण करनेवाले अथवा सुर भी जिनसे अधर अर्थात् छोटे हैं ऐसे पृथ्वीपालक धराधर हिमालय को भी धारण करनेवाली पृथ्वी को भी धारण करने वाले, चन्द्रमा के समान सुन्दर श्रीरामरूप मत्तगजेन्द्र का मैं स्मरण करता हूँ॥७५॥

**दयस्व भक्तवत्सल क्षमस्व दीनसंबल**
**प्रसीद जानकीश हे निषीद मे मनोगृहे।**
**सपत्नवीर्यवाडवं प्रसिद्धहस्तलाघवम्**
**कृपादिसद्गुणार्णवं भजामि रामराघवम्॥७६॥**

**कृपा टीका**—हे भक्तवत्सल! प्रसन्न होइये, हे दीनों के पाथेय! दया कीजिये, हे जानकीपते! क्षमा करके हमारे मनमन्दिर में निवास कीजिये। शत्रुओं के पराक्रम

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सागर के वडवानल, हस्तलाघव में प्रसिद्ध, कृपा आदि सद्गुणों के महासमुद्र श्रीरामराघव का मैं स्मरण करता हूँ॥७६॥

**अथ निजमहिमार्कतीव्रतापप्रगलितदर्पतमस्तनूतुषारम्।**
**भृगुपतिमवलोक्य दीनसत्त्वं मधुरगिरा निजगाद रामभद्रः॥७७॥**

**कृपा टीका**—इसके पश्चात् अपनी महिमारूप सूर्यताप से जिनका अहंकाररूप अंधकार और शरीररूप तुषार गल चुका था, ऐसे दीन अन्तःकरण वाले परशुराम जी को देखकर भगवान रामभद्र मधुरवाणी में बोले॥७७॥ श्लोक ७७ से ८५ तक पुष्पिताग्रा छन्द है।

**जय जय जमदग्निसूनुरत्न त्रस नहि मध्यभयं ददामि तेऽद्य।**
**कथमपि नहि भूसुरं निहन्यां द्विजसुरधेनुसतां हितावतारः॥७८॥**

**कृपा टीका**—हे जमदग्नि के पुत्ररत्न! आपकी जय हो, आपकी जय हो, मुझसे मत डरिये आज मैं आपको अभयदान देता हूँ। ब्राह्मणों-देवताओं-संतों और गौओं के लिये अवतार लेनेवाला मैं किसी भी प्रकार ब्राह्मण को नहीं मार सकता॥६५॥

**अयमविफललक्षकः शरो मे विधिरिववेदगिरामपूर्वहेतुः।**
**क्व पततु कृपया दिशेषु देशं पविरिव वृत्रजिघांसया मघोनः॥७९॥**

**कृपा टीका**—वेदवाणियों की विधि की भाँति अपूर्वपुण्यरूप अलौकिक घटना ही जिसका हेतु है, ऐसा मेरा यह बाण निष्फल लक्ष्यवाला नहीं हो सकता। वृत्रासुर को मारने की इच्छा से छोड़ा हुआ इन्द्र के वज्र जैसा यह बाण कहाँ गिरे? कृपा करके इसका लक्ष्यदेश बताइये॥७९॥

**कुशिकसुतवरीयसीप्रसूजं नहि भवकन्तमहं निहन्मि देव।**
**तव गतिमभिहन्मि किं त्वया तान् सुकृतमयांस्तपसार्जितान् सुलोकान्॥८०॥**

**कृपा टीका**—विश्वामित्र जी की बड़ी बहिन के पौत्र होने के नाते मैं आज आपको नहीं मार रहा हूँ। अब यह बतायें क्या आपकी गति को नष्ट कर दूँ, अथवा तपस्या से अर्जित आपके लोकों को नष्ट कर दूँ?॥८०॥

**पुररिपुकृपयाप्तसर्वविद्यो निहतसहस्रभुजादिविप्रशत्रुः।**
**मदगज इव वै बभूविथ त्वं विगतविवेकदृशिश्च दानदृप्तः॥८१॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—भगवान शंकर की कृपा से सभी विद्याएँ प्राप्त करके सहस्रबाहु आदि ब्राह्मणशत्रुओं को मारकर आप मतवाले हाथी के समान ही विवेकनेत्र से शून्य और दानमद से गर्वीले होगये थे॥८१॥

**पितृवधकृतकोपकालुषीकः परशुधरस्त्वमहन्निरागसोऽपि।**
**नृपनृपतनयांसगर्भबालान् कुलिक इवाल्पमृगान् कुलीनमानी॥८२॥**

**कृपा टीका**—हे परशुराम जी महाराज! आप अपने को कुलीन समझते हैं, फिर भी पिता के बध पर किये हुये क्रोध के कारण विवेकान्ध होकर बहेलिये की भाँति छोटे मृगों जैसे निरपराध, राजाओं राजपुत्रों और गर्भ के बालकों का भी वध कर दिया॥८२॥

**पुनरपि मिथिलास्वयंवरे त्वं यदखिलभागवताभिवंदितांघ्रिम्।**
**अतिकटुवचनानि वै सुमित्रासुकृतमयं लघुलक्ष्मणं न्यगादीः॥८३॥**

**कृपा टीका**—इसके पश्चात् भी मिथिला स्वयंवर में आकर आपने उन मेरे प्यारे लक्ष्मण को अत्यंत कटुवचन कहे, जो सुमित्रा के सुकृतरूप हैं और संपूर्ण भागवत जिनके चरणकमल की वन्दना करते हैं॥८३॥

**तदघपविविनष्टपुण्यराशिर्व्रज तपसे जगतां भवन्भवाय।**
**सुरमुनिमहितं महेन्द्रशैलं नहि मम भक्तविमानना विभूत्यै॥८४॥**

**कृपा टीका**—उसी पापरूप वज्र से आपका पुण्यसमूह क्षीण हो चुका है। अतः आप जगत का हित करने के लिये देवताओं और मुनियों से सेवित महेन्द्र पर्वत पर जाइये। क्योंकि मेरे भक्त का अपमान किसी के भी कल्याण के लिये नहीं होता॥८४॥

**अविहतगतिरेवमूर्ध्वरेता द्विजकुलशस्य घनोमनोजजेता।**
**विबुधवरलतामिवैत्यकीर्तिं त्रिजगति राम रमस्व पुष्पिताग्राम्॥८५॥**

**कृपा टीका**—हे परशुरामजी! इस प्रकार अबाधित गति होकर अखंड ब्रह्मचर्यव्रती रहकर काम पर विजय प्राप्त करके ब्राह्मणकुलरूप हरे धान्यों को हरे भरे करते हुये मनोरथरूप पुष्पों से युक्त कल्पलता जैसी कीर्ति प्राप्त करके तीनों लोकों में रमते रहिये॥८५॥

**जगतां जननादिहेतुराद्योऽप्यहमेको विगुणो गुणैकसिन्धुः।**
**श्रुतिभिर्मुनिभिस्ततोऽस्मिगीतो रघुरामो भगवान् न कोऽपि चान्यः॥८६॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे महाराज! इसीलिये जगत के जन्मादिका अभिन्न निमित्तोपादान कारण एक निर्गुण होते हुए भी सगुण, श्रुतियों और मुनियों द्वारा मैं रघुकुल में उत्पन्न राम ही भगवान कहा गया हूँ और कोई नहीं॥८६॥ श्लोक ८६ से ८७ तक मत्रमयूरिकम् छन्द है।

**जननं मरणं नृणामविद्यामगतिं जीवगतिं तथापि विद्याम्।**
**विदुषो भगवानिति स्म संज्ञा मयि रामे घटते श्रुतिप्रसिद्धा॥८७॥**

**कृपा टीका**—हे भगवन्! जीव का जन्म-मरण-गति-अगति-विद्या और अविद्या को जानने वाले की ही श्रुति ने भगवान संज्ञा निश्चितकी है, वह वेदप्रसिद्ध भगवान संज्ञा मुझ राम में ही घटती है॥८७॥

**ऐश्वर्यं सकलञ्च वेदविहितं धर्मं यशश्श्रीस्तथा**
**ज्ञानं यत् चिदचिदविशिष्टपरकं वैराग्यमेवामलम्।**
**मय्येतानि भगानि षट् च सततं प्रोज्जृम्भितानीश्वरे**
**तेनाऽहं भगवांञ्छ्रुतो दशरथापत्यं च रामः स्मृतः॥८८॥**

**कृपा टीका**—हे परशुराम जी! ऐश्वर्य-वेदविहित धर्म-यश-श्रीचिद्चिद्विशिष्ट परमात्मासंवन्धी ज्ञान निर्मल वैराग्य ये छहों ऐश्वर्य मुझ ईश्वर में निरंतर विराजते हैं। इसीलिये श्रुतियों और स्मृतियों द्वारा मैं दशरथपुत्र राम ही भगवान कहा गया हूँ॥८८॥ यह शार्दूलविक्रीडित छन्द है।

**इति निवेद्य वचो रघुनन्दनो नयननीरजनीरजधारया।**
**भृगुपतेश्च पदाम्बुरुहद्वयं प्रणिपपात चिरं स समार्द्रयन्॥८९॥**

**कृपा टीका**—इस प्रकार मधुरवाणी में निवेदन करके अपने नयनकमल की जलधारा से परशुराम जी के चरणकमलों को आर्द्र करते हुए रघुनंदन भगवान श्रीराम उनके चरणों पर साष्टाङ्ग गिर पड़े॥८९॥ श्लोक ८९ से ९० तक द्रुतविलम्बित छन्द है।

**तमभिवीक्ष्य पदे पतितं मुनेः पतितपावनमेव रघूद्वहम्।**
**जय जयेति जनाः सदसः समे समुदिता मुदिता हरिमैडयन्॥९०॥**

**कृपा टीका**—इस प्रकार पतितपावन श्रीरामचन्द्र को परशुरामजी के चरणों में

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पड़ा हुआ देखकर संपूर्ण सभासद जय जय कहते हुए प्रसन्नतापूर्वक भगवान की स्तुति करने लगे॥९०॥

**अथाह रामं भृगुवंशनाथः प्रीतः परिष्वज्य बृहद्भुजाभ्याम्।**
**धन्योऽसि काकुत्स्थ कृपाललाम कल्लोलिनीकान्त कलालकान्त॥९१॥**

**कृपा टीका**—इसके अनन्तर प्रसन्न होकर विशाल भुजाओं से प्रभु का आलिंगन करके परशुराम जी ने भगवान श्रीराम से कहा–हे काकुत्स्थवंश में उत्पन्न कृपारत्न के महासागर सुन्दर अलकावली से युक्त श्रीराम! आप धन्य हैं॥९१॥ श्लोक ९१ से ९८ तक उपजाति छन्द है।

**ज्ञातोऽसि मे त्वं चिदचिद्विशिष्टाद्वैतं परंब्रह्म निरस्तहेयम्।**
**मायामनुष्यत्वमुपेत्य भूमन् संक्रीडसे कोसलराजगेहे॥९२॥**

**कृपा टीका**—हे प्रभो! आज मैंने आपको जान लिया है, आप चित् और अचित् तत्व से विशिष्ट अद्वैत परमतत्व अर्थात् जीव-जगत से विशिष्ट जगदीश्वर हैं, आप हेय गुणों से रहित सगुण साकार ब्रह्म हैं। हे सर्वव्यापक! आप अपनी लीला से मनुष्य बनकर कोसलराज के भवन में आदर से नरलीला कर रहे हैं॥९२॥

**रामोऽसि भूतेषु समेषु चान्तर्यामी स्वशक्त्या रमसे ह्यदोषः।**
**लोकांश्च सर्वान् रमयन् निजेभ्योऽमृतं परेभ्यश्च मृतिं हि रासि॥९३॥**

**कृपा टीका**—हे प्रभो! आप ही राम हैं, इसीलिये सभी जीव सभी प्राणियों में निर्दोष भाव से रहकर, अन्तर्यामी स्वरूप से अपनी शक्ति सीताजी के साथ रमते रहते हैं। आप सभी लोगों को रमाते हुये भक्तों को अमृत और अपने विमुखों को मृत्यु प्रदान करते रहते हैं॥९३॥

**मरीचिपुत्रेण पुराहमुक्तो गामाददानेन नृपक्षये मत्।**
**अधित्यकां शक्रगिरेरतीया रात्रावुदन्वानिव मा स्व वेलाम्॥९४॥**

**कृपा टीका**—इक्कीसवें सर्वक्षत्रिय विनाश के समय मुझसे पृथ्वी ग्रहण करते हुए मरीचिपुत्र कश्यप ने मुझे आदेश दिया था। हे परशुराम! जिस प्रकार समुद्र अपनी वेला का अतिक्रमण नहीं करता, उसीप्रकार तुम रात्रि में महेन्द्र पर्वत की अधित्यका का अतिक्रमण मत करना अर्थात् रात्रि में महेन्द्र पर्वत छोड़कर कहीं मत जाना॥९४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तदाप्रभृत्येव विभो यथा त्वं स्वकां प्रतिज्ञां परिपालयामि।**
**भ्रान्त्वा दिने स्वैरगतिस्त्रिलोकी सायं यथार्को गिरिमेमि शाक्रम्।।९५।।**

**कृपा टीका**—हे प्रभो! उसी समय से मैं आपके ही समान अपनी प्रतिज्ञा का पालन कर रहा हूँ। दिनभर स्वच्छन्द गति से त्रिलोकी में भ्रमण करके सायंकाल सूर्य की ही भाँति पर्वत को प्रस्थान कर जाता हूँ।।९५।।

**गतिर्न मे राम विनाशनीया यथा प्रतिज्ञा परिपालिता स्यात्।**
**लोकान् जहीमान् मम लोकनाथ त्वद्भक्तहेलाघविनष्टपूर्वान्।।९६।।**

**कृपा टीका**—हे राघव! मेरी गति को नष्ट मत कीजिये। जिससे मैं अपनी प्रतिज्ञा का पालन कर सकूँ। हे लोकनाथ! आपके भक्त लक्ष्मण के अपमान के पाप से पूर्व ही नष्ट हुए मेरे इन पुण्यलोकों को नष्ट कर दीजिये।।९६।।

**इति ब्रुवाणे भृगुवंशकेतौ तथेति रामः प्रजघान लोकान्।**
**बाणेन निर्वाणसुखावसानान् ज्ञानेन कर्माणि यथात्मदर्शी।।९७।।**

**कृपा टीका**—इस प्रकार परशुराम जी के कहने पर 'ऐसा ही हो' इस प्रकार स्वीकृति देकर श्रीराम ने अपने बाण से परशुराम जी के मोक्षसुखपर्यंत पुण्यलोकों को उसी प्रकार नष्ट कर दिया जैसे परमात्मदर्शी महापुरुष अपने ज्ञान से प्रारब्ध-क्रियमाण-संचित कर्मों को फलों के सहित नष्ट कर देता है।।९७।।

**ततः प्रहृष्टाविमला त्रिलोकी देवाः प्रसेदुर्ववृषुः प्रसूनैः।**
**नेदुर्दिवो दुन्दुभयः प्रकामं जीवत्रयं मङ्गलमाप रामात्।।९८।।**

**कृपा टीका**—इसके अनन्तर तीनों लोक निर्मल और प्रसन्न हो उठे, देवता प्रसन्न होकर पुष्पवर्षा करने लगे, स्वर्ग में दुन्दुभियाँ बज उठीं। विषयी साधक और सिद्ध ये त्रिविध जीव श्रीराम से मंगल प्राप्तकर प्रसन्न हो गये।।९८।।

**रघुपतिरसौवल्लीभञ्जं विभज्य शरासनं**
**मनिसिजरिपोः सीताचेतस्सरोजविकासकृत्।**
**भृगुपतितमोहर्ता रामोऽधिरङ्गमशोभत**
**प्रतिमथितमन्देहः प्रातः पतङ्ग इवांशुमान्।।९९।।**

**कृपा टीका**—लता की भाँति शिवजी का धनुष तोड़कर, सीताजी के चित्त सरोरुह का विकास कर, परशुराम जी के अहंकाररूप अंधकार का हरण कर श्रीराम मन्देह दैत्यों को मारकर प्रातःकालीन किरणमाली सूर्यनारायण के समान मिथिला

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

के रंगमंच पर सुशोभित हुए॥९९॥ हरिणी छन्द।

**भृगुपतिरथो दृष्ट्वा रामं परात्परमीश्वरम्**
**रघुपतितनुं विष्टं तेजः स्वकं किल वैष्णवम्।**
**सुरपतिगिरिं गच्छन् सायं दिनेश इवाल्पगुः**
**सुललितलसद्वृत्तं रामोऽस्तवीत् प्रभुराघवम्॥१००॥**

**कृपा टीका**—इसके पश्चात् श्रीराम को परात्पर परब्रह्म जानकर और अपने वैष्णव तेज को श्रीराम के शरीर में प्रविष्ट हुआ देखकर अल्पकिरणों वाले सायंकालीन सूर्यनारायण के समान परशुराम जी महेन्द्र पर्वत पर जाते समय सुन्दर ललित छंदों में सुन्दर और ललित चरित्रवाले भगवान श्रीराघव सरकार की स्तुति करने लगे॥१००॥ हरिणी छन्द।

**इत्थं शुभे भार्गवराघवीये**
**भव्ये महाकाव्य उदारवृत्ते।**
**अस्तूनविंशः कविरामभद्रा-**
**चार्यप्रणीते श्रिय एष सर्गः॥१०१॥**

**कृपा टीका**—इस प्रकार परमकल्याणकारी अत्यंत सुन्दर उत्कृष्ट छंदों में निबद्ध महाकवि स्वामी रामभद्राचार्य द्वारा प्रणीत "श्रीभार्गवराघवीय" नामक महाकाव्य में वर्णित उन्नीसवाँ सर्ग भक्तों की प्रपत्ति संपत्ति एवं श्री का संवर्धन करता रहे॥१०१॥.

**इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामिरामभद्राचार्यप्रणीते श्रीभार्गवराघवीयेमहाकाव्ये "श्रीराघवेभार्गवप्रवेशो" नाम ऊनविंशः सर्गः॥**

**॥श्रीराघवः शन्तनोतु॥**

इस प्रकार धर्मचक्रवर्ती महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामी रामभद्राचार्य द्वारा प्रणीत श्रीभार्गवराघवीयम् नामक महाकाव्य में "श्रीराघवेभार्गवप्रवेश" नामक उन्नीसवाँ सर्ग पूरा हुआ।

॥श्रीराघवः शन्तनोतु॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीमद्राघवो विजयते ॥

# अथ विंशः सर्गः

**राम त्रिलोकनृपालललाम रमावर कोटिमनोभवसुन्दर**
**सौभगधाम पयोधरश्याम सतामभिराम भवाम्बुधिमन्दर।**
**जानकिलक्ष्मणसेव्य सुलक्षण तूणशिलीमुखचण्डधनुर्धर**
**पूतनिषाद विधूतविषाद दशाननसूदन मे विपदं हर॥१॥**

**कृपा टीका**—तीनों लोकों के राजाओं के रत्न एवं करोड़ों विष्णु तथा काम के समान सुन्दर, शोभा के आगार, नीले बादल के समान सुन्दर, सन्तों के आनन्ददाता, भवसागर के मन्दर, जानकी एवं लक्ष्मण के सेव्य, सुन्दर लक्षणोंवाले, तरकस और धनुषबाण धारण करनेवाले, निषादको पवित्र करनेवाले, रावणशत्रु, श्रीराम! आप मेरी विपत्ति हर लें॥१॥ श्लोक १ से १२ तक मत्तगयेन्द्र छन्द है।

**कोसलभूप मनोहररूप सरोरुहपाणिशरासनसायक**
**सज्जनरञ्जन शोकविभञ्जन रावणवंशविनाशविधायक।**
**राजकुमार बलाम्बुनिधे पदपद्मजुषां सुखमङ्गलदायक**
**अज्ञमनाथमशुद्धमतिं किल मां परिपालय श्रीरघुनायक॥२॥**

**कृपा टीका**—हे अयोध्यापते, सुंदररूप वाले, करकमल में धनुषबाण धारण करने वाले, सज्जनों के सुखदाता, शोकनाशक, रावण के कुल को नष्ट करने वाले, राजपुत्र बल के महासागर, शरणागतों को मंगल देने वाले, हे रघुनायक राम! मुझ अज्ञानी अनाथ असभ्य बुद्धि वाले परशुराम की रक्षा कीजिये॥२॥

**सीतानिवास चराचरवास सुधाकरहास कृपारसनिर्भर**
**पङ्कजलोचन शोकविमोचन वीर्यदवानल दग्धनिशाचर।**
**श्यामशरीर महारणधीर पयोधिगंभीर प्रतापदिवाकर**
**कोसलपाल दशाननकाल नृपालमणे मम घोरभयं हर॥३॥**

**कृपा टीका**—हे सीतानिवास, चर अचर में वास करने वाले, चन्द्रमा के समान हास वाले, कृपारस से परिपूर्ण, कमललोचन, शोकहारी, पराक्रमरूप दावाग्नि

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

में राक्षसों को भस्म करने वाले, श्यामल शरीर, युद्ध में धीर, सागर के समान गंभीर, सूर्य के समान प्रतापी, अयोध्या के पालक, रावण के लिये कालस्वरूप, हे राजशिरोमणे श्रीराम! मेरा घोर भय दूर कीजिये॥३॥

**हे हरमानसराजमराल विशालभुजान्तरभक्तमनोहर**
**हे मुनिचित्तसरोरुहभृङ्ग निषङ्गविभावर धृष्टभयङ्कर।**
**हे भरताग्रज तुष्टमहागज वक्त्रविनिन्दितकोटिकलाधर**
**हे जनरक्षक घोरभवाम्बुधिमग्नजनं रघुनाथ समुद्धर॥४॥**

**कृपा टीका**—हे भगवान शंकर के मनमानस के राजहंस, विशाल वक्षस्थल वाले, भक्तोंका मन चुराने वाले, मुनियों के चितकमल के भ्रमर, तरकस की शोभा से युक्त, धृष्टों को भयभीत करनेवाले, भरतजी के बड़े भ्राता, गजेन्द्र को संतुष्ट करने वाले, अपने मुख की शोभा से करोड़ों चन्द्रमाओं को निन्दित करनेवाले, हे जनरक्षक रघुनाथ जी! घोर संसारसागर में मग्न मुझ भक्त का उद्धार कीजिये॥४॥

**ब्रह्मनिरञ्जन पातकभञ्जन सज्जनरञ्जन दैत्यनिकन्दन**
**निर्गुणरूप चराचरभूप नरोत्तम देवगणेरितवन्दन।**
**व्यापक व्याप्य निरीह निरामय निष्कल सेवकमानसचन्दन**
**साधनहीनमनाथमिमं पतितं परिपालय श्रीरघुनन्दन॥५॥**

**कृपा टीका**—हे ब्रह्म, कर्म के लेप से रहित, सेवकों के लिये सुखद, पापहारी, दैत्यों के नाशक, हेयगुणों से रहित स्वरूप वाले, जड़ चेतनों के स्वामी, देवगणों द्वारा वन्दित, व्यापक और व्याप्य, चेष्टारहित, रोग रहित, निष्कल सेवकों के चित्त को प्रसन्न करने वाले, हे रघुनंदन राम! साधनों से हीन इस अनाथ पतित परशुराम का पालन कीजिये॥५॥

**आनन्दकन्द मुकुन्द मुनीन्द्रमिलिन्दनिपीतमुखाम्बुरुहासव**
**नीतिविशारद तोषितनारद शारदगीतयशःकरुणार्णव।**
**भूमिसुतामुखचन्द्रचकोर नृपालकिशोर महागुणगौरव**
**त्रासमितं कलिपन्नगतःशरणागतवत्सल राघव मामव॥६॥**

**कृपा टीका**—हे आनन्द के बादल! मुनीन्द्ररूप भ्रमरों को अपने मुखकमल का

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मकरन्द पान कराने वाले, नीति में निपुण, नारदजी के संतोष दाता, सरस्वती द्वारा गाये हुए यश से युक्त, करुणासागर, सीताजी के मुखचन्द्र के चकोर, श्रीदशरथ के राजकिशोर, श्रेष्ठ गुणों के गौरव वाले, हे शरणागतवत्सल राघवजी! मुझ भयभीत जनक को कलिकाल सर्प से बचा लीजिये॥६॥

**कोसलजापरिलालितपङ्करुहानन सौख्यनिधे खलभीषण**
**मारुतपुत्र सुशीलवहित्र विचित्रसुमित्रसुकण्ठविभीषण।**
**सीताकलत्र पवित्रचरित्र खरान्तक श्रीरघुवंशविभूषण**
**पाहि भवन्तमितं शरणं भृगुराममिमं नरभूषणभूषण॥७॥**

**कृपा टीका**—हे कौसल्या जी द्वारा चुंबित मुखकमल वाले, दुष्टों के लिये भयंकर, मारुतपुत्र हनुमान जी को पुत्रवत् माननेवाले, भवसागर के जहाज के समान शीलवाले, एवं सुग्रीव और विभीषण को मित्र बनानेवाले, सीताजी जैसी पत्नी से युक्त पवित्र चरित्र वाले, खर के शत्रु, रघुवंश के अलंकार, हे नरभूषणों के भी आभूषण, आपके चरणों में शरणागत इस परशुराम की रक्षा कीजिये॥७॥

**राम विराम सतांविपदामभिरामदृशांशतमन्मथसुन्दर**
**लोकललाम शशाङ्कसमानन मङ्गलधाम प्रभो गुणमन्दिर।**
**पुण्यप्रणाम सुपावननाम निकाममनोज्ञ तनोकलितेन्दिर**
**वासनाघोरभुजङ्गवधूतो जनं परिरक्ष विदेहसुतावर॥८॥**

**कृपा टीका**—हे सज्जनों की विपत्ति के विरामस्थान, नेत्रों के आनन्ददाता, करोड़ों कामों के समान सुन्दर, लोक के रत्न, चन्द्रसमान मुख वाले, मंगल के आगार, गुणों के मन्दिर, सर्वसमर्थ, पवित्र प्रणाम वाले एवं कलिपावन नाम, सुंदर शरीर, महालक्ष्मी के आश्रय, हे सीतावर प्रभु श्रीराम! मुझ परशुराम को वासनारूप सर्पिणी से बचाइये॥८॥

**त्वं श्रुतिसम्मतधर्मरतः प्रणताभयदानव्रतं परिपालय**
**सीदति दीनशिशुस्त्वयि पश्यति दीनदयालुस्वनामनिभालय।**
**वासवसूनुमिवेशशरेण रघूत्तम घोरकलिं परिकालय**
**त्वां शरणागतमज्ञमिमं परिपाहि जनं करुणावरुणालय॥९॥**

**कृपा टीका**—हे प्रभो! आप श्रुतिसम्मत धर्मपरायण हैं, इसीलिये प्रणतों के लिये

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अभयदानरूप व्रत का पालन कीजिये, आपके देखते देखते दीन शिशु कष्ट पा रहा है, इसीलिये अपने दीनदयालु नाम को सँभालिये। हे रघुश्रेष्ठ! जिस प्रकार आपने त्रेतायुग में अपने ब्रह्मास्त्र से जयन्त को दण्डित किया था, उसी प्रकार इस कलिकाल को दण्डित कीजिये। हे करुणामहासागर! आपके शरणागत इस अबोध जन परशुराम की रक्षा कीजिये॥९॥

**राघव एहि उपेहि जनं पतितं भवकूपे करेण विकर्षय**
**मां प्रपुनीहि लुनीहि भयं मुखपङ्कजमेव मुकुन्द प्रदर्शय।**
**हे करुणाम्बुदचित्तमरुस्थलमेत्यस्वभक्तिसुधामभिवर्षय**
**जानकिजीवन जीवय मां मृतकं रसमन्द्रगिरा परिहर्षय॥१०॥**

**कृपा टीका**—हे राघव! निकट आइये। संसार के कूप में पड़े हुए मुझ सेवक को अपने हाथ से निकाल लीजिये, मुझे पवित्र कीजिये और मेरा भय नष्ट कर दीजिये। हे मुक्तिदाता! अपने मुखकमल के दर्शन कराइये। हे करुणा के बादल! मेरे चित्त मरुस्थल में आकर अपनी भक्ति सुधा का वर्षण कीजिये। हे जानकी जीवन! मुझे जिलाइये और षड़क्षर मन्त्र की वाणी से मुझे प्रसन्न कीजिये॥१०॥

**श्रीरघुनाथ मदीयहृदो जडतां शठतां कुमतिं च विनाशय**
**वारय नीचकलिं रघुपुङ्गव पादसरोजरतिं च प्रकाशय।**
**तारय मां भवसागरतो विमलां सुमतिं विरतिं च विकासय**
**भार्गवमानसकुञ्जमिदं जनकात्मजया सह स्वेन चकासय॥११॥**

**कृपा टीका**—हे रघुनाथ जी मेरे हृदय की जड़ता शठता और कुमति को नष्ट करें और हे रघुश्रेष्ठ इस नीच कलि को नष्ट करें अपने चरणकमल की भक्ति का प्रकाश करें। मुझे भवसागर से पार करें और मेरे विमल बैराग्य एवं सुमति का विकास करें। हे प्रभो मुझ परशुराम के मानस कुंज को सीताजी के सहित अपने स्वरूप से शोभित कर दें॥११॥

**राजकुमार विभाजितमार मनोज सरोजतुषार विभो जय**
**चण्डशिलीमुखतूणशरासनमण्डित खण्डितभार प्रभो जय।**
**श्यामलदेह सुमङ्गलगेह महीतनयावर शुद्धमते जय**
**दूषणदूषणलोकविभूषण भूतलभूषण भूमिपते जय॥१२॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे राजकुमार। अपनी शोभा से कामदेव और कामनिर्मित कमल तथा पर को भी जीतने वाले सर्वव्यापक आपकीजय हो। तीक्ष्ण बाण और तरकश तथा धनुष से सुशोभित भूभारहारी आपकीजय हो। श्यामल शरीरवाले मंगल के धाम पृथ्वीपुत्री सीताजी के पति शुद्ध बुद्धि परमात्मा आपकी जय हो। दूषण के शत्रु, लोक के शृंगार, पृथ्वी के अलंकार, महाराज आपकी जय हो॥१२॥

**अशरणशरण प्रणतभयदरण धरणिभरहरण धरणितनयावरण**
**जनसुखकरण तरणिकुलभरण कमलमृदुचरण द्विजांगनासमुद्धरण।**
**त्रिभुवनभरण दनुजकुलमरण निशितशरशरण दलितदशमुखरण**
**भृगुभवचातकनवीनजलधरराम विहरमनसि सहसीतया जनाभरण॥१३॥**

**कृपा टीका**—हे अशरणों को शरण देने वाले, प्रणतों के भय दूर करने वाले, भूभार हारी, पृथ्वीपुत्री सीता के पति, भक्तों को सुख देने वाले सूर्यकुल के पोषक, कमल के समान कोमल चरण वाले, ब्राह्मण पत्नी अहल्या का उद्धार करने वाले, तीनों का पोषण करने वाले, राक्षसों का वध करने वाले, तीनों लोकों का पोषण करने वाले, राक्षसों का वध करने वाले तीखे वाण धारण करने वाले, युद्ध में रावण का दलन करनेवाले, परशुराम रूप चातक के लिए नवीन बादल के समान श्रीराम भक्तों के अलंकार प्रभु मेरे मन में सीताजी के साथ विहार कीजिए॥१३॥ घनाक्षरी छन्द।

**भूपतिललाम सुखधामलोचनाभिराम**
**संकटविराम तनुशोभाजितकोटिकाम।**
**आप्तकामपूर्णकाम लसितसरोजदाम**
**सर्वगुणधाम नवनीलनीरधरश्याम।**
**तरुणतमालश्याम भक्तनयनाभिराम**
**पूरितप्रणतकाम ध्वस्तघोरभवदाम।**
**सज्जनमनोभिराम रमणीयछविधाम**
**भृगुभव हृदि सह सीतया विहर राम॥१४॥**

**कृपा टीका**—हे राजरत्न, हे सुख के मंदिर, नेत्रों को आनन्द देनेवाले, संकट के नाशक, शरीर की शोभा से करोड़ों कामदेवों को जीतने वाले, आप्तकाम, पूर्ण काम, कमलमाला से सुशोभित, सभी गुणों के आश्रय नीले बादल के समान

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

श्यामल नवीन तमाल के समान श्यामल, भक्तों के नयनों के सुखदाता, प्रणतों की कामना पूर्ण करने वाले, भवबंधन हरनेवाले, सज्जनों के मन को सुखद, रमणीय छवि के निधान, हे श्रीराम! मुझ परशुराम के हृदय में सीताजी के सहित विहार कीजिए॥१४॥ घनाक्षरी छन्द।

**जय जय जानकीश कोसलेश रामभद्र**
**हृतनिजसेवकविमोह भवविक्रमण।**
**जय जय दशरथकैकयीवचनपाल**
**मृदुपदकमल विहितवनचंक्रमण।**
**जय जय जनचित्तचातकसजलघन**
**भक्तमञ्जुमानससततकृतविभ्रमण।**
**भृगुसुतमेकमहिमिव भीषयन्तमेनम्**
**वैनतेय इव जहि कलिं जानकीरमण॥१५॥**

**कृपा टीका**—हे जानकीपति कोसलेन्द्र भक्तों के मोह भ्रमहारीआपकी जय हो, जय हो दशरथ और कैकेयी के वचन के पालक कोमल चरण कमल वन में चलने वाले आपकी जय हो। भक्त के चित्त चातक के लिए नीलमेघ और भक्त के कोमल मन में विहार करने वाले आपकी जय हो जय हो हे जानकीरमण प्रभु मुझ परशुराम को साँप की भाँति डसते हुए इस कलि को गरुड़ की भाँति आप मार डालिये॥१५॥ घनाक्षरी छन्द।

**देव दीनवत्सल दयानिधान रामभद्र**
**पतितपावन सीतानाथ नाथ मयि द्रव।**
**कृत्रिमो वास्तवो वा कृपानिकेत मूढमतिः**
**सर्वथा श्रितो दयालो हे हरे जनोऽस्मि तव।**
**भवसिन्धुमग्नभग्नशक्तिद्विजसुतकृते**
**करुणानिधान पोतपदपद्मयुगे भव।**
**साधनविहीनमतिदीनमद्यहीनमेनं**
**कुटिलशिरोमणिं रमानिवास शीघ्रमव॥१६॥**

**कृपा टीका**—हे देव! दीनों पर वत्सल, हें दया के निधान, हे रामभद्र, पतितों को पवित्र करने वाले, हे नाथ, हे सीतापते, मुझ पर द्रवित हो जाइये। नकली

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

या असली जो कुछ हूँ मैं सब प्रकार से आपका ही सेवक हूँ। हे दयालु, हे कृपा के मंदिर, ऐसा ही समझिये। हे प्रभो संसारसागर में मग्न शक्तिहीन ब्राह्मण पुत्र के लिए आप अपने चरणकमल को जहाज बना दीजिए, हे रमानिवास साधनों से हीन बुद्धि हीन अत्यन्त दीन इस दुष्टशिरोमणि की आज शीघ्र रक्षा कीजिए॥१६॥ यहाँ से श्लोक ३२ तक कवित्त छन्द है।

देव पश्य मे गतिं कृतघ्नचक्रचूड़ामणे
रात्मनैव नीचकलियुगग्रासतां प्रयामि।
क्षणमपि चिन्तयामि नो त्वदीयपादयुगं
व्यर्थचिन्तनेन स्वर्णकालमतियापयामि।
पूजितो भवामि पूजयामि नो जनं कमपि
पृष्टो जनैरात्मनि त्वदीयकृपां ज्ञापयामि।
भृगुसुत प्रतिष्ठां निभालय ह्यभद्रो भूत्वा
स्वमपि च रामभद्रदास इति ख्यापयामि॥१७॥

**कृपा टीका**—हे प्रभो मुझ कृतघ्नशिरोमणि की गति तो देखिए, स्वयं ही कलि का ग्रास बन रहा हूँ। एक क्षण भी आपके चरण युगल का चिन्तन नहीं करता, व्यर्थ में ही स्वर्णिम काल बिता रहा हूँ। अपने को पुजाता हूँ, किसी को भी पूजता नहीं। पूछने पर अपने पर आप की कृपा कह देता हूँ। अब मुझ परशुराम की प्रतिष्ठा संभालिए। अभद्र होकर भी मैं अपने को रामभद्र का दास कहलाता हूँ॥१७॥

देव देव दानवनरार्चितपदाम्बुजाय
सज्जनचकोर हिमकराय च ते नमोऽस्तु।
नमः पीतवाससे शुभाशिषे महोजसे
दशास्य जातवेदसे च श्रीमते च ते नमोऽस्तु।
नमः शार्ङ्गधन्विने महास्विने मनस्विने
तरस्विने यशस्विने रघुत्तमाय ते नमोऽस्तु।
लोकपालकाय वेधसे च भार्गवेश्वराय
जानकीवराय राघवाय भूभृते नमोऽस्तु॥१८॥

**कृपा टीका**—देव, दानव और मनुष्यों से पूजित चरणकमल वाले, सज्जन चकोरों

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

के लिए चन्द्रमा, ऐसे प्रभु आपको नमस्कार है। पीताम्बरधारी, वरदाता, महा तेजस्वी, रावणवंश के अग्नि, सीतापते, आपको नमस्कार, शार्ङ्गधन्वा, प्रकाशवान, मनस्वी, रघुश्रेष्ठ, आपको नमस्कार, लोकपाल, ज्ञानस्वरूप, मुझ परशुराम के ईश्वर, सीतापति, पृथ्वीपालक, आपको नमस्कार है॥१८॥

रे रे मूढचित्त! त्यज विषयदुराशामाशु
रघुनाथनीरदस्य चतुरचातको भव।
भवसुखनदीसिन्धुसरोजलमनादृत्य
रामकीर्तिस्वातिवारिसुधां दिवानिशं पिव।
करुणं सदैव रट प्रिय, प्रिय कुत्र इति
रामदर्शनस्य कृते तृषाकुलं भुवि जीव।
भार्गवोपदेशोऽयं स्वीकरिष्यते चेत् तदैव
संकटः प्रयास्यति सपदि ध्रुवमेव तव॥१९॥

**कृपा टीका**—अरे मेरे चित्त विषय की दुराशा छोड़ो। श्रीरामरूप बादल के चतुर चातक बन जाओ। संसार सुखरूप नदी, सिधु, तालाब के जल का निरादर करके श्रीराम की कीर्तिरूप स्वाति जलसुधा को दिनरात पिओ। पी कहाँ पी कहाँ इस प्रकार रटो और रामदर्शन के लिए प्यासे होकर पृथ्वी पर जियो। इस प्रकार यदि मुझ परशुराम का उपदेश मान लोगे तो तुम्हारा संकट शीघ्र चला जाएगा॥१९॥

नाथ भूतनाथ पूज्यमृदुलकमलपद
भीतो जनस्त्वां शरण्यमेव शरणं प्रयामि।
जगति निरादृतो निराकृतः कुटुम्बिभिश्च
देव दीनजनोऽहं त्वदीयचरणं श्रयामि।
रोदिमि विचार्य निजपातकसुमेरुमहं
स्मृत्वा नाम पतितपावन इति विरमामि।
कृपां कुरु कृपाकन्द पाहि भार्गवं मुकुन्द
शिरस्ते पदे निधाय रामभद्र प्रणमामि॥२०॥

**कृपा टीका**—हे शिवजी के पूज्य आपके कोमल चरणकमल में भयभीत होकर मैं आपकी शरण में आ रहा हूँ। हे देव, मैं संसार में अपमानित और परिवार

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

से भी ठुकराया गया हूँ इसलिए मैं दीनसेवक आपके चरणों का आश्रय लेता हूँ। अपने पाप को सुमेरु जैसा देख कर रोता हूँ और आपके पतितपावन नाम का स्मरण करके चुप हो जाता हूँ। हे कृपा के बादल कृपा कीजिए, हे मुकुन्द मुझ परशुराम की रक्षा कीजिए। आपके चरण पर सिर रखकर मैं प्रणाम करता हूँ॥२०॥

**देव दीनवत्सल उदारदयावारिधर**
**मादृशे नराधमे मलालये प्रमोदयस्व।**
**सर्वथैव वेदप्रतिकूलमार्गमाश्रिते**
**सतां गते! कुकर्म च क्षणे हरे कृपां कुरुष्व।**
**क्रियन्तेऽपराधशतान्यहोरात्रमेव मया**
**क्षमासुतापते क्षमामन्दिर विभो क्षमस्व।**
**याचे महाराज सीतालक्ष्मणमारुतियुतो**
**भार्गव मनसि घनकानने सदा रमस्व॥२१॥**

**कृपा टीका**—हे देव! हे दीनों के वत्सल, हे उदार! सामान्य लोगों के प्रति भी सहानुभूति रखने वाले, हे दया के बादल! मुझ जैसे मल के राशि अधम जीव पर भी प्रसन्न होइये। हे प्रभो! सब प्रकार से वेदप्रतिकूल मार्ग का आचरण करनेवाले कुत्सित कर्म में कुशल मुझ दुष्ट पर कृपा कीजिये। दिन रात मैं सैंकड़ों अपराध करता हूँ। हे क्षमा अर्थात् पृथ्वीपुत्री के पति, हे क्षमा के मन्दिर, मुझे क्षमा कीजिये। हे महाराज! मैं आपसे यही याचना करता हूँ कि मुझ परशुराम के मनरूप घने वन में आप श्री सीतालक्ष्मण और हनुमान जी के सहित रम जाइये॥२१॥

**रामनामजपयागरतं मां मुनीशमिव**
**वीक्ष्य रोगताटकादिराक्षसान् बलाद् दमय।**
**कलिशक्रदूषितां कुमतिमुनिनारिभिमा**
**चरणसरोजरजसा पवित्रतां गमय।**
**अहं भवधनू रघुवीर तरसा विभज्य**
**मनो मिथिलेश पणिजातसंकटं शमय।**
**भावनाश्रियं वृणीष्व रामभद्र भार्गवस्य**
**मानससुकोसलनिकेतने स्वकं रमय॥२२॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—राम नाम के जप के यज्ञ में लगे हुए विश्वामित्र की भाँति मुझे देखकर रोगरूप ताटकादि राक्षसों का दमन कीजिये। कलिप इन्द्र से दूषित मेरी कुत्सितरूप बुद्धि अहल्या को अपने चरण कमल की धूल से पवित्र कीजिये। अहंकाररूप शिव धनुष को तोड़कर मनरूप जनक की प्रतिज्ञा संकट का शमन कीजिये। और मेरी भावनारूप श्री का वरण कीजिये, मुझ परशुराम के मानसरूप अयोध्या में अपने को रमा दीजिये॥२२॥

**दीनबन्धुरीड्यकीर्तिरखिलभुवनपति**
**र्भवानेव यन्मदीयदुर्गुणान् स्मरिष्यति।**
**दोष जलराशिरयं तदा पापशिरोमणिः**
**कल्पकोटिमपि नो भवाम्बुधेस्तरिष्यति।**
**जगता तिरस्कृतं निराकृतं त्वया च वीक्ष्य**
**कलिर्निर्दयं भृशं कुघातं प्रहरिष्यति।**
**पतितपावनं नाम भविष्यति निरर्थकम्**
**तव द्विजं चेन्न दयालो समुद्धरिष्यति॥२३॥**

**कृपा टीका**—हे प्रभु, दीनबन्धु पवित्र कीर्तिवाले, सारे संसार के स्वामी यदि आप ही मेरे दुर्गुणों का स्मरण करेंगे, तब तो यह दोष दुर्गुणों का सागर पापियों का शिरोमणि, करोड़ों कल्प तक संसार सागर से नहीं तर सकेगा। जगत से अपमानित और आपके द्वारा भी ठुकराया हुआ जानकर क्रूर कलिकाल मुझ पर निर्दयतापूर्वक प्रहार करेगा। यदि आप इस ब्राह्मण परशुराम का उद्धार नहीं करेंगे तब तो आपका यह पतितपावन नाम भी निरर्थक हो जायेगा॥२३॥

**पाहि पाहि पाहि पापवारिधिकलश भव**
**पतितपावन राम भूमिपाल पाहि माम्।**
**पाहि पद्मजापते परेश पद्मनेत्र पाहि**
**परमकृपालो दशरथबाल पाहि माम्।**
**पाहि पूर्णपुरुष परशुधर मदहर**
**खलगणकाल सुजनरसाल पाहि माम्।**
**पाहि पार्वतीशपूज्यपावनपदारविन्द**
**भृगुसुतमञ्जुमानसमराल पाहि माम्॥२४॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—पापमहासागर के लिये कुंभज, हे पृथ्वीपते श्रीराम् मेरी रक्षा कीजिये। हे लक्ष्मीपते, हे परमेश्वर, हे कमलनेत्र, हे दशरथनन्दन! मेरी रक्षा कीजिये। हे पूर्णपुरुष, हे मुझ परशुराम का मद हरनेवाले, हे सज्जनों के सुखदाता, दुष्टों के काल, आप मेरी रक्षा कीजिये। हे शिवजी के पूज्य पावन चरणकमल! मुझ परशुराम के मानस सरोवर के राजहंस, मेरी रक्षा कीजिये॥२४॥

**नमो नित्यनीलकण्ठपूजितपदाम्बुजाय**
**नमो विबुधारिघनकाननकृशानवे।**
**नमः श्यामतामरसदामविग्रहाय नमो**
**जनानुग्रहाय लम्बबाहुभव्यजानवे।**
**नमो भवमोचनाय जलजविलोचनाय**
**भृगुसुतपापपङ्कजतुषारसानवे ।**
**नमः पूर्णकामाय निकामश्यामसुन्दराय**
**रामाय नमोऽस्तु भानुवंशकंजभानवे।।२५।।**

**कृपा टीका**—शिवजी द्वारा जिनके चरणकमल की नित्य पूजा की जाती है, ऐसे आपको नमस्कार! देवशत्रु राक्षसरूप वन को जलाने के लिये अग्नि के समान आपको नमस्कार। नीले कमल के समान शरीरवाले आपको नमस्कार, भक्तों पर कृपा करने वाले आजानुबाहु आपको नमस्कार। भवभय के नाशक, कमलनेत्र, और मुझ परशुराम के पापकमल को नष्ट करनेके लिये हिमालय, आपको नमस्कार। हे पूर्णकाम, हे श्यामसुंदर, हे सूर्यकुलकमल के सूर्य श्रीराम! आपको नमस्कार है॥२५॥

**नमो ब्रह्मणे स्वधर्मवर्मणे नराधिपाय**
**नमो बलवीर्य शौर्यधाममहाबाहवे।**
**नमो नीलनीरधरशरीररघुवराय**
**नमो मखरक्षणाय सूदितसुबाहवे।**
**नमो दिव्यविक्रमाय हृतभक्तसंभ्रमाय**
**भग्नशंभुकार्मुकाय वीरवन्द्यबाहवे।**
**नमः सीताप्राणवल्लभाय भार्गवेश्वराय**
**नमो राघवाय दशमौलिचन्द्रराहवे।।२६।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—परब्रह्म अपने धर्मको ही कवच मानने वाले, राजाधिराज को नमस्कार। बल-पराक्रम-शौर्य के आश्रय, महाबाहु आपको नमस्कार। नीले बादल के समान शरीर वाले, रघुवर आपको नमस्कार। विश्वामित्र के यज्ञ रक्षक, सुबाहु के शत्रु आपको नमस्कार। दिव्य पराक्रम वाले, भक्तों का भ्रम दूर करने वाले, शिवधनुष तोड़ने वाले, वीरों द्वारा वन्दनीय भुजदण्डवाले, आपको नमस्कार। सीताजी के प्राणबल्लभ, मुझ परशुराम के ईश्वर श्रीराम! आपको नमस्कार। रावणरूप चन्द्र के राहु राघव! आपको नमस्कार॥२६॥

**करुणानिधान निशिचरपरिघातकर**
**वेदयशोगानधृतचापबाण रामभद्र।**
**कलिना विलोक्य ताड्यमानं पशुमिव नाथ**
**निरपेक्ष इव मां न पासि किं दयासमुद्र।**
**त्वां विहाय क्व प्रयामि कस्य पुरो विलपामि**
**निग्रहीतुं कः क्षमस्त्वया विना च कोसलेन्द्र।**
**पालय निभालय स्वदीनबन्धु यशोनाथ**
**त्वमसि सदैव नतपालकश्च रामचन्द्र॥२७॥**

**कृपा टीका**—हे करुणानिधान, हे राक्षसों के नाशक, वेद में प्रसिद्ध यशवाले, धनुषबाणधारी भगवान रामभद्र, हे दयासागर! कलि द्वारा मुझे पशु की भाँति पीटे जाते हुए देखकर भी आप मेरी रक्षा क्यों नहीं कर रहे हैं? हे कोसलेन्द्र! आपके बिना कहाँ जाऊँ, किसके सामने रोऊँ? आपके बिना कलि का निग्रह करने में समर्थ कौन है? इसलिये अब मेरा पालन कीजिये, और दीनबन्धु यश को सँभालिये, आप ही सदैव प्रणतों के पालक रहे हैं॥२७॥

**वेत्थ सर्वमेव बहिरङ्गमान्तरं तथापि**
**स्वामिसमक्षं विधीयते मयापि धृष्टता।**
**किं करोमि किङ्करस्य खादिता कृपानिधान**
**कुटिलकरालकलिना समापि शिष्टता।**
**साधनविहीनो भववार्धिलीन मनोमीनो**
**दोषदुर्गुणयुता मदीयेयमशिष्टता।**
**भार्गवमनाथं तृणवदुपेक्ष्य मामभीक्ष्य**
**क्षम्यतां मुकुन्द कलिनार्पिता विशिष्टता॥२८॥**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—यद्यपि आप मेरा बाहर और भीतर सब कुछ जानते हैं फिर भी मैंने स्वामी के समक्ष धृष्टता की है, क्या करूँ? हे कृपानिधान! दुष्ट कलिकाल ने मेरी सारी शिष्टता खा ली है। मैं साधनों से हीन हूँ, मेरी मनरूप मछली संसारसागर में डूबी हुई है। मैं दोष और दुर्गुणों से युक्त हूँ यही तो मेरी अशिष्टता है। हे प्रभो! मुझको अनाथ तृण के समान उपेक्षित देखकर कलि द्वारा अर्पित मेरी इस विशिष्टता को क्षमा कीजिये॥२८॥

**नूनमेव मे विलोक्य पातकं सुमेरुसमं**
**करुणानिधान तृणवत्त्वमप्युपेक्षसे।**
**प्रणतार्तिहर हरपूजितपदाम्बुजात्**
**मत्समात्खलात् कथं शुभान् गुणान् न वीक्षसे**
**मादृशो न पातकी न पापहारी त्वादृशो**
**मुकुन्द किं समन्वयं त्वमिमं न समीक्षसे।**
**सन्तु ते परीक्ष्या ये समर्थाज्ञानयुता नाथ**
**भार्गवमनाथमसमर्थं किं परीक्ष्यसे॥२९॥**

**कृपा टीका**—हे करुणानिधान! निश्चित ही मेरे पाप को सुमेरु पर्वत के समान देखकर आप भी तृण के समान मेरी उपेक्षा कर रहे हैं, हे भक्तभयहारी, हे शंकर द्वारा पूजित चरणकमल! मुझ जैसे खल को देखकर आप अपने शुभगुणों को क्यों नहीं देख रहे हैं। हे प्रभो! मेरे समान कोई पापी नहीं और आपके समान कोई पापहारी नहीं, आप इस समन्वय की समीक्षा क्यों नहीं कर रहे हैं। जो समर्थ ज्ञानी हों उनकी आप परीक्षा लीजिये, मुझ असमर्थ अनाथ परशुराम की परीक्षा क्यों ले रहे हैं॥२९॥

**महाराजो रघुराजो बालकं जिघांसुमेनं**
**विकरालकलिकालमाशुनियम्यताम्।**
**कामक्रोधलोभमोहमानसकुरोगदुष्ट–**
**पीडितं स्वदीनशिशुं नय निरामयताम्।**
**विषयखपुष्परस तृष्णयातृषितमहो**
**मनोमधुकरं पदपंकजे रमयताम्।**
**संकटविराम लोकलोचनाभिराम राम**
**भृगुसुतमपि कृपापात्रतां गमयताम्॥३०॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे महाराज रघुराज! मुझे मारन के लिये इच्छुक दुष्ट कलि काल को नियन्त्रित कीजिये। काम-क्रोध-लोभ-मोह जैसे मानस के कुरोगों से पीड़ित इस दीन बालक को निरोग कर दीजिये। विषयरूप आकाशपुष्प की तृष्णा से प्यासे मेरे मनमधुकर को चरणकमल में रमा दीजिये। हे संकट के नाशक, हे संसार के नेत्रों के आनन्ददाता? मुझ परशुराम को भी अपना कृपापात्र बना लीजिये॥३०॥

**चित्रकूटमभिगम्य मन्दाकिनीमुपाचम्य**
**परिक्रम्य कामदं व्रजामि नो विमलताम्।**
**कम्पते मनो विचार्य पातकं महन् मुकुन्द**
**खिद्यते समनुभूय साधनविफलताम्।**
**श्रये तव रामनाम एकमवलम्बमद्य**
**आश्वसीमि ते विभाव्य पतितवत्सलताम्**
**दर्शनं सपदि देहि भार्गव शिरसि नाथ**
**धेहिं करपङ्कजं विकलय विकलताम्॥३१॥**

**कृपा टीका**—हे प्रभो! तीर्थयात्रा के क्रम में चित्रकूट जाकर मन्दाकिनी में आचमन करके, कामतानाथ की परिक्रमा करके भी मैं निर्मल नहीं हो पा रहा हूँ। हे मुकुन्द! अपने महान पातक का विचार करके तथा अपने साधन की विफलता का अनुभव करके मेरा मन काँप रहा है और दुःखी हो रहा है। अब तो एकमात्र आपके राम नाम का अवलम्बन ले रहा हूँ, और आपकी पतित वत्सलता का अनुभव करके आश्वस्त हो रहा हूँ। हे प्रभो! शीघ्र दर्शन दीजिये और मुझ परशुराम के शिर पर करकमल रख दीजिये, मेरी विकलता नष्ट कर दीजिये॥३१॥

**आसमहमघराशिरितस्ततः परिभ्रमन्**
**कृता भूतभावनेन तव भक्तिप्रेरणा।**
**तदपि कृपानिधान कोपविवशेन मया**
**जानकीस्वयंवरे कृता तवावधीरणा।**
**क्षम्यतां नियम्यतां निदिश्यतां प्रदिश्यताम्**
**स्वभक्तिसुधा भार्गवाय क्रियतां समीरणा।**
**भगवत्वमेव जगति प्रमाण्यतां दयालो**
**ख्याप्यतां चिराय दीनवत्सलत्वमीरणा॥३२॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे भगवन! मैं पापराशि इधर उधर भटक रहा था, किंतु भगवान शंकर ने मुझे अपनी भक्ति की प्रेरणा दी, फिर भी हे करुणानिधान! सीताजी के स्वयंवर में मैंने क्रोधवश होकर आपका अपमान किया। आप क्षमा कीजिये, मुझे नियंत्रित कीजिये, मुझे निर्देश दीजिये, मुझ परशुराम को भक्तिसुधा प्रदान कीजिये, मुझे सत्प्रेरणा दीजिये। संसार सागर में भगवत्व को प्रामाणिक कीजिये और अपनी दीनवत्सलता रूप विरुदावली का ख्यापन कीजिये॥३२॥

**रघुनाथ कृपां न करिष्यसि चेत् पतितो न तरिष्यति शाश्वतिकः।**
**न गमिष्यति मे दुरितं तव दीनदयालुयशः किल गास्यति कः।**
**सुखमेष्यति कुत्र खलः कुटिलस्त्वदृते च रतिं परिदास्यति कः।**
**कमुपेष्यति वै शरणं त्वदृते भवतः पतितान् परिपास्यति कः॥३३॥**

**कृपा टीका**—हे रघुनाथ! यदि आप कृपा नहीं करेंगे, तो यह सनातन पतित नहीं तरेगा, मेरा पाप नहीं जायेगा, और आपका दीन दयालु रूप यश कौन गायेगा? और मुझ जैसा कुटिल खल कहाँ सुख पायेगा? और आपके बिना उसे भक्ति कौन देगा? और आपके बिना यह सेवक किसकी शरण में जायेगा? और इस संसारसागर से पतितों की रक्षा कौन करेगा?॥३३॥ यहाँ से श्लोक ४० तक सपादिका छन्द है।

**गरुडं परिहाय समाकुलितः किल धावतिको गजराजकृते।**
**निज दासशुचं परिणाशयितुं कमठादितनुं किल को धरते।**
**करुणाकर त्वदृते कः सततं परिचिन्तयते निजभक्तहिते।**
**रघुनन्दन कं करुणा तरुणीव समाश्रयते शरणं त्वदृते॥३४॥**

**कृपा टीका**—हे प्रभो! गजराज के लिये गरुड़ को छोड़कर आपके अतिरिक्त कौन देवता दौड़ता है? अपने भक्त का कष्ट दूर करने के लिये कंच्छपादि अवतार कौन धारण करता है? हे करुणानिधान! आपके अतिरिक्त अपने भक्तों के लिये कौन निरंतर चिंतन करता है? हे रघुनंदन! आपके अतिरिक्त यह करुणारूपिणी नायिका किसको अपना आश्रय और रक्षक बना पाती है?॥३४॥

**रघुनन्दन लोलुपचिन्तमघायुषमार्दितमार्तिकृता विपदा।**
**अवलोक्य मुकुन्दकृपासुधया स्वशिशुं सुखयिष्यसि देव कदा।**
**अति धन्यमहस्तदहो विदृशं विकलं समुपेष्यसि नाथ यदा।**
**तदा मन्मतिराप्तफलामुदिता भविता तव दर्शनसत्सम्पदा॥३५॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे देव हे रघुनंदन! आर्तिकारिणी विपत्ति द्वारा पीडित पापी चञ्चल चित्तवाले अपने बालक को देखकर आप कृपासुधा से उसे कब सुखी करेंगे? हे प्रभो अहो वही दिन धन्य होगा जब आप विवेकनेत्र से रहित मुझ परशुराम के पास आयेंगे उसी समय मेरी बुद्धि भी आपके दर्शनरूप श्रेष्ठ सम्पत्ति से फलवती और प्रसन्न हो जायेगी॥३५॥

**रघुनाथ निराश्रयमार्तविपन्नजनं तृणवत् विजहासि कथम्।**
**रघुपुंगव भैरवरौरवतो नहि मुक्तममुं विदधासि कथम्।**
**रणकर्कश कर्कशसंशयकुन्तवनं तरसा न लुनासि कथम्।**
**भवभंजन घोरभवाम्बुनिधौ पतितं स्वशिशुं नहि पासि कथम्॥३६॥**

**कृपा टीका**—हे रघुनाथ जी आश्रयहीन आर्त, विपन्न जन को आप तिनके के समान क्यों त्याग रहे हैं। हे रघुश्रेष्ठ इस दास को आप भयंकर रौरव नरक से क्यों नहीं मुक्त कर रहे हैं? हे युद्ध में कठोर संशय की बरछी के वन को आप क्यों नहीं काट डाल रहे हैं? भव भंजन घोर भवसागर में पड़े हुए इस शिशु की आप क्यों नहीं रक्षा कर रहे हैं॥३६॥

**दीनदयालुरुदारशिरोमणिरीड्ययशाः सचराचरवासी।**
**कौसल्यासूनुरदभ्रगुणाकर मैथिलिमानसकुंजनिवासी।**
**रामो रमापतिरर्ककुलाम्बुजभानुरमोघशरस्मितभाषी।**
**दूषणहा धृतदूषणमाशु शिशुं परिपातु कलेरविनाशी॥३७॥**

**कृपा टीका**—हे प्रभो दीनदयालु उदारों के शिरोमणि सुन्दर यशवाले चर अचर में निवास करने वाले कौसल्या केपुत्र श्रेष्ठ गुणों के भंडार सीताजी के मनकुंज में विराजने वालेमहालक्ष्मी के प्रति सूर्यकुल कमल के सूर्य अमोघवाण धारी, मुस्कुराकर बोलने वाले, खरदूषण के शत्रु अविनाशी, प्रभु श्रीराम, मुझ दुष्ट बालक को कलि से बचा लीजिए॥३७॥

**रघुनाथ नृनाथ जगत्रयनाथ अनाथजनेऽपि कृपा क्रियताम्।**
**निजमायाकृतकुधिया च धृतं कटु कैतव दोषमलं ह्रियताम्।**
**प्रसभोज्झितविश्वसुखेन मया तवपादसरोजयुगं ध्रियताम्।**
**मम राम सुमानसधाम त्वया जनकात्मजया समलङ्क्रियताम्॥३८॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे रघुनाथ! हे राजाधिराज! हे तीनों लोकों के स्वामी इस अनाथ सेवक पर भी कृपा कीजिए। अपनी माया द्वारा बनाये हुए मेरी दुष्टबुद्धि द्वारा स्वीकारते हुए इस कपट दोष मल को हरण कर लीजिए। संसार का सुख छोड़कर मैं आपके चरण कमल को वरण करूँ। हे श्रीराम आप सीताजी के सहित मेरे मन मंदिर को अलंकृत करें॥३८॥

**न कदापि तवाब्जपदाद्विमुखो मृगयेय सुखं च भवे हि वृथा।**
**मम ध्याने त्वमेधि सदैव हरे सततं स्मृतिमेतु तवैव कथा।**
**तव पादयुगे रतिरस्तु न वा व्यथयेन्नहि मां भवभीमव्यथा।**
**सफलास्तु यथा मम वाञ्छालता त्वरया रघुवीर विधेहि तथा॥३९॥**

**कृपा टीका**—हे प्रभो आपके श्रीचरणकमल से विमुख होकर मैं झूठे संसार कासुख कभी न खोजूँ। हे श्रीहरि आप मेरे ध्यान में सदैव विराजेंफ आप की कथा मेरी स्मृति में रहे। आपके चरणकमल में मेरी नित्य नूतन भक्ति बढ़े। संसार की भयंकर व्यथा मुझे दुखित न करे, जिससे मेरी इच्छा रूपिणी लता शीघ्र सफल हो जाये हे रघुवीर आप वही कीजिए॥३९॥

**मयि भातु सदा तव पादसरोजरतिविचकास्त्वपि प्राणलये।**
**सह जानकी माधुरिमूर्तिरथो मम राजतु मञ्जु मनो निलये।**
**तव नाम जपन् प्रणमन् प्रमुदा स्वमथो नितरां त्वयि संविलये।**
**रघुनाथ सदा निजलोचनयोः प्रिय तारकवत् किल त्वां कलये॥४०॥**

**कृपा टीका**—हे प्रभो! मुख में आपके चरणकमल की भक्त बनी रहे और वह मेरे प्राणान्त के समय भी सुशोभित रहे मेरे मन मंदिर में जानकी जी के साथ आपकी मधुर मूर्ति विराजे। आपका नाम जपता हुआ आपको प्रसन्नता से प्रणाम करता हुआ मैं आप में ही अपना समर्पण कर दूँ। हे राघव! आँख की पुतली की भाँति मैं आपको अपने नयनों में बसा लूँ॥४०॥

**जय जय जय श्रीराम कामशतकोटि मनोहर।**
**जय जय भुवनललाम श्यामसुन्दर गुणमन्दिर।**
**जय जय शीलनिधान ज्ञानगुणगृह करुणाकर।**
**जय भवसागर मन्दर जय रिपुजलनिधिमन्दर।**
**जय जय जय दशरथतनय जय जय सीताप्राणधन।**
**जय मुकुन्द जय सौख्यमय जय भार्गवसंकटशमन॥४१॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—करोड़ों काम के समान सुन्दर आपकी जय हो। लोकों के रत्न गुणों के मंदिर श्यामसुन्दर आपकी जय हो। शील के खजाने ज्ञानगुण के भवन करुणा की खान आपकी जय हो। भवसागर के मंदर और शत्रुसागर के लिए भी मन्दराचल आपकी जय हो। हे दशरथपुत्र हे सीताजी के प्राणधन हे सुखनिधान मुझ परशुराम का संकट दूर करनेवाले आपकी जय हो जय हो जय हो।४१॥ यहाँ से श्लोक ५० तक षट्पद छन्द है।

**प्रणतपाल नरपाल पार्वतीपतिपूजितपद।**
**श्रीनिकेत करुणानिकेत सुखविरतिभक्तिप्रद।**
**चण्डशरासनसायकसंयुगहतदशकन्धर ।**
**पीताम्बरधर भूधर धरणिसुतावर सुन्दर।**
**कौसल्यासुत दीनहित जनचातक नवनीलधर।**
**सीतालक्ष्मणश्रितचरण सततं भृगुवरहृदि विहर।।४२।।**

**कृपा टीका**—हे प्रणतपाल हे मनुष्यों के पालक हे शिव द्वारा पूजित चरण हे श्री और करुणा के आश्रय, सुख वैराग्य और भक्ति के दाता, तीक्ष्ण धनुषवाण धारण करने वाले, युद्ध में रावण को मारने वाले, पीताम्बरधारी पृथ्वी के आश्रय, सीतापति, अत्यन्त सुन्दर कौशल्या पुत्र, दीनों के हितैषी, भक्त चातकों के लिए नवीन वादल, प्रभु राम आप सीता एवं लक्ष्मणजी के सहित मुझ परशुराम के मन मानस में विहार कीजिए।४२॥

**जय ताटकासुबाहुनीचमारीचविदारण।**
**जय कौशिकमखपाल मुनिवधूशापनिवारण।**
**जय जय भग्नमहेशचाप जय भार्गवमदहर।**
**लब्धकीर्तिजानकीविजय जय जनप्रहर्षकर।**
**जय मैथिलजनचित्तहर जय जय जय सीतारमण।**
**जय कौसल्यानन्दकर जय निजजनहृदि विश्रमण।।४३।।**

**कृपा टीका**—ताटका सुबाहु तथा नीच मारीच को मारने वाले आपकी जय हो। विश्वामित्र के यज्ञरक्षक, अहल्या जी के शाप को नष्ट करने वाले, आपकी जय हो। शंकर धनुष तोड़ने वाले मुझ परशुराम का मद हरनेवाले आपकी जय हो। कीर्ति सीताजी तथा विजयश्री प्राप्त करने वाले, भक्तों के आनंददाता, आपकी

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जय हो। मिथिला जनों के चित्त चुराने वाले, सीतारमण। कौसल्या जी को आनंद देने वाले, भक्तों के हृदय में विश्राम करने वाले आपकी जय हो।।४३।।

**जय मुनिमानसहंस हंसकुलकंजहंसवर।**
**जय मण्डितवनभूमिभागजयपितृनिदेशकर।**
**जय कमलार्चितचरणकमल जय जय काननचर।**
**जय जय चण्डधनुःशरधर जय नाशितनिशिचर।**
**जय खर–दूषणदर्पहर जय सीतामार्गणनिरत।**
**जय मुनिगणभयशोकहर जय जय राघव सत्यव्रत।।४४।।**

**कृपा टीका**—हे मुनिमानस के हंस, सूर्यकुलकमल के सूर्य, आपकी जय हो। वनभूमि को शोभित करने वाले, पिता के आज्ञाकारी, आपकी जय हो। लक्ष्मी द्वारा पूजित चरण कमल, चित्रकूटविहारी आपकी जय हो। भयंकर धनुष धारण करनेवाले, राक्षसों का नाश करने वाले, प्रभु आपकी जय हो। खर दूष के गर्व को हरने वाले, सीताजी की खोज में तत्पर आपकी जय हो। मुनिगणों के शोकहारी, सत्यव्रती राघव आपकी जय हो।।४४।।

**विलपन्तं विजहासि पथिक इव पितरं वृद्धम्।**
**क्रोडे कृत्वा नयनजलैः परिसिंचसि गृद्धम्।**
**भिल्लाः पुत्रीकृता निषादो विहितो भ्राता।**
**भवता कौसल्येव बहुमता शबरी माता।**
**मित्रीयसि कपिराजमपि राक्षसमपि हे पूतकथ।**
**किमुपेक्षसे कृपायतन द्विजसुतमज्ञमनाथमथ।।४५।।**

**कृपा टीका**—हे प्रभो आप विलाप करते हुए वृद्ध पिता को पथिक की भाँति छोड़कर चले जाते हैं और फिर गृद्धराज जटायु को गोद में लेकर आँसुओं से सींचते हैं। भिल्लों को पुत्र बनाया, निषाद को भाई बनाया, कौशल्य जी के समान माता शबरी को आदर दिया। हे पवित्र कथा वाले प्रभु आप सुग्रीव और विभीषण को मित्र बनाते हैं तो फिर अज्ञ अनाथ मुझ परशुराम को तृण की भाँति क्यों छोड़ रहे हैं।।४५।।

**करुणाकन्द मुकुन्द कदा मयि कृपां करिष्यसि।**
**करकमलं मम शिरसि धनुर्धर कदा धरिष्यसि।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

भार्गव भवभयमार्तशोकहर कदा हरिष्यसि।
छबि सुधया मम नयनचषकमपि कदा भरिष्यसि।
घोर वारिनिधिमग्नमथ मां परेश पास्यसि कदा।
रामभद्र मयि दोषजुषि निजकरुणां धास्यसि कदा।।४६।।

**कृपा टीका**—हे करुणा के बादल मुकुन्द! मुझ पर कब कृपा कीजिएगा हे धर्नुधर मेरे शिर पर अपना कर कमल कब रखियेगा? हे भक्तभयहारी मुझ परशुराम का भवभय कब हरियेगा? अपने छवि अमृत से मेरे नेत्रों का प्याला कब भरियेगा? हे परमेश्वर घोर संसारसागर में डूबे हुए मुझ परशुराम का कब उद्धार कीजिएगा? हे रामभद्र! मुझ दुष्ट व्यक्ति पर अपनी करुणा का कब आधान कीजियेगा।।४६।।

सुरमुनिवृन्दमिलिन्दपीतपदपद्मप्रेमरस।
दिनकरकुलकुलकुमुदतुहिनकरभक्तभाववश।
हे हरमानसहंस हंसकुलतपनगताध्वस।
सेवकचारुचकोरपूर्णहिमकर रणकर्कश।
हे जनलोचनचोरवर सकृदपि राघव मृदुविहस।
सीतानुजसहितः सदा मम मृदुहृत्कमले निवस।।४७।।

**कृपा टीका**—देवता मुनि वृन्दरूप भ्रमरों द्वारा जिनके चरण कमल का प्रेमरस पिया गया है। जो सूर्य कुलरूप मुकुद के लिए चन्द्रमा हैं और भक्तों के भावों के वशीभूत हैं। ऐसे हे भगवान शंकर के मन्मानस के राजहंस सूर्यकुल के सूर्य निर्भीक सेवकों के नेत्र चकोर के चन्द्रमा युद्ध में कर्कश हे भक्तों के नयनों को चुराने वाले राघव एक बार तो मुस्कुराइये। सीताजी एवं लक्ष्मण जी के सहित मेरे हृदय कमल में निवास कीजिए।।४७।।

या करुणा किल श्रुता जटायुर्मोक्षविधाने।
या करुणा हयधिगता हनुमतस्तोषप्रदाने।
यया बालिनं युधि निहत्य सुग्रीवस्त्रातः।
रावणानुजो यथा पालितो लक्ष्मणभ्रातः।
कठिनकालकलिमलमलिनप्रबलपापविग्रहधरे।
सा करुणा न भवेत् कथं शरणं याते मयि हरे।।४८।।

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे प्रभो! जटायु के मोक्ष दान में आप की जो करुणा विख्यात हुई, हनुमान जी को दुलारते समय आपकी जो करुणा दृष्टिगोचर हुई, जिस करुणा से आपने बालि को मारकर सुग्रीव की रक्षा की, जिस करुणा से विभीषण का पालन किया, हे लक्ष्मण जी के बड़े भैया, कुटिल कठिनकाल के कारण पाप पर निर्भर किन्तु आपके शरण में गये हुए मुझ परशुराम पर आपकी करुणा क्यों नहीं हो रही है।।४८।।

**कः कुरुते त्वां विना जलधियानं पाषाणम्।**
**रिपुमपि को मोक्षयति त्वां विना प्रति कुर्वाणम्।**
**गणिकायै त्वां विना रातिकः किल निर्वाणम्।**
**द्विजबन्धोरपि कश्चकार भव निधितस्त्राणम्।**
**कः प्रपन्नजनपालकस्त्रिभुवनमध्ये ते समः।**
**मादृक् खलमपि त्वां विना को रघुवर त्रातुं क्षमः।।४९।।**

**कृपा टीका**—हे रघुवर! आपके बिना पत्थर को नाव कौन बनाता है आपके बिना घोर प्रतिकार करते हुए निहत्थे रावण जैसे शत्रु को भीअपने हाथ पाकर कौन छोड़ देता है, आप के बिना गणिका को कौन मोक्ष देता है। दुष्ट अजामिलको कौन देवता यम की यातना से बचा सकता है तीनों लोकों में आपके समान कौन शरणागत पालक है और हे रघुवर मुझ जैसे दुष्ट को आपके बिना भव भय से कौन छुड़ा सकता है?।।४९।।

**या शीघ्रता गजेन्द्ररक्षणे विहिता भवता।**
**कृता भूमिपतिसदसि या त्वरा कृष्णामवता।**
**स्तम्भं भित्वा कनकशिपुमभिहत्य विषादम्।**
**हृत्वा यया नृसिंह प्रमोदितवान् प्रह्लादम्।**
**यया विपुल पतितास्त्वया मुक्ता भवनिधितः प्रभो।**
**विस्मृतवान् किमु त्वां त्वरां भार्गवहेतोः हे विभो।।५०।।**

अब पूर्वकल्प की घटनायें स्मरण करा रहे हैं।

**कृपा टीका**—हे प्रभो गजेन्द्र की रक्षा में आपने जो शीघ्रता की तथा पूर्वकल्प के द्वापर में द्रौपदी जी की रक्षा करते हुए आपश्री ने जो त्वरा दिखायी, खम्भे को फाड़कर हिरण्यकशिपु को मारकर जिस करुणा से आपने दुःख दूर कर प्रह्लाद

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

को प्रसन्न किया था, जिस त्वरा से आपने अनेक पतितोंको भवसागर से मुक्त कर दिया, हे प्रभो क्या मुझ परशुराम के संबंध में आप उस शीघ्रता को भूल गये॥५०॥

जय राम शोभाधाम भुवनललाम गुणमन्दिर विभो।
जय पूर्णकाम पुरारिपूजित कामशतसुन्दर प्रभो।
जय भूपमुकुटावलिमहितपदपीठ सीतावर हरे।
कलिलीनसाधनहीनमलजुषि कुरु कृपां मयि भवभरे॥५१॥

**कृपा टीका**—हे शोभा कूे आगार, हे भुवनों के रत्न, हे गुणों के मन्दिर, हे व्यापक! आपकी जय हो। हे पूर्णकाम, भगवान शिव से पूजित, करोड़ों काम के समान सुन्दर, सर्वसमर्थ! आपकी जय हो। राजाओं के मुकुटमणि से पूजित चरणपादुका वाले, सीतापते श्रीहरे! आपकी जंय हो। कलि से भयभीत, साधनों से हीन, मलीन स्वभाव वाले, भय से व्याप्त, मुझ परशुराम पर कृपा कीजिये॥५१॥ यहाँ से श्लोक ६३ तक हरिगीतक छन्द है।

जय जानकीजीवन जनितजननयनसुख जगतीपते।
जय जंभरिपुसुतदर्पहर हरहृत् सरोज सतां गते।
जय जनकदशरथसुकृतसुरतरुसुफलसाधनफलरते।
जय जलदसुन्दर रामनृप धारय कृपां भार्गवकृते॥५२॥

**कृपा टीका**—हे जानकी जी के जीवन, भक्तों के नयनों के लिये सुख के जन्मदाता, जगत्पति आपकीजय हो। इन्द्रपुत्र जयन्त के गर्वहर्ता, शंकर भगवान के हृदय सरोवर के कमल, संतों के गन्तव्य आपकी जय हो। महाराज दशरथ के पुण्य कल्पवृक्ष के सुन्दर फल और साधनों के फलरूप में भक्ति को ही सिद्ध करने वाले, आपकी जय हो। हे बादल के समान सुंदर महाराज श्रीराम! आप मुझ परशुराम के लिए कृपा धारण कीजिये॥५२॥

जय जनपते सूदितदशानन जनवनजकाननरवे।
जय जलजभवपूजितपदाम्बुज राम जितकामच्छवे।
जय जय जनार्दन दनुजमर्दन शुभयशःपावितकवे।
जय जन्ममत्युजरार्तिहर भृगुसुत कलुष भूधर पवे॥५३॥

**कृपा टीका**—हे प्राणियों के स्वामी, रावण के बधकर्ता, भक्तोंके कमलवन केलिये

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सूर्य, आपकी जय हो। ब्रह्माजी द्वारा पूजित चरणकमल, अनंत काम के छविवाले, आपकी जय हो। राक्षसों का मर्दन करने वाले, भक्तों की याचना के विषय बनने वाले, अपनी दृष्टि से कवियों को पवित्र करने वाले, जन्म-मृत्यु-जरा-व्याधि को दूर करने वाले, मुझ परशुराम के कालुष्यरूप पर्वत के लिये वज्रस्वरूप! आपकी जय हो॥५३॥

**जय जनकनन्दिनि नयनचातकि नीरधर गुणवारिधे।**
**जय जय जनेश्वर रामभद्र निसर्गसौम्य कृपानिधे।**
**अघराशिमज्ञमनाथमशरणमार्तमतिदोषाकरम् ।**
**करुणादृशा पतितं भवे रघुवर विलोकय भृगुभरम्॥५४॥**

**कृपा टीका**—जानकी जी के नयन चातकों के लिये स्वाति के मेघ, गुणसागर, आपकी जय हो। प्राणियों के ईश्वर, प्रकृति से सुन्दर, कृपासागर रामभद्र जी! आपकी जय हो जय हो। आपके राशि, अनाथ अज्ञानीआर्त, अत्यंत दोषों के आगार ऐसे संसार में पतित मुझ भृगुकुल के भार परशुराम को अपनी करुणादृष्टि से देखिये॥५४॥

**त्वं ब्रह्म व्यापकमेकमजमव्यक्तमथ प्रकृतेः परम्।**
**अनुपममखण्डमनन्तमीड्यमनादिविषयागोचरम् ।**
**निर्गुणनिरञ्जननिर्विकृति तत् त्वमसि लक्ष्यमलक्षणम्।**
**दशरथसुकृत सागरशशी श्रुतवेदवस्तु विलक्षणम्॥५५॥**

**कृपा टीका**—हे दशरथ जी के सुकृत, महासागर के चन्द्रमा जैसे यश वाले, आप ब्रह्म-व्यापक-एक-अजन्मा-प्राकृत इन्द्रियों के लिये अव्यक्त, प्रकृति से परे, उपमारहित-आदिअन्तरहित-अखण्ड-स्तुतियोग्य इन्द्रियों के विषयों से अतीव, गुणों और कर्मलेप से रहित, विकाररहित, तत्वमसि आदि महावाक्यों के लक्ष्यस्वरूप और तटस्थ लक्षणों से भी परे, विलक्षण वेदप्रतिपाद्य वस्तु हैं॥५५॥

**रघुनाथ सीतानाथ त्रिभुवननाथ राघव पाहि माम्।**
**नररूप कोसलभूप सुरनरभूप माधव त्राहि माम्।**
**रघुवीर संयुगधीर श्यामशरीर विकलमवेहि माम्।**
**पतितं भवे कलिनाहतं द्विजसुतमनाथमुपेहि माम्॥५६॥**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे रघुकुल के नाथ, तीनों लोगों के स्वामी, सीतापति, मेरी रक्षा कीजिये। हे मनुष्यरूप, अयोध्यापते, देवता मुनियों के स्वामी, चैत्र में जन्म लेने वाले रघुनन्दन मेरी रक्षा कीजिये। हे युद्ध में धीर, श्यामल शरीरवाले श्री रघुवीर! मुझे अत्यंत व्याकुल जानिये। कलि द्वारा पीड़ित, भवसागर में पड़े हुए इस ब्राह्मणपुत्र परशुराम के निकट आइये॥५६॥

**अशरणशरण कारणकरण तारणतरण घनश्याम हे**
**भूभरहरण जनभयहरण सरसिजचरण श्रीराम हे।**
**शतकामसुन्दर सौख्यमन्दिर त्वां वयं वन्दामहे।**
**वन्दारुसुरतरुमघहरं तव पदयुगञ्च भजामहे।।५७।।**

**कृपा टीका**—हे अशरणों के शरणदाता, कारणों के मूल कारण, तारने वालों को भी तारने वाले, भूभारहारी, भक्तभयहरण, कमलचरण, अनेक कामों के समान सुन्दर, सुख के मन्दिर श्रीराम! हम आपको वन्दन करते हैं। वन्दन करने वालों के लिये कल्पवृक्ष, पापहारी आपके श्रीचरणकमल का हम भजन करते हैं॥५७॥

**धिग् धिग् जघन्यं पापजलधिं मामहो उदरम्भरिम्।**
**न भजे निमिषमपि शुद्धमनसा परमसुहृदमहं हरिम्।**
**संसारसम्बन्धिषु मनः सततं दधे निष्कारणम्।**
**मन्ये न सम्बन्धिनमहो रघुपतिं वारणतारणम्।।५८।।**

**कृपा टीका**—मुझ जघन्य, पापसासगर, केवल पेटभरने वाले को धिक्कार है धिक्कार है। क्योंकि एक क्षण भर भी मैं परम सुहृद श्रीहरि को नहीं भजता। मैं संसार के सम्बन्धियों में बिना कारण अपना मन लगाये रहता हूँ। किंतु गजेन्द्र को तारने वाले शाश्वत संबन्धी श्रीराम को नहीं मानता॥५८॥

**क्षणमपि न ते पदपंकजे निदधामि देव निजं मनः।**
**त्वां विलज्य सततं प्रार्थये तारस्वरेण पुनः पुनः।**
**मादृशपतितचूडामणेः रघुनाथ पश्य विडम्बनम्।**
**किन्तु त्वमेव भवाम्बुधौ भार्गवकृतेऽस्यवलम्बनम्।।५९।।**

**कृपा टीका**—हे देव! एक क्षण भी आपके चरण कमल में अपना मन नहीं लगाता, निर्लज्ज होकर तारस्वर से बार बार प्रार्थना करता रहता हूँ। हे रघुनाथ जी!

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुझ जैसे पतितचूड़ामणि की विडम्बना तो देखिये, फिर भी इस संसार सागर में मुझ परशुराम के लिये आप ही तो अवलंबन हैं॥५९॥

**मज्जन् महाभवसागरे पतितोजनो ह्यवलम्ब्यताम्।**
**करुणानिधे करुणां वितर नहि किमपिनाथ विलम्ब्यताम्।**
**रघुवर मयि द्रव भव नयनविषयः क्वचिन्न विरम्यताम्।**
**सीतापते भवता झटिति आगम्यतामागम्यताम्॥६०॥**

**कृपा टीका**—महासागर में डूबते हुये इस पतित जन को अवलंबन दीजिये, हे करुणा के सागर! करुणा कीजिये, थोड़ा भी विलंब मत कीजिये। हे रघुवर! मुझ पर द्रवित होइये, मेरे नेत्रों के विषय बनिये। हे सीतापते! कहीं पर भी विराम मत लीजिये, शीघ्र आइये, शीघ्र आइये॥६०॥

**श्रमणाश्रमं हि चकार कं मातामता भवता च या।**
**किं कृताहल्या किल तपोलब्धं पदाब्जरजो यया।**
**असहायमार्तमनीशमज्ञमसम्बलं मलनिर्भरम्।**
**पतितं विषमभवसागरे त्रायस्व राघव मा चिरम्॥६१॥**

**कृपा टीका**—हे प्रभो! श्रमणा नामक शबरी ने कौन सा श्रम किया था? जिसे अपने माता मान लिया। अहल्या ने कौन सा तप किया था जिसने आपके चरण कमल का पराग पा लिया। असहाय-आर्त-असमर्थ पाथेय से रहित मल से व्याप्त विषम भवसागर में पड़े हुए मुझ परशुराम को हे राघव! शीघ्रं उबार लीजिये॥६१॥

**कैकयिवचो मन्यसे शुभमिव निशितमिव सरमायसम्।**
**वल्लभाविप्रियकृतमहो घृणया मुमोचिथ वायसम्।**
**अङ्कस्थमश्रुजलैः पितरमिव संश्चकर्थ जटायुषम्।**
**राघव कथं समुपेक्षसे भृगुसुतमनाथमघायुषम्॥६२॥**

**कृपा टीका**—हे राघव! लोहे के बाण के समान तीखे कैकेयी के वचन को आपने शुभ जैसा माना। पत्नीका अपमान करने वाले काकवेषधारी जयंत को भी आपने कृपा करके छोड़ दिया। जटायु जी को गोद में लेकर उन्हें पिता के ही समान अपने नयनाश्रुओं से सींचकर आपने उनका अंतिम संस्कार किया, तो फिर अनाथ पापायू मुझ परशुराम की क्यों उपेक्षा कर रहे हैं?॥६२॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

रघुवीर त्वयि तिष्ठति कथं कलिना जनोऽयं काल्यते।
अशरणशरणशरणागतो भवता कथं नहि पाल्यते।
त्रैलोक्यविश्रुतपतितपावननिजयशो न निभाल्यते।
सीतेश राघव द्विजसुतः कृपया कथं नहि लाल्यते।।६३।।

कृपा टीका—हे रघुवीर! आपके रहते हुए, यह जन कलि द्वारा क्यों सताया जा रहा है? हे अशरणशरण! आपके द्वारा शरणागति का पालन क्यों नहीं किया जा रहा है? तीनों लोकों में व्याप्त पतितपावन यश को आप क्यों नहीं सँभाल रहे हैं? हे सीतापते राघव! इस ब्राह्मणपुत्र का आप कृपा से लालन पालन क्यों नहीं कर रहे हैं।।६३।। यहाँ से श्लोक ७२ तक षट्पद छन्द है।

करुणाकर रघुनाथ भवान् नहि कृपां करिष्यति।
भवनिधिमग्नो जनस्तदायं सपदि मरिष्यति।
कलिरपि निर्बलमेत्य प्रभो प्रसभं प्रहरिष्यति।
मायाझंझा झटिति मतितरीमेत्य हरिष्यति।
प्रसरिष्यति लोकेषु नहि दीनदयालुयशस्तव।
अनुकूलो भृगुभवकृते भव भवनिधि पद्मप्लव।।६४।।

कृपा टीका—हे करुणाकर राम! यदि आप कृपा नहीं करेंगे तो भवसागर में पड़ा हुआ यह जन शीघ्र मर जायेगा। कलिकाल भी मुझे निर्बल जानकर घोर प्रहार करेगा, और मायारूप झन्झा भी संसार जल में मेरी बुद्धि नौका को डुबो देगी। तीनों लोकों में आपका दीनदयालु यश कैसे फैलेगा? इसीलिये हे संसारसागर के लिये जहाज के समान चरण कमल वाले मुझ परशुराम के लिये अनुकूल हो जाइये।।६४।। यहाँ से षट्पद छन्द है।

कथय प्रभो कुलटया गणिकया तपः कृतं किम्।
पुण्यमजामिलविप्रबन्धुना कथय चितं किम्।
कौलीन्यं किं नाथ शबरिका कथय श्रितवती।
गौतमपत्नी किं सतीत्वमथ देव धृतवती।
किं शास्त्रं पठितं कथय कपिभिः कोलैर्हे हरे।
पाहि पाहि विप्रं प्रभो मग्नं जलधौ मलभरे।।६५।।

कृपा टीका—हे प्रभो! वतलाइये, कुलटा गणिका ने कौन सा तप किया था?

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दुष्ट ब्राह्मण अजामिल ने कौन सा पुण्य किया था? शबरी माता कौन सी कुलीन महिला थीं? अहल्या कौन सी उच्चकोटि की पतिव्रता थी? हे हरे! वानरों और कोल भीलों ने कौन सा शास्त्र पढ़ा था? इसीलिये मलपूर्ण भवसागर में पड़े हुए मुझ ब्राह्मण की रक्षा कर लीजिये॥६५॥

**यद्यप्यसि सर्वज्ञशिरोमणिरन्तर्यामी।**
**निर्विकारनिर्लेपनिरामयहृदयस्वामी।**
**तदपि मूढ़तावशात् व्यथां तुभ्यं कथयेहम्।**
**निजकृतफलमभिधाय निरीहं त्वां व्यथयेहम्।**
**क्षन्तव्योऽस्मि तथाप्यहं भवता यत् सुतकस्तव।**
**सीदति पापवशान् मयि पतिते त्वरितं नाथ द्रव॥६६॥**

**कृपा टीका**—यद्यपि आप सर्वज्ञों के शिरोमणि, अन्तर्यामी, निर्विकार, कर्मलेप से रहित, भवरोगों से दूर, हृदय के स्वामी हैं, फिर भी मूर्खतावश आपको अपनी व्यथा सुना रहा हूँ। अपने कर्म का फल कहकर आप जैसे निरीह को दुःखी कर रहा हूँ। आप मुझे क्षमा करें, क्योंकि मैं आपका छोटा पुत्र हूँ। पापवश दुःखी होते हुये, मुझ पर शीघ्र द्रवित होइये॥६६॥

**त्यक्त्वा लज्जामहो कृतं पूर्वं बहुपापम्।**
**रामचन्द्र अतएव लभे सम्प्रति सन्तापम्।**
**पुरा लंघितो विधिर्वर्धते सम्प्रति पीडा।**
**त्वां प्रति हा कथयामि नाथ नहि मम्हृदि ब्रीडा।**
**जगत्स्वार्थमयमूढमतिकलिरपि सहते किमपि नहि।**
**रामभद्र कृपया झटिति ब्राह्मणदारुणव्यथां जहि॥६७॥**

**कृपा टीका**—लज्जा छोड़कर पहले बहुत पाप किया, इसीलिये हे रामचन्द्र! आज बहुत कष्ट पा रहा हूँ। पहले विधि का उल्लंघन किया, इस समय पीड़ा बढ़ रही है। आपके प्रति यह सब कह रहा हूँ, मेरे हृदय में लज्जा भी नहीं आ रही है। जगत स्वार्थमय हो गया है, कलि भी नहीं सहन कर पा रहा है, हे रामभद्र! कृपा करके शीघ्र ही ब्राह्मण परशुराम की व्यथा को समाप्त कर दीजिये॥६७॥

**पाहि पाहि पाकारिसूनुमदहर जितदूषण।**
**पाहि पुराणपरेश राम रघुवंशविभूषण।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

पाहि मुकुन्द कृपानिधानकौसल्यानन्दन।
पाहि पाहि नतपाल पार्वतीपतिकृतवन्दन।
हे हरहृत्पङ्कजमधुप हे जनचातकवारिधर।
पाहि पाहि ब्राह्मणमिमं करुणासागर भूपवर।।६८।।

कृपा टीका—इन्द्रपुत्र का मद हरनेवाले, दूषण के शत्रु, मेरी रक्षा कीजिये। परमेश्वर-पुराण पुरुष-रघुवंशभूषण राम! मेरी रक्षा कीजिये। मुक्तिदाता, कृपा के खजाने, कौसल्यापुत्र! मेरी रक्षा कीजिए। प्रणतपाल पार्वतीपति शिवजी द्वारा वन्दित श्रीराम! मेरी रक्षा कीजिये। हे शंकर हृदयकमल के भ्रमर, हे भक्त चातकों के बादल, हे करुणासिन्धु महाराज! इस ब्राह्मण की रक्षा कीजिये रक्षा कीजिये।।६८।।

रक्ष रक्ष रक्षोघ्न नीलघनकमल कान्तिधर।
रक्ष रक्ष यक्षेशबन्धुमदखर्वगर्वहर।
रक्ष रक्ष राक्षसानीकनीरजदोषाकर।
रक्ष रक्ष राकेशवदन जनमानस सुखकर।
रक्ष रक्ष दशरथतनय रक्ष मैथिली प्राणधन।
रक्ष रक्ष भृगुसुतमिमं रक्ष रामचितसौख्यघन।।६९।।

कृपा टीका—राक्षसों को मारने वाले, नीलकमल की शोभा धारण करने वाले प्रभु! मेरी रक्षा कीजिये रक्षा कीजिये। कुबेर के भाई रावण का मद से निम्न, गर्व हरण करने वाले मेरी रक्षा कीजिये, रक्षा कीजिये। राक्षस सेनारूप कमल के चन्द्रमा मेरी रक्षा कीजिये रक्षा कीजिये। चन्द्रमुख भक्त के मन को सुख देने वाले श्रीराम रक्षा कीजिये रक्षा कीजिये। हे दशरथपुत्र, हेसीताजी के प्राणधन, हे सच्चिदानन्दधन श्रीराम! इस परशुराम की रक्षा कीजिये रक्षा कीजिये।।६९।।

त्राहि त्राहि कलिकालव्यालग्रस्तं दनुजारे।
त्राहि त्राहि त्रैलोक्यविभूत्तमरूप खरारे।
त्राहि त्राहि जनमिमं कान्तिजिततरुणतमारे।
त्राहि त्राहि बालकं रामनृपभग्नसुरारे।
त्राहि त्राहि भववारिनिधिमग्नं सायकचापधर।
त्राहि त्राहि विप्रजमिमं प्रणतपाल जनकष्टहर।।७०।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—कलिकाल व्याल से ग्रस्त मुझ ब्राह्मण की रक्षा कीजिये। हे राक्षसशत्रु, हे खरान्तक श्रीराम! तीनों लोकों में उत्तम रूपधारी आप रक्षा कीजिये। अपने प्रभाव से सूर्य को जीतनेवाले आप इस जन की रक्षा कीजिये। राक्षसों को मारने वाले हे राजाराम! बालक की रक्षा कीजिये। हे धनुर्बाणधारी, हे भक्तकष्टहारी! भवसागर में डूबे हुये इस ब्राह्मण कुमार की रक्षा कीजिये, रक्षा कीजिये॥७०॥

**चिन्तय चिन्मयराममरूपमथ परिहर निद्राम्।**
**राम नाम जप सदा विहाय तरुणतरतन्द्राम्।**
**भावय भावितहृदा सदा रघुपतिशुचिलीलाम्।**
**भावुकजनसुरधेनुमसुरकुलमोहनशीलाम् ।**
**त्यक्त्वा दुर्व्यसनं कुटिलचित्रकूटमुपविशक्षमनः।**
**अन्याशां परिहृत्य शठभव भार्गव रघुवरजनः॥७१॥**

**कृपा टीका**—हे मन! निद्रा छोड़कर श्रीराम के चिन्मयरूप का चिन्तन करो, बहुत बड़ी अंगड़ाई छोड़कर सदैव रामनाम का जप करो। भावुक जनों के लिये कामधेनु, असुरों को मोहित करने वाली श्रीरामलीला की भावुक हृदय से भावना करो। हे दुष्टमन! दुर्व्यसन छोड़कर चित्रकूट को विहार कर यहीं रम जाओ। हे परशुराम! अन्य आशा छोड़कर श्रीराम के सेवक बन जाओ॥७२॥

**नवकिसलयकमनीयशिरीषकुसुमसमचरणम् ।**
**हरहृत् सरसि सरोजमार्तिहरमशरणशरणम्।**
**कुन्तकेतु यवपद्ममहितभवतारणतरणम्।**
**सुखदं गंगाजनकमहल्यापातकहरणम्।**
**सेवकजनचिन्तामणिं स्मृतपूरितसुखसम्पदम्।**
**भार्गव यदि कांक्षसि सुखं स्मर सततं रघुपतिपदम्॥७२॥**

**कृपा टीका**—हे परशुराम! यदि सुख चाहते हो तो नवीन किसलय और शिरीष पुष्प के समान कोमल प्रकृति वाले, शंकर भगवान के हृदय सरोवर के कमल, आर्तहारी, अशरणों को शरण देने वाले, बर्छी-ध्वज-यव, कमल से सुन्दर भवसागर से तारनेवाले, गंगाजी जन्मदाता, अहल्या के पाप को हरने वाले, सेवक के लिये चिन्तामणि, स्मरण करने मात्र से संपत्ति की पूर्ति करनेवाले, श्रीराम के चरण का स्मरण करो॥७२॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जय जनार्तिहन् जानकीपते,
भयतमो हृतौ भानुविक्रमः।
स्वयमुदीक्षतां साधुविक्लवं
वयमिहार्पिता वैशसंकलेः॥७३॥

**कृपा टीका**—हे भक्तों की आर्ति को नष्ट करने वाले, भय-अंधकार के हरण विधि में सूर्य के समान पराक्रम वाले प्रभु श्रीराम! साधुओं का कष्ट स्वयं देखिये, हम यहाँ कलि संबन्धी संकट को प्राप्त होचुके हैं॥७३॥ यहाँ से श्लोक ९१ तक कनकमञ्जरी छन्द है।

जनकनन्दिनीजीवनप्रद
तनुभृतां नृणां तापनाशन।
मन इभक्लमं मापते मृजन्
विनय मे रुजं वीरराघव॥७४॥

**कृपा टीका**—जनकनंदिनी सीताजी को जीवन देने वाले, शरीरधारियों के कष्ट नाशक, हे महालक्ष्मीपते! मेरे मनमतंग का श्रम दूर करते हुए, मेरे रोग को नष्ट कीजिये॥७४॥

जनिभृतामहं जातजालमो
घनतमः प्लुतो घर्मतापितः।
जनकजावरे जागृतीश्वरे
मन इसंबलं मां तुदत्यलम्॥७५॥

**कृपा टीका**—प्राणियों में मैं जन्मतः दुष्ट हूँ। घने अंधकार से घिरा हुआ और संसार के ताप से तप्त हूँ। पर सीतापति जैसे ईश्वर के जागरूक रहने पर भी काम का सहारा लेकर मन मुझे सता रहा है॥७५॥

गतिरनागसां गच्छतां नृणां
श्रुतिपथश्रितैः श्रूयते भवान्।
कृतिविदुन्मदं कृष्टकार्मुकः
पतितपावनः पातु पापिनम्॥७६॥

**कृपा टीका**—हे प्रभो! आपकी शरण में जानेवाले निरपराध जनों के लिये आप एकमात्र गति हैं, ऐसा वैदिकजनों द्वारा सुना जाता है। इस मदान्ध पापी को कर्तव्यवेत्ता आप पतितपावन प्रभु बचा लें॥७६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**यदहमस्मि भो यत्त्वमस्ति मे**
**तदिदमर्पितं त्वत्पदाम्बुजे।**
**इद उदीक्षतां ईशइस्मयो**
**हृदि न चेत् प्रमा हृष्टचक्षुषा॥७७॥**

हे प्रभो! मैं जो हूँ, जो मेरा है वह आपके चरणों में समर्पित है। हे कामनाशक, हे ईश्वर! यदि आपको हृदय में विश्वास न हो तो आश्चर्य से भरे नेत्र से ई अर्थात् काम का अहंकार देख लीजिये॥७७॥

**हृदि विभेसि भो हृत्पतेऽवने**
**तदिदमद्भुतं तावकस्य मे।**
**यदि हरिः शिशौ यात्युदासताम्**
**मदिकरी कथं मर्दयेन्न तम्॥७८॥**

**कृपा टीका**—हे हृदयेश! यदि मेरे रक्षण के संबंध में आप हृदय में डर रहे हैं, तो आपके भक्त परशुराम के लिये बड़ा आश्चर्य है। यदि सिंह अपने बच्चे के प्रति उदास हो जायेगा तो मतवाला हाथी उसे क्यों नहीं मार डालेगा॥७९॥

**प्रणतपालक प्रश्रयानतः**
**क्षणमपिच्छविं क्ष्मार्पितः स्मरन्।**
**तृणमिवेः सुखं तृप्त आमनन्**
**व्रणयितास्म्यमुं बृंहितं कलिम्॥७९॥**

**कृपा टीका**—हे प्रणतपालक! यदि विनय से नम्र होकर एक क्षण भी आपकी कृपा से अर्पित आपकी छवि का स्मरण कर लूँगा तो प्रसन्न होकर काम के सुख से तिनके के समान समझता हुआ इस उद्धत कलि को लहुलुहान कर दूँगा॥७९॥

**ननु विभो मया नष्ट बुद्धिना**
**तनुरियं सुखैस्तर्पिता भवैः।**
**जनुरधोक्षजे जातुमार्पितं**
**धनुरुदच्य मां धेहि राघव॥८०॥**

**कृपा टीका**—हे प्रभो! नष्टबुद्धि वाले मैंने इस शरीर को संसार के सुख से तर्पित किया। अपना जन्म आपको अर्पित नहीं किया। इसीलिये धनुष उठाकर आप मेरा पोषण कीजिये॥८०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

कनककामिनी काञ्चनस्पृहा
जनकजापतौ जागृति त्वयि।
खनति नो मनः खञ्जनाम्बक
वनतिनोऽवने वस्तु पामनम्॥८१॥

**कृपा टीका**—हे खंजननेत्र! आप जैसे सीतापति के जागृत रहने पर भी सुंदर वर्ण वाली कामिनी और कांचन की इच्छा मेरे मन को कुरेद रही है। फोड़ों वाला मेरा मन वन में प्राप्त होने वाले आपश्री को नहीं चाह रहा है।

दशमुखच्छिदो दासमन्धकम्
दशति दुष्टधीर्दारुणो हि माम्।
दशन जिह्वया दन्दशूक इः
दशरथप्रसूर्दृश्यतां सकृत्॥८२॥

**कृपा टीका**—दशमुखनाशक श्रीराम के दास मुझ ज्ञाननेत्रहीन परशुराम को दुष्टबुद्धिवाला यह काम सर्प दाँत और जीभ से डस रहा है। हे दशरथ कुमार! एक बार तो देख लीजिये॥८२॥

जयति जाह्नवीजन्मदांघ्रिको
जयति जन्मभृज्जाड्यनाशनः।
जयति जम्भहज्जातकाक्षिकृ-
ज्जयति जानकीजीवनः प्रभुः॥८३॥

**कृपा टीका**—गंगाजी के जन्मदाता चरणकमल! आपकी जय हो। प्राणियों की जड़ता को नाश करने वाले आपकी जय हो। जंभशत्रु इन्द्र के पुत्र जयन्त का एक नेत्र फोड़ने वाले प्रभु! आपकी जय हो। हे जानकी जीवन आपकी जय हो॥८३॥

जलदसुन्दरो जैत्रकन्धरः
खलकुलानलः ख प्रभोज्ज्वल।
नलिनपान्वयोन्नायको मुहु
र्मलमिदं स मे मार्ष्टुराघवः॥८४॥

**कृपा टीका**—बादल के समान सुन्दर, विजयशील स्कन्ध वाले, राक्षस कुल के अग्नि, सूर्य के समान प्रकाशमान, कमलरक्षक, सूर्यकुल के उन्नतिकर्ता ऐसे श्रीराघव मेरे मल को समाप्त कर दें॥८४॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

दशमुखान्तकादर्तिहा नहि
दशचतुर्भुवां दृश्यते ऋते।
दशनदीधितिद्योतितोडुपे
दशरथात्मजे दृष्टिरस्तु मे।।८५।।

**कृपा टीका**—चौदहों भुवनों में रावणशत्रु श्रीराम जैसा कोई कष्टहर्ता नहीं दिखाई पड़ता। दाँतों की शोभा से चन्द्रमा को जीतने वाले दशरथनन्दन में मेरी दृष्टि केन्द्रित हो जाय॥८५॥

जहि जनार्दन ज्याशरैः कलिं
नहि दयोचिता नाथ निम्नगे।
सहि मृतो न चेत् साधुभिस्तव
क्व हि कमेष्यते क्वाथितात्मभिः।।८६।।

**कृपा टीका**—हे जनार्दन! अपने धनुष की डोरी से छोड़े हुए बाणों द्वारा कलि को मार डालिये। इस नीच पर दया उचित नहीं है। यदि यह नहीं मरा तो आपके लिये शरीर को तपाने वाले सन्तों को कहाँ सुख मिलेगा?॥६॥

न जननी विभो नास्ति सोदरो
न जनको न कं नास्ति मे सखा।
न जनतास्पृहा नो धनं गति
र्न जनकात्मजा नाथ मन्तरा।।८७।।

**कृपा टीका**—हे प्रभो! जानकी पति श्रीराम के अतिरिक्त मेरे पास न माँ है, न भाई है, न पिता है, न सुख है, न मित्र है, न जनता की स्पृहा है, न धन है और न गति है॥८७॥

न यदि वर्तसे निघ्नकारुणि
न यशसः समं नाकपश्यते।
नय न भास्वतो नान्दनीं गतिं
नयनगोचरो नाथ मे भव।।८८।।

**कृपा टीका**—हे प्रभो! यदि आप शरणागतों पर करुणा नहीं करेंगे तो हे देवरक्षक! यह आपके यश के समान नहीं होगा। इसीलिये हे सूर्यनन्दन! आप

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुझे उत्कट गति की ओर मत ले जाइये, अब तो मेरी आँखों के सामने आइये॥८८॥

**दमय मे मदं दीनवत्सल**
**शमय मे समं शान्तिकृन्मलम्।**
**नमय मे शिरो नीचगं हरे**
**रमय मे मनो राममास्पदे॥८९॥**

**कृपा टीका**—हे दीनवत्सल! मेरे मद का दमन कीजिये, हे शान्तिकारिन्! मेरे संपूर्ण मल को शान्त कीजिये। हे हरे! निम्नगामी मेरे शिर को झुका दीजिये। और हे राम! सीताजी के आश्रय, अपने चरणों में मेरे मन को रमा दीजिये॥८९॥

**कुटिलकुन्तलं कुड्मलद्विजं**
**जटिलशीर्षकं जानकीस्पृहम्।**
**निटिलनेत्रहृन्नैजमन्दिरम्**
**घटय दृग्पथे घर्महन्मुखम्॥९०॥**

**कृपा टीका**—हे प्रभो! घुँघराले बालोंवाले, कुन्दकली के समान दाँतों वाले, शिरकीजटा से सुशोभित, जानकी जी की स्पृहा के आश्रय, निटिल अर्थात् भालनेत्र भगवान शंकर के हृदय में अपना मन्दिर माननेवाले ऐसे भवतापहारी अपने मुखचन्द्र को मेरे दृष्टिपथ पर ले आइये॥९०॥

**कनकमञ्जरी कान्तिवल्लरी**
**जनकनन्दिनी जातसुस्पृहः।**
**वनकसौख्यकृद् वर्धयस्वतां**
**धनकबन्धुहन् धर्षयानयम्॥९१॥**

**कृपा टीका**—स्वर्णलता के समान कान्तिलता वाली सीताजी की शोभन स्पृहा के आश्रय तथा वन को प्रिय माननेवाले संतों के सुखदाता, कुबेर के भ्राता रावण को मारने वाले प्रभु श्रीराम! अपनी आत्मीयता बढ़ाइये और हमारी अनीति को नष्ट कर दीजिये॥९१॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**एकाक्षरी श्लोक**—(अब श्लोक संख्या ९२, ९३ तथा ९४ में कृतिकार की पराक्ऋतम्भराप्रज्ञाप्रसूत वर्णच्छटा द्रष्टव्य है)

**कः कौ के केक केकाकः काक काका ककः ककः।**
**काकः काकः ककः काकः कुकाकः काकक: कुकः॥९२॥**

**अन्वयः —**

केक का काकः काक काका ककः ककः काकः काकः ककःकाकः कुकाकः काकक: कुकः कौ के कः इत्यन्वयः।

**अर्थस्तु —**

के ब्रह्मणि ब्रह्माण्डे वा कं सुखं यस्मात् सः केकः संज्ञात्वात् सप्तम्या अलुक् स एव केकः ब्रह्माण्डसुखदाता, केकाकः केका मयूरवाणी तस्यां कं सुखं यस्य सः केकाकः ब्रह्माण्डसुखदातापि मयूरवाण्यां सुखमनुभवति इति भावः। स एव भगवान रामः बाल्यकाले काक काका ककः काकस्य भुशुण्डिनः काका वाणी तस्याः यत् कं सुखं तदेव कं आनन्दः यस्य सः काक काका ककः भुशुण्डिनः वाणीसुखमेव आनन्दं मन्यते इति भावः, स एव ककः केषु लोकेषु कं सुखं यस्मात् तादृशः "जो आनन्द सिन्धु सुखरासी" इत्यादिषु स्पष्टम्। स च काकः कं सुखं अकं दुःखं वनवासात्मकं यस्य सः काकः अर्थात् वनवासदुःखमपि सुखं मन्यते। एवंविधः काकः काकः प्रशस्तः काकभुशुण्डि अस्ति अस्य सः काकः प्रशस्तकाकवान् इति भावः। ककः क ब्रह्मा तस्यापि कं सुखं यस्मात् स च काकः कायति भक्तान् आह्वयति सः काकः काकपक्षधरो वा भगवान् रामः, कुः पृथ्वी तस्यां कं सुखं जन्मभूमितया यस्याः सा कुका सीता तस्यां कः आनन्दः यस्य सः कुकाकः सीताराम भगवान्, काकक: काकं भुशुण्डिनं कायति कुकः कुः भोगं कं मोक्षसुखं यस्मात् एवंविधः कः परब्रह्म परमात्मा भगवान् श्रीरामः कौ पृथिव्यां के साकेतलोके अयोध्यायां विराजते इति श्लोकार्थः॥

**विशेष**—(यहाँ श्रीपरशुराम जी ने तीन एकाक्षरी श्लोकों से भगवान श्रीराम की स्तुति की है, यह 'श्रीभार्गवराघवीय" के रचयिता महाकवि की भगवन्निष्ठा, शास्त्र के प्रगल्भ पाण्डित्य और काव्यकला की लोकोत्तर चातुरी का परिचायक है।

**कृपा टीका**—परशुरामजी कहते हैं हे परमात्मन्! के अर्थात् ब्रह्म एवं ब्रह्माण्ड को जिनसे क अर्थात् सुख प्राप्त होता है, वही केक ब्रह्मा और ब्रह्माण्ड के सुखदाता आप, केकाकः अर्थात् मयूरवाणी में सुख का अनुभव करते हुये भी, काक काका

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ककः अर्थात् भुशुण्डि जी की काका अर्थात् कौए की वाणी के क सुख को क अपना आनन्द मान लेते हैं। जबकि ककः आपसे ही क अर्थात् संपूर्ण लोकों को क अर्थात् आनन्द मिलता रहता है। वही आप बनवास के अक अर्थात् दुःख को भी क अर्थात् सुख मान लेते हैं। इस प्रकार काकः अर्थात् भुषुण्डि जी का स्मरण नहीं भूलते, और लीलाओं में उनका स्मरण रखते हैं। ककः अर्थात् ब्रह्मा जी के सुखदाता, काकः अर्थात् वनवासियों को अपने पास बुलाने वाले, तात्पर्य यह है कि ब्रह्माजी को भी आनन्द देने वाले प्रभु उनसे संतुष्ट न होकर काकपक्षधर रामचन्द्र कोल किरातों को बुलाकर उनसे खेलते हैं। कुकाकः कु अर्थात् पृथ्वी में जन्मभूमि होने से जिन्हें कः अर्थात् सुख की प्राप्ति होती है, उन सीताजी को कुका कहा जाता है, उन कुका सीताजी में जिन्हें क अर्थात् आनन्द की अनुभूति होती है ऐसे श्रीराम को कुकाकः कहा जाता है। अर्थात् बहिरंग रूप में कोल किरातों से खेलते हुए भी अन्तरंग लीला में प्रभु सीताजी में ही आनन्द का अनुभव करते हैं। काककः काक अर्थात् भुषुण्डिजी को बुलाने वाले और कुकः भुक्ति और मुक्ति के दाता ऐसे कः सुखस्वरूप श्रीरामचन्द्र भगवान कौ पृथ्वी पर, के अर्थात् साकेतलोक में समानरूप से विराज रहे हैं।

श्लोक का भावार्थ इस प्रकार समझना चाहिए कि–ब्रह्म एवं ब्रह्माण्डों को सुख देकर भी राजभवन में मयूरवाणी सुनकर भी प्रभु उतने प्रसन्न नहीं होते, जितने आँगन में खेलते हुये काकभुषुण्डिजी की कौवे की कर्कश वाणी सुनकर प्रसन्न होते हैं। लोकों को आनन्द देकर भी भुषुण्डिजी को साथ रखकर बनवास के दुःख को सुख मान लेते हैं। वनवासी भक्तों को बुलाकर खेलते हुए अंतरंग लीला में सीताजी के साथ विहार करते हुए भी परम अंतरंग परिस्थिति में भुषुण्डि जी को ही बुलाकर सुखी होते हैं। ऐसे आनन्दस्वरूप श्रीराम चित्रकूट अयोध्या एवं साकेतलोक में समानरूप से विराजते हैं॥९२॥

**काक काक कका काक कुकाकाक ककाकक।**
**कुकका काक का काक कौका काक कुकाकक॥९३॥**

**श्लोकार्थः** — काकः जयन्तः तस्य के शिरसि अकं दुःखं दण्डदानेन यस्मात् सः काककाकः जयन्त दण्डदाता तत् सम्बुद्धौ हे काककाक! जयन्तनिग्रहकारिन्! प्रभो! कक आकआक इति पदच्छेदः केषु जीवेषु कः आनन्दः यस्मात् सः ककः तत्

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

सम्बुद्धौ हे कक! जीवानन्ददायिन्! आक आक आगच्छ आगच्छ। कुकाकाक कुकाक सीतासुखदाता आक आगच्छ कक ब्रह्माण्डसुखहेतो क परमात्मन्! आक आगच्छ, कौ पृथिव्यां भोगे कः आनन्दः येषां ते कुकाः तान् कायति अभिमुखी करोति इति कुकाकः। तत्सम्बुद्धौ हे कुकक! आक आक काकाक, कः ब्रह्मा अ विष्णुः तयोः कः आनन्दः यस्मात् सः का काकः। कौकाकाक, कौ पृथिव्यां कः आनन्दः यस्मात् सः कौकः। तत् सम्बुद्धौ हे कौक! आक आक कुत्सितं काकं जयन्तं परित्राणाय कायति। अथवा कुकाकेन जयन्तेन कीयते सम्बोध्यते रक्षरक्षेति सः कुकाककः तत् सम्बुद्धौ हे कुकाकाकक! आक आगच्छत्।

**अब द्वितीय एकाक्षरी श्लोक की व्याख्या की जाती है। यह श्लोक जयन्त प्रकरण परक है।**

**कृपा टीका**—परशुराम जी कहते हैं—काक अर्थात् जयन्त के क अर्थात् मस्तक पर अक जिससे दुःख की प्राप्ति हुई है, उन श्रीरामको काककाक कहा गया। ककाकाक इस पद में कक-आक-आक यह पदच्छेद है, आङ्उपसर्ग सहित दमनार्थक अक धातु का लोट्लकार मध्यमपुरुष एकवचन में आक रूप बनता है, इसका अर्थ है आगच्छ अर्थात् आओ, इसी की आवृत्ति की गई है। क अर्थात् ब्रह्माण्ड में क जिससे सुख प्राप्त होता है उन भगवान को कक कहा गया है। अब वाक्य इस प्रकार बना—हे काककाक-हे कक आक-आक। सन्धि करके काककाकककाकाक यह शब्दखण्ड बन गया। इसका सरलार्थ इस प्रकार हुआ—

हे जयंत के मस्तकप्रान्त पर दण्डविधान करनेवाले ब्रह्माण्ड सुखदाता श्रीराम! आइये आइये।

कुकाक आक अर्थात् हे सीताभिराम श्रीराम आइये, क्योंकि सीताजी को कुका कहा गया है, उनको क अर्थात् आनंद भगवान राम से मिलता है। इसीलिये श्रीराम कुकाक कहे गये हैं। कुकाक आक अर्थात् सीताभिराम श्रीराम! आइये। ककाकक शब्द में कक आक क यह पदच्छेद समझना चाहिये। क परमेश्वर का वाचक है, इसका अन्वय होगा—हे कक! क आक हे ब्रह्माण्डसुखदाता भगवान आइये। भोग में जिन्हें आनंद आता है उन जीवों को कुक कहा गया है, उनको जो अपने चरणों में बुलाये वह परमात्मा कुकक है। कुकक आक आक हे विषयियों

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

को चरण में बुलाने वाले प्रभु आइये आइये। काक आक क यानी ब्रह्मा, अ यानी विष्णु उनको भी क माने सुख देनेवाले अर्थात् हे श्रीराम! आक अर्थात् आइये। कौकं हे पृथ्वी पर सुख देनेवाले परमेश्वर! आक आक आइये आइये। कुत्सित काक जयन्त के द्वारा जिनकी स्तुति की जाती है, ऐसे हे कुकाकक! आइये। अर्थात् जयंत के शिर पर दण्ड देनेवाले, ब्रह्माण्ड के सुखदाता आइये आइये। सीताभिराम राम! आइये। ब्रह्मा को सुख देने वाले आइये। विषयियों को भी अपने चरण में बुलाने वाले, ब्रह्माविष्णु को सुख देने वाले, पृथ्वी पर आनन्द वितरण करनेवाले, जयंत के द्वारा स्तुत प्रभु मेरे पास पधारिये।।९३।।

**लोलालाली लला लोल लीला लाला लला लल।**
**लेले लेल ललालील लाल लौलील लालल।।९४।।**

**श्लोकार्थः —** लोलाश्चञ्चलाः अलाः अलकाः तेषां आलि समूहः तैः ललः विलसितः स च अलोलः अचञ्चलः इति लोला लाली लला लोलः। अलां अक्षराणां समूहः आलं तं लाति वक्ति इति आललं मुखं लीलायां शिशुकेलौ लालया तृष्णाजलेन अलं व्याप्तं आलाललं मुखं यस्य सः लीला लाला ललाललः। पुनः लेला शिशुक्रीडाधनुर्भंगरूपा तया इलायाः पृथिव्यां ईं लक्ष्मीं सीतारूपां लाति स्वीकरोति सः। लेलेलेलः, सीतापतिः स एव ललानां विलासिनां अलीं लुनाति इति ललालीलः तत् सम्बुद्धौ हे ललालील! हे लाल! राघवः लौलीं जीवचञ्चलतां लुनाति नाशयति तत् सम्बुध्धौ हे लोलील! लालल अतिशयेन विलस।

**कृपा टीका—**अब ल पर एकाक्षरी श्लोक प्रस्तुत किया जाता है—लोल अर्थात् चंचल अल अर्थात् केशों के आलि अर्थात् समूहों से लल अर्थात् सुशोभित, अलोल अर्थात् सौम्य जो चंचल केशों के समूहों से सुशोभित होकर भी सौम्य हैं। अल् अर्थात् अक्षरों के समूहों को आल कहते हैं, उसे जो लाता है अर्थात् बोलता है उस मुख को आलल कहते हैं। बाल लीला में लाला अर्थात् लार से अलअर्थात् जिसका आलाल मुखमंडल व्याप्त है, उन श्रीराम को लीलालालालललालल कहते हैं। लेला अर्थात् धनुर्भङ्ग लीला में इला अर्थात् पृथ्वी की ई अर्थात् महालक्ष्मी सीताजी को ल अर्थात् स्वीकार करनेवाले, हे सीतापते! ललालील, हे विलासियों के समूह को नष्ट करने वाले, हे लाल! कौसल्याललन लौलील जीव की चंचलता को नष्ट करने वाले, लालल हमारे हृदय में निरंन्तर विलास कीजिये।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

अर्थात् चंचल केशों के समूहों से सुशोभित होकर भी निश्चंचल, बाललीला में लार से सुशोभित मुखवाले, धनुर्भङ्ग लीला में पृथ्वी की लक्ष्मीरूप सीताजी को स्वीकार करने वाले विलासी समूह को नष्ट करने वाले, जीव की चंचलता दूर करने वाले, हे कौसल्याललन राघव! आप सदैव शोभित रहिये॥९४॥

**अयोध्यायाः देशं क्षपितभयलेशं हि कलयन्**
**खलानां संदोहं कलितबहुमोहं विकलयन्।**
**जनानामानन्दं बिबुधकुलवृन्दं तरलयन्**
**विधुन्वन् संदेहं स इह रघुचन्द्रो विजयते॥९५॥**

**कृपा टीका**—भव की गंध से दूर, अयोध्या प्रांत को स्वीकार करते हुए भवमोह से युक्त, खलों के समूहों को विकल करते हुए भक्तों के आनन्द और देव समूहों को तरलित अर्थात् प्रसन्न करते हुए, संदेह को नष्ट करते हुए भगवान श्रीरामचन्द्र की विजय हो॥९५॥ शिखरिणी छन्द।

**क्वचित् कौसल्यायाः स्तनमभिपिबन् पीडितखलः**
**लसल्लालालोलं मृदुतम कपोलं हि कलयन्।**
**दधत् वासः पीतं कलित रजसा दिव्य विभवो**
**भवं धुन्वन् देवः स इह रघुचन्द्रो विजयते॥९६॥**

**कृपा टीका**—कहीं पर दुष्टदमनकारी प्रभु! कौसल्याजी का पयपान करते हुये, लार से चंचल, सुन्दर कपोल, पीताम्बर धारण करते हुये, धूलि धूसरित, भवभय नष्ट करनेवाले श्रीराम मेरे ध्यान में विराज रहे हैं॥९६॥ शिखरिणी छन्द।

**वपुर्दर्शं दर्शं नवजलदनीलं रघुपते**
**र्गुणान् गायं गायं हृतसुमनसो भक्तसुखदान्।**
**रसं पायं पायं प्रभुचरितकुंभस्रुतमहम्**
**मनो धायं धायं सुखमनुभवेयं हरिपदे॥९७॥**

**कृपा टीका**—नवीन बादल के समान सुंदर श्रीराम के शरीर को देख देखकर मनोहर प्रभु के गुण गा गाकर प्रभु के चरित्र घट से प्रकट रस का पान कर करके प्रभु के चरणों में मन लगाकर अब मैं परशुराम अवतार का दायित्व प्रभु को सौंपकर भक्तोचित सुख का अनुभव करूँ॥९७॥ शिखरिणी छन्द।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

जय जगत्त्रयकारणकारण
जय जनार्दन वारणवारण।
जय महीप महीपतितारण
जय जया वनिजासुखधारण॥९८॥

कृपा टीका—हे तीनों लोकों के कारणों के कारण! आपकी जय हो। गजेन्द्र को भी आनन्द देने वाले और मनमतंग को नियंत्रित करने वाले जनार्दन! आपकी जय हो। महाराज जनक और दशरथ को संसार सागर से तारने वाले आपकी जय हो। सीताजी के सुख के आधार आपकी जय हो॥९८॥ द्रुतविलम्बित छन्द।

मुनिसुतप्रणयार्चितविग्रहो विहितभूतलविग्रहविग्रहः।
निहतकण्टकदिव्यपरिग्रहो जयति तापसतापससंग्रहः॥९९॥

कृपा टीका—मुनिकुमारों के द्वारा प्रेमपूर्वक पूजित शरीर वाले, पृथ्वी के कष्ट देने वालों को कष्ट देने वाले, कंटक रहित, और अलौकिक पत्नी से संपन्न, तपस्वियों के भी तपस्वी वसिष्ठ–विश्वामित्र का संग्रह करनेवाले प्रभु श्रीराम की जय हो॥९९॥ द्रुतविलम्बित छन्द।

शीलं चरित्रेण मुदा बिभर्ति
स्नेहं च वाचा वपुषा पिपर्ति।
महानुभावो रघुनन्दनो यो
जयत्यसौ भारतभाग्यहंसः॥१००॥

कृपा टीका—जो अपने चरित्र से शील को धारण करते हैं और जो वाणी और शरीर से स्नेह का पोषण करते हैं, ऐसे महापराक्रमी भारतभाग्य के सूर्य इन रघुनन्दन भगवान श्रीराम की जय हो॥१००॥ उपजाति छन्द।

इत्थं शुभे भार्गवराघवीये
भव्ये महाकाव्य उदारवृत्ते।
सर्गोऽस्तु विंशः कविराम
भद्राचार्य प्रणीते सततं श्रियै नः॥१०१॥

कृपा टीका—इस प्रकार परमकल्याणकारी भव्य अनेक उदार छंदों में निबद्ध

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

महाकवि रामभद्राचार्य द्वारा प्रणीत "भार्गवराघवीयम्" नामक महाकाव्य में प्रस्तुत यह बीसवां सर्ग हम लोगों की प्रपत्ति-संपत्ति और श्री का सदा संवर्धन करता रहे॥१०१॥ उपजाति छन्द।

**इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामिरामभद्राचार्यप्रणीते श्रीभार्गवराघवीयेमहाकाव्ये "भार्गवकृतराघवस्तवनम्" नाम विंशः सर्गः॥**

**॥श्रीराघवः शन्तनोतु॥**

इस प्रकार धर्मचक्रवर्ती महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामी रामभद्राचार्य द्वारा प्रणीत "श्रीभार्गवराघवीयम्" नामक महाकाव्य में "भार्गवकृतराघवस्तवन" नामक बीसवाँ सर्ग संपन्न हुआ॥

॥श्रीराघवः शन्तनोतु॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

॥ श्रीमद्राघवो विजयते ॥

# अथैकविंशः सर्गः

**रामः प्रभु परशुराममथ स्वधर्मे प्रेम्णा नियुज्य भगवांश्च महेन्द्रशैलम्।**
**प्रस्थाप्य पार्वणशशीव चरित्रचान्द्री मर्यादया धवलयंस्त्रिजगद्विरेजे॥१॥**

**कृपा टीका**—स्तुति के पश्चात् भगवान प्रभु श्रीराम परशुरामजी को उनके अपने धर्म में नियुक्त करके, तथा उन्हें प्रेमपूर्वक महेन्द्र पर्वत पर भेजकर अपने चरित्र की मर्यादारूप चंदिका से त्रिलोकी को धवल बनाते हुए, पूर्णिमा के चन्द्र के समान सुशोभित हुए॥१॥ यहाँ से श्लोक ४ तक वसन्ततिलका छन्द है।

**श्रीराघवो विपुलबाहुविशालसिन्धौ**
**सम्मज्ज्य शाङ्करधनुः सनृपालदर्पम्।**
**जेगीयमान चरितस्त्रिजगत्प्रवीरै**
**रङ्गात् स लक्ष्मणयुतो गुरुमभ्यगच्छत्॥२॥**

**कृपा टीका**—अपने भुजारूप विशाल महासागर में राजाओं के अहंकार के सहित शिवधनुष को डुबाकर तीनों लोकों के वीरों द्वारा बार बार गाये जाते हुए चरित्र से युक्त श्रीराघवसरकार लक्ष्मण जी के साथ रंगमंच से गुरुदेव के पास आये॥२॥

**तं गाधिजो विजयिनं जनकात्मजाया**
**जैत्रश्रिया जलजया जयमालयाढ्यम्।**
**प्रीतं प्रतीक्ष्य पदयोः पतितं प्रसन्नः**
**प्रांशुं प्रतीतमनसा परिषष्वजेऽसौ॥३॥**

**कृपा टीका**—महर्षि विश्वामित्र जी ने भी श्रीजानकीरूप विजयलक्ष्मी एवं कमलमयी जयमाला से युक्त, अत्यंत संतुष्ट चरणों पर पड़े हुए, विशाल व्यक्तित्व संपन्न श्रीराम को प्रसन्न होकर विश्वस्त मन से आलिंगन किया॥३॥

**नेदुर्दिवो विबुधदुन्दुंभयस्तदानीम्**
**पेतुश्च पुष्पनिकराणि सुरोत्तमानाम्।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

गन्धर्वकिन्नरमुनीश्वरदेवदेव्यो
वैवाहिकं जगुरधोक्षजजानकीयम्॥४॥

**कृपा टीका**—उस समय आकाश में नगाड़े बज उठे, देवताओं द्वारा पुष्पों के गुच्छे बरसाये गये। तथा गंधर्व-किन्नर मुनिगण देवताओं और देववधुओं ने श्रीसीताराम के वैवाहिक गीत गाये॥४॥

अद्य सीताराममङ्गलं सुगेयं हे शुभे।
एतद्गीते मनो निर्मलं निधेयं हे शुभे॥
दामिनीपयोधरसुवर्णवर्णिनी वरौ
कोटि-कोटिरतिरतिरञ्जनमनोहरौ
नेत्रयुग्ममत्र सफलं प्रदेयं हे शुभे॥
अद्य सीताराममङ्गलंसुगेयं हे शुभे॥
अत्र मिथिलाधिराजजनकोमहारथः
तत्र चक्रवर्तिमहाराज श्रीदशरथः
समधियोरिह कुशलं सुधेयं हे शुभे॥
अद्य सीताराममङ्गलं सुगेयं हे शुभे॥
मिथिलाकोसलयोः सनातनसमागमः
सीतारामयोर्मधुरपरिणयो मनोरमः
भावं-भावं भवं विमलं विधेयं हे शुभे॥
अद्य सीताराममङ्गलं सुगेयं हे शुभे॥
परब्रह्मभूतौ सीताराघवौ सतां गती
रामभद्राचार्यप्राणाप्रियौ दिव्यदम्पती
मनोगृहं महो मण्डपं प्रणेयं हे शुभे।
अद्य सीताराममङ्गलं सुगेयं हे शुभे॥५॥

**कृपा टीका**—हे शुभे! आज सीतारामजी का विाह मंगल गाने योग्य है और इस गीत में हमें अपना निर्मल मन लगा देना चाहिये। ये दुल्हन तथा दूल्हा श्रीराम जी विजली तथा बादल के समान वर्णवाले हैं, ये करोड़ों रति और काम के समान सुंदर हैं, इन्हीं की झाँकी झाँककर अपने दोनों नेत्रों को निर्मल बना लो।

इधर अर्थात् कन्यापक्ष से मिथिलाधिपति महाराज जनकजी और उधर

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वर पक्ष से चक्रवर्ती महाराज दशरथ जी समधी हैं। यहाँ इन दोनों समधियों के कार्यकौशल का ध्यान करना चाहिये।

मिथिला और अवध का सम्बन्ध सनातन है, और श्रीसीताराम जी का विवाह भी बहुत मनोरम है। इसका बार बार चिन्तन करके हमें अपना जीवन विमल बना लेना चाहिये।

श्री सीताराम जी सज्जनों के एकमात्र गन्तव्य, साक्षात् परब्रह्म और महाकवि रामभद्राचार्य के प्राणप्रिय अलौकिक दम्पती हैं। इन दोनों के श्यामंगौर तेज से जगमगाते हुए उसी को विवाह मण्डप बना लेना चाहिये॥५॥ यहाँ गीतक छन्द है।

दिव्येषु वाद्यनिकरेषु नदत्सु सत्सु
वर्षत्सु मञ्जु कुसुमेषु सुरोत्तमेषु।
गायत्सु गीतमथ किं पुरुषेषु विश्वा
मित्रं ननाम जनकः कनकाङ्गदाङ्गः॥६॥

**कृपा टीका**—दिव्य वाद्यों के बजते रहने पर देवताओं के पुष्पवर्षन करते समय किन्नरों के मंगलगीत गाने की बेला में ही स्वर्णजटित केयूरवाले जनकजी ने विश्वामित्र जी को प्रणाम किया॥६॥ यहाँ से श्लोक ३० तक वसन्ततिलका छन्द है।

त्वत्संप्रसादमधिगम्य रघुप्रवीरो
भङ्क्त्वा धनुर्भुजसमर्पितवीर्यशुल्कः।
रामस्त्रिलोकविजयी विजितारिवर्गः
सीताकरग्रहणयोग्यतयाभिपन्नः ॥७॥

**कृपा टीका**—हे प्रभो! आपका प्रसाद प्राप्त करके ही रघुवीर श्रीरामचन्द्र शिवधनुष तोड़कर अपने भुजा से पराक्रम शुल्क समर्पित करके शत्रुवर्ग को पराजित किये हुए, त्रिलोकविजयी बनकर अब सीताजी के विवाह की योग्यता से सम्पन्न हो चुके हैं॥७॥

तदेव भूमितनयां कनकाङ्गयष्टिम्
रामाय रम्यवपुषे प्रददामि हृष्टः।
कन्याललामकमनीयमयोनिजं मे
श्रीराघवोऽर्हति रमामिव शार्ङ्गपाणिः॥८॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—इसलिये हे देव! मैं स्वर्ण के समान शरीर कान्तिवाली पृथ्वीपुत्री सीता को रमणीय विग्रह वाले श्रीराम को प्रसन्नतापूर्वक अर्पित कर रहा हूँ। जैसे लक्ष्मीजी के लिये भगवान नारायण योग्य थे उसी प्रकार मेरी अयोनिजा सुंदर कन्यारत्न के लिये श्रीराम ही योग्य हैं॥८॥

**इत्थं निशम्य वचनं जनकस्य राज्ञो**
**रामं स्पृशन् नवलनीरददेहकान्तिम्।**
**संश्राव्य हर्षकलितं निजगाद विश्वा-**
**मित्रो गिरं गिरिशचापविभङ्गहृष्टः॥९॥**

**कृपा टीका**—इस प्रकार महाराजजनक का वचन सुनकर शिवधनुष के भंग से प्रसन्न विश्वामित्र जी नवीन मेघ के समान कान्तिवाले श्रीराम को सहलाते हुये, हर्षपूर्ण हृदय से सबको सुनाते हुये वाणी बोले॥९॥

**भग्ने धनुष्यभवदेव शुभो विवाहः**
**सीतारघूत्तम वधू वरवर्णनीयः।**
**कार्यस्तथापि निमिभानुकुलानुरूपो**
**वैवाहिको विधिरयं व्यवहारविज्ञैः॥१०॥**

**कृपा टीका**—यद्यपि धनुष टूटने पर श्रीसीता जैसी वधू एवं श्रीराम जैसे अद्वितीय वर के कारण वर्णनीय यह शुभ विवाह संपन्न होचुका है, तथापि निमि तथा सूर्यकुल के अनुरूप व्यावहारिक विधि विधान दोनों कुल के व्यवहारवेत्ताओं को करना ही चाहिये॥१०॥

**नो लोकतो जनक भिद्यत एव शास्त्रम्**
**शास्त्रातिगो न खलु तिष्ठति जीवलोकः।**
**विद्वान् द्वयोः शुभसमन्वयमेव लोके**
**प्रेयः परत्र च पुमांल्लभते विमोक्षम्॥११॥**

**कृपा टीका**—हे जनक! शास्त्र कभी लोक से अलग नहीं रहते और शास्त्र का उल्लंघन करके लोक भी नहीं रह सकता। इसीलिये दोनों का समन्वय जानने वाला ही लोक में सुख और परलोक में मोक्ष प्राप्त कर लेता है॥११॥

**गच्छन्तु ते चरवरा नगरीमयोध्या**
**मानीयतां दशरथो नृपचक्रवर्ती।**

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तत् सन्निधौ भवतु लोकहिताय भव्यो**
**वैवाहिको विधिरयं रघुवीरभौम्योः।।१२।।**

**कृपा टीका**—अब आपके दूत अयोध्या जायें और महाराज दशरथ को वरयात्रा सहित बुलाया जाये। उनकी सन्निधि में ही संसार के हित के लिये रघुवीर श्रीराम एवं भूमितनया श्रीसीताजी का विवाह संपन्न हो।।१२।।

**रामस्य नित्य गृहिणीं नृप विद्धि सीताम्**
**सीतापतिश्च सततं रघुनाथ एव।**
**जीवान् स्वधर्ममिह शिक्षयितुं जगत्या**
**माविर्बभूवतुरुभाविव भानुकान्ती।।१३।।**

**कृपा टीका**—हे महाराज! सीताजी को श्रीराम की नित्यधर्मपत्नी समझिये और श्रीराम भी सीताजी के शाश्वत पति हैं। ये दिव्यदंपती जीवजगत को शिक्षा देने के लिये सूर्य प्रभा की भाँति अभिन्न होते हुए भी प्रकट हुये हैं।।१३।।

**यो रामचन्द्रभगवान् स किलास्ति सीता**
**या जानकी भगवती स च रामचन्द्रः।**
**नैवानयोर्नरपते किल कोऽपि भेदो**
**वागर्थयोरिव तथा च तरङ्गवीच्योः।।१४।।**

**कृपा टीका**—हे महाराज! जो रामचन्द्र भगवान हैं वही सीताजी हैं और जो सीता भगवती हैं, वही श्रीराम हैं। हे महाराज! जिस प्रकार वाणी–अर्थ–जल–तरंग में भेद नहीं होता, उसी प्रकार श्रीसीतारामजी में कोई भेद नहीं है।।१४।।

**आकर्ण्य कौशिकवचो जनकःप्रसन्नो**
**दूतान् व्यसर्जयदथो नगरीमयोध्याम्।**
**ते तत्र शीघ्रगतयो ददृशुः क्षमायाः**
**सीमन्तमौलिमिव कोसलराजधानीम्।।१५।।**

**कृपा टीका**—विश्वामित्र का वचन सुनकर प्रसन्न जनक जी ने अपने दूत अयोध्या भेजे। उन शीघ्रगामी दूतों ने कोसल जनपद में जाकर पृथ्वी के मुकुटमणि की भाँति श्रीअवध के दर्शन किये।।१५।।

**गत्वाऽथ तूर्णगतयो नगरीं निरीक्ष्य**
**प्रीता निमज्य विधिपुत्रसुतापयस्सु।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

प्रेमप्रवृद्धहृदयासरयूपयोभि-
र्विध्वंसितस्वजननीपयउत्तरर्णाः ॥१६॥

**कृपा टीका**—तीव्रगति से जाकर अयोध्या के दर्शन करके ब्रह्मपुत्र वसिष्ठ जी की पुत्री सरयू में स्नान करके, प्रेम से परिपूर्ण हृदय वाले दूतों ने सरयू के जल से अपनी माँ के दूध के उत्तर ऋण को भी समाप्त कर लिया, अर्थात् मातृऋण से मुक्त हो गये॥१६॥

गत्वा नृपेन्द्रभवनं प्रतिहारपाभ्या
मावेदिता नृपतिसंसदमापुरीड्याम्।
जुष्टाञ्च भूसुरवरैः ननु मन्त्रिवर्गै
र्दिव्यां पुरन्दरसभामिव देवलोके॥१७॥

**कृपा टीका**—महाराज के भवन जाकर द्वारपालों द्वारा राजभवन में प्रवेश करके ब्राह्मणों और मंत्रियों से युक्त इन्द्रलोक में विराजमान सुधर्मा सभा की भाँति दशरथ जी की राजसभा देखी॥१७॥

सर्वोच्चमासनगतं ददृशुर्वसिष्ठम्
राज्ञाप्यधः स्थितिमता परिसेव्यमानम्।
स्पृष्ट्वा पदं मुकुटकोटिलसल्ललाम-
श्रीसद्गुरुं रघुकुलस्य महार्घ्यबोधम्॥१८॥

**कृपा टीका**—जनक जी के दूतों ने सर्वोच्च आसन पर विराजमान उन ब्रह्मर्षि वसिष्ठ जी के दर्शन किये, जिनके चरणों को करोड़ों राजमुकुटों के रत्न से सुशोभित मुकुट द्वारा स्पर्श करके उनसे निम्न आसन पर बैठे महाराज दशरथ भी सेवा कर रहे हैं और जो बहुमूल्य ज्ञान से संपन्न हैं॥१८॥

दृष्ट्वा विधातृतनयं महसा ज्वलन्तम्
साक्षाद् बृहस्पतिसहस्रसमं च बुद्ध्या।
नेमुश्चरा नमितमूर्धगलत्प्रसून-
निष्यन्दमञ्जुमकरन्दमिलत्पदाब्जम्॥१९॥

**कृपा टीका**—इस प्रकार तेज से जाज्वल्यमान, बुद्धि में सैंकड़ों बृहस्पतियों के समान दिव्यबुद्धि संपन्न ब्रह्मपुत्र वसिष्ठ जी को देखकर जनक के दूतों ने झुकने

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

के कारण शिर के पुष्पों के मकरन्द से चरणों को सुशोभित करते हुये प्रणाम किया॥१९॥

धन्यो ह्यसौ सकलभूपतिचक्रवर्ती
स्थित्वा ह्यधोऽध इममर्चतिगौरवाद्यत्।
शीलेन नूनममुनैव गृहेऽस्य खेलत्
पूर्णाद्वयं शिशुतनु प्रचकास्ति नूनम्॥२०॥

**कृपा टीका**—ये राजचक्रवर्ती दशरथ जी धन्य हैं, जो स्वयं नीचे बैठकर वसिष्ठजी की सेवा कर रहे हैं। निश्चय ही इनके इसी शील के कारण बाल शरीर धारण करके पूर्ण परब्रह्म खेलते हुए विराज रहे हैं॥२०॥

यद्योगिभिर्मुनिवरैस्तपसा न लभ्यं
यन्नेतिं नेति वचसा श्रुतयो गृणन्ति।
तद् ब्रह्म कोसलपतेर्भवने विराजद्
रामाभिधं नयनगोचरतामुपेतम्॥२१॥

**कृपा टीका**—जिसे योगी और मुनिजन तप से नहीं प्राप्त कर पाते, जिसे श्रुतियाँ नेति नेति कहकर गाती हैं। वही परब्रह्म महाराज दशरथ के भवन में श्रीरामनाम से विराजते हुए सभी को दर्शन दे रहे हैं॥२९॥

दृष्ट्वा प्रणम्य नृपतिं पुरुहूतमित्रम्
तस्मै ददुश्चरवराः प्रभुलग्नपत्रीम्।
सौमित्रिराघवशिवाक्षर भाग्यभाजम्
हस्ताक्षरैर्विलसितां बुधकौशिकस्य॥२२॥

**कृपा टीका**—इन्द्र के मित्र महाराज को प्रणाम करके श्रीरामलक्ष्मण के कुशलाक्षरों के सौभाग्य से युक्त, एवं विश्वामित्र के हस्ताक्षर से अंकित श्रीराम के विवाह की लग्नपत्रिका सौंप दी॥२२॥

हे भानुवंशसरसीरुहचित्रभानो
हे शक्रमित्र वसुधाधिपचक्रवर्तिन्।
धन्योऽसि राममुपलभ्य मरीचिपुत्रो
विष्णुं यथा निखिललोकमनोऽभिरामम्॥२३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—हे सूर्यवंशकमल के सूर्य, हे इन्द्र के मित्र, हे महाराज चक्रवर्तिन्! आप श्रीराम को प्राप्त कर, विष्णु जी को प्राप्त करके कश्यप की भाँति धन्य हो गये हैं॥२३॥

**त्वत्प्रेषितौ मुनिवरेण समं कुमारौ**
**त्रात्वा मखं समरमर्दितकौणपेन्द्रौ।**
**मार्गे च गौतमवधूं पदपद्मधूल्या**
**कृत्वा विधूतरजसं मिथिलामुपेतौ॥२४॥**

**कृपा टीका**—आपके द्वारा विश्वामित्र जी के साथ भेजे हुए दोनों कुमार युद्ध में राक्षसों को मारकर विश्वामित्र के यज्ञ की रक्षा करके मार्ग में अपने चरणकमल के पराग से गौतमपत्नी अहल्या को पापमुक्त करके मिथिला पधार चुके हैं॥२४॥

**यद्देवदानवनरासुरनागयक्षैः**
**शक्यञ्च नो चलयितुं तिलमाप्युदारम्।**
**तच्छम्भुचापमधुनैव तवार्यरामः**
**प्रेम्णा बभञ्ज गजराज इवाब्जखण्डम्॥२५॥**

**कृपा टीका**—हे महाराज! जो देव-दानव-मनुष्य-असुर-नाग तथा यक्षों द्वारा तिलमात्र भी नहीं हिलाया जा सका था, उसी शिवधनुष को आपके श्रीराम ने कमलनाल को गजराज की भाँति प्रेम से तोड़ दिया॥२५॥

**श्रुत्वा गतोऽथ भृगुनायक आत्तरोषो**
**दृष्ट्वैव ते तनयमस्तसमस्तदर्पः।**
**चापं प्रदाय स गतः सुरराजशैलम्**
**रामे समर्प्य रुचिमर्क इव प्रदीपः॥२६॥**

**कृपा टीका**—शिवधनुष भंग सुनकर कुपित होकर परशुराम जी आये और आपके पुत्र श्रीराम को देखकर उनका सारा अहंकार चूर हो गया। प्रकाश को सूर्यनारायण के लिये दीप की भाँति श्रीराम में अपने को धनुष के साथ समर्पित करके परशुराम जी महेन्द्र पर्वत पर चले गये॥२६॥

**तज्जानकी जनकवैभववैजयन्ती दत्तेह नो नृपतिना तव राघवाय।**
**तस्मिन् सुमङ्गलमहे सहबन्धुवर्गैस्त्वद्दर्शनं समभिवाञ्छति मैथिलेन्द्रः॥२७॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—इसलिये हमारे महाराज ने आपके पुत्र राघव सरकार को जनककुलके वैभव की पताकारूप श्रीसीताजी को समर्पित कर दिया है। उस मंगल महोत्सव में महाराज जनक बन्धुबान्धवों सहित आपका दर्शन चाहते हैं॥२७॥

**सम्बन्धिनौ समधियौ मिथिलानरेश श्रीकोसलेश इति वां मिथिलानिवासाः।**
**नित्यं दिदृक्षव इवैत्य मनोज्ञधाम्नि त्वत्पादपद्मरजसा नगरं पुनीहि॥२८॥**

**कृपा टीका**—मिथिला नरेश राजा जनक और कोसल नरेश आप दशरथ, दोनों ही समानबुद्धिवाले समधी हैं, इसीलिये मिथिला धाम में मैथिलजन आप दोनों का दर्शन चाहते हैं। आप अपने चरणकमल के पराग से मिथिला नगर को पवित्र कीजिये॥२८॥

**इत्येवमादि लिखितां जनकस्य पत्रीं प्राप्तामिवातिथिमयीं विहिताभिषेकाम्।**
**नेत्राम्बुभिर्नृपतिमौलिमणिः पठंस्तां रामोपलब्धिमिव वक्षसि संजुगोप॥२९॥**

**कृपा टीका**—इस प्रकार समाचारों से लिखित घर में आये अतिथि की भाँति जनकराज की पत्रिका को अपने आँसुओं से सींचकर उसे प्रेमपूर्वक पढ़ते हुए श्रीरामजी की प्राप्ति के समान अपने हृदय में लगाकर छिपा लिया॥२९॥

**पृष्ट्वा गुरुं समनुरञ्जितमित्रवर्गः प्रीतात्मना दशरथो भरतानुशासी।**
**शत्रुघ्नसूचितपदो पदवीं गृहस्य प्रीतो दिनेश इव भूपवरः प्रपेदे॥३०॥**

**कृपा टीका**—गुरुदेव से आज्ञा लेकर मित्रवर्ग को प्रसन्न करके भरतजी को बारात की तैयारी की सूचना देकर प्रसन्न मन से शत्रुघ्न द्वारा संकेत पाकर राजा दशरथ अस्ताचल के सूर्य की भाँति अपने भवन को पधारे॥३०॥

**कौसल्यामथ कैकयीं नरपतिः प्रीतस्सुमित्रां तथा**
**सानन्दं समतूतुषत् प्रणिगदन्मेघो मयूरीरिव।**
**सार्धं बन्धुजनेन पूज्यगुरुणा प्रस्थाप्य सेनां नृपः**
**साटोपं वरयात्रिभिः परिवृतो रामं दिदृक्षुर्ययौ॥३१॥**

**कृपा टीका**—इसके अनंतर मयूरियों को मेघ की भाँति कौसल्या, कैकेयी तथा सुमित्रा कोश्रीराम की कुशलता से प्रसन्न करके, बन्धुबान्धवों एवं गुरुजनों के साथ सेना को प्रस्थापित कर, प्रेम से वरयात्रियों के साथ श्रीराम के दर्शनार्थ राजा दशरथ मिथिला पधारे॥३१॥ शार्दूलविक्रीडित छन्द।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तमाव्रजन्तं नरदेवदेवं प्रत्युद्ययौ बन्धुगणैः समेतः।**
**सम्पूजयामास यथोपचारं सम्बन्धिनं स्वं प्रणयाद् विदेहः॥३२॥**

**कृपा टीका**—इस प्रकार चक्रवर्ती नरेन्द्र को आते देख बन्धुजनों के साथ महाराज जनक ने उनकी आगवानी कीऔर समधी का प्रेमपूर्वक सम्मान किया॥३२॥

यहाँ से श्लोक ३६ तक उपजाति छन्द है।

**निवेद्य सुस्वागतमात्मबन्धौ सीरध्वजो राजनि रामताते।**
**जगाद जैत्रो जनवासमेनं सहानुगं सत्कृतिजागरूकः॥३३॥**

**कृपा टीका**—सम्मान में सावधान महाराज जनक ने श्रीराम के पिता अपने समधी दशरथ जी के प्रति सुस्वागत की औपचारिकता पूर्ण करके बरातियों के साथ उन्हें सुन्दर जनवास दिया॥३३॥

**अथोपकार्यासु निदिश्य वासं जन्यान् प्रभुप्रेमनिधानधन्यान्।**
**सुवासशैयासनभोजनाद्यैः सम्भावयामास भवार्चिताङ्घ्रिः॥३४॥**

**कृपा टीका**—इसके अनंतर संसार से पूजित चरण जनकजी ने श्रीराम प्रेमरूप धन से धन्य सारे बरातियों को सुंदर शिविरों में निवास देकर वस्त्र-शैया-आसन-भोजनादि उपचारों से बहुत सम्मानित किया॥३४॥

**आयोध्यकास्वातिघनोपमानं रामं पिनाकक्षतिलब्धमानम्।**
**दिदृक्षवश्चातकतुल्यशीलाः क्षणं क्षणं कल्पसमं स्म निन्युः॥३५॥**

**कृपा टीका**—धनुर्भंग से सम्मानित स्वाति के बादल के समान श्रीराम को निहारने के इच्छुक अयोध्यावासी प्यासे चातक के समान एक एक क्षण कल्प के समान बिता रहे थे॥३५॥

**ततोऽवधार्यागतमात्मनीनप्रेमामृताम्भोधिमनिन्द्यशीलम् ।**
**सबन्धुमित्रं पितरं पितृज्ञः पिनाकभित् सानुज आजगाम॥३६॥**

**कृपा टीका**—इसके अनंतर पिता की मनोदशा जानने वाले, पिनाकभेत्ता भगवान श्रीराम अपने प्रेमामृत के महासागर, निन्दारहित शीलवाले पिता दशरथ को बंधुबांधवों सहित आया समझकर उनके दर्शनार्थ लक्ष्मण जी के सहित पधारे॥३६॥

**गुरुं पुरस्कृत्य गुरुस्त्रिलोक्या गुरुप्रभावो गुरुदर्शनार्थी।**
**गुरूपमानो गुरुभारहारी गुरूकरिष्यन् गुरुमभ्यगच्छत्॥३७॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—गुरुदेव विश्वामित्र को आगे करके तीनों लोकों के पिता विशाल प्रभाव वाले, बृहस्पति के समान बुद्धिमान, पृथ्वीके विशाल भार को हरने वाले, पिताश्री के दर्शन के इच्छुक भगवान श्रीराम पिता को गौरव देने के लिये उनके पास आये॥३७॥ उपेन्द्रवज्रा छन्द।

**तमाव्रजन्तं नयनाभिरामं रामं विभाव्रीडितकोटिकामम्।**
**त्रैमातुरेणानुगतं तमालनीलाम्बुधोद्गीत सुशीललीलम्॥३८॥**

यहाँ से आगे सात श्लोकों का कुलिक अन्वय है।

**कृपा टीका**—नेत्रों को आनन्द देनेवाले, अपनी शोभा से करोड़ों कामों को लज्जित करने वाले, त्रैमातुर अर्थात् कौसल्या सुमित्रा एवं सीताजी को माता मानने वाले लक्ष्मण द्वारा अनुगत विद्वानों द्वारा गाये हुए सुंदर चरित्र और लीला से युक्त नीले वर्ण वाले॥३८॥ यहाँ से श्लोक ७६ तक उपजाति छन्द है।

**नवीन राजीवदृशोरपाङ्गशोणश्रिया मण्डितमञ्जुलास्यम्।**
**विडम्बयन्तं शरदिन्दुलक्ष्मीं समुल्लसत् कल्पतरुप्रवालाम्॥३९॥**

**कृपा टीका**—नये लाल कमल जैसे नेत्रों के कोणभाग की लाल शोभा से सुशोभित, मधुर मुखवाले, कल्पवृक्ष के पल्लव से युक्त शरदकालीन चन्द्रमा की शोभा को अनुकृत करते हुए॥३९॥

**हेरम्बशुण्डोपमजानुलम्बिहेरम्बतातार्चितमञ्जुबाहुम्।**
**हेमाम्बरं हेममयोपवीतं हेमाद्रिकन्यातनयाभिरामम्॥४०॥**

**कृपा टीका**—गणेश जी के सूँड के समान घुटने तक लटकती हुई, गणेशजी के पिता शिवजी से पूजित सुन्दर बाहुदंड वाले, स्वर्ण के समान वस्त्र धारण करने वाले, स्वर्णिम उपवीत वाले एवं सुमेरुपुत्री मेनाजी की प्रियपुत्री पार्वतीजी को आनन्द देनेवाले॥४०॥

**शार्ङ्गं धनुर्वामकरे दधानं दक्षे वहन्तं निशितं शरञ्च।**
**भ्राम्यन्तमुर्व्यामिव नीलमभ्रं महेन्द्रचापाप्तविभं जगद्भ्रम्॥४१॥**

**कृपा टीका**—बायें हाथ में शार्ङ्ग तथा दाहिने हाथ में तीखा बाण धारण करते हुये, जगत के आश्रय, इन्द्रधनुष के साथ पृथ्वी पर रमण करते हुए, नीले मेघ के समान॥४१॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**श्रीवत्सलक्ष्माणमनन्तसत्त्वं गम्भीरनाभिं त्रिवलीमनोज्ञम्।**
**भग्नेशचापं तपनप्रतापं तापं हरन्तं हरिमम्बुजाक्षम्॥४२॥**

**कृपा टीका**—श्रीवत्सलांछनधारी, असीम पराक्रम वाले, गंभीर नाभिवाले उदर पर बनी हुई तीन रेखाओं से सुंदर, शिव धनुष तोड़नेवाले, सूर्य के समान प्रताप वाले, संसार का ताप दूर करनेवाले कमलनेत्र ऐसे श्रीहरि को महाराज दशरथ ने देखा॥४२॥

**कृपासुधावर्षणवीक्षणाभ्यां सञ्जीवयन्तं ननु जीवलोकम्।**
**स्वमुत्तमश्लोकमशोकमोको विश्राणयिष्यन्तमिवात्मविद्भ्यः॥४३॥**

**कृपा टीका**—कृपासुधा का वर्षण करनेवाले नेत्रों द्वारा जीवलोक को जीवन दान देते हुए, आत्मवेत्ताओं को शोकरहित उत्तमश्लोकरूप अपने को ही मानो निवासरूप में अर्पित करते हुए से॥४३॥

**मन्दस्मितं मत्तगजेन्द्रमाद्यत् गतिं गतिज्ञं जगतामधीशम्।**
**स दूरतो वीक्ष्य दुरन्तवीर्यं जगाम तृप्तिं न नराधिराजः॥४४॥**

**कृपा टीका**—मन्द मुस्कान वाले, मत्त गजेन्द्र की चालवाले, संसार की गतियों के वेत्ता, अविनाशी, पराक्रमी ऐसे श्रीराम को दूर से ही आते देख महाराज तृप्त नहीं हुए॥४४॥

**सलक्ष्मणो लक्ष्मणपूर्वजन्मा पपात पुत्रः पितृपादपद्मे।**
**उत्थाप्य दोर्भ्यां परिषष्वजेऽसौ राजेव रङ्कः समवाप्य रत्नम्॥४५॥**

**कृपा टीका**—लक्ष्मण के बड़े भ्राता पुत्रश्रेष्ठ श्रीराम, लक्ष्मण जी के सहित पिताजी के चरणकमल में पड़ गये और महाराज दशरथ ने रत्न को प्राप्त कर दरिद्र की भाँति श्रीराम को भुजाओं से उठाकर आलिङ्गन किया॥४५॥

**जिघ्रन्निवासीन्ननु नासिकाभ्यां पिबन्निवाभून्निजलोचनाभ्याम्।**
**श्लिष्यन्निवास्तैष वृहद्भुजाभ्यां हृदा स गूहन्निव वेदगुह्यम्॥४६॥**

**कृपा टीका**—महाराज दशरथ नासिका से मानो सूँघ रहे थे, नेत्रों से मानो पी रहे थे, विशाल भुजाओं से मानो आलिंगन कर रहे थे। और वेद के लिये भी गोपनीय भगवान श्रीराम को चक्रवर्ती जी मानो हृदय में छुपा रहे थे॥४६॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**पुनर्वशिष्ठप्रमुखान् मुनीन्द्रान् नत्वा सभूत्वा द्विजमङ्गलाढ्यः।**
**रराज राजीवदृगुन्नतास्यः शक्रो यथा गीष्पतिमङ्गलाशीः॥४७॥**

**कृपा टीका**—इसके अनंतर राजीवलोचन ऊँचीं नासिकावाले भगवान श्रीराम वसिष्ठ आदि मुनियों को प्रणाम करके बृहस्पति के मंगल आशीर्वाद से युक्त इन्द्र के समान, ब्राह्मणों के आशीर्वाद से सुशोभित हुए॥४७॥

**मित्राणि बन्धुं भरतं रिपुघ्नं तौ द्वौ मिलित्वा चलिताधराक्षौ।**
**परस्परालापविलासनर्मै र्विजह्रतुर्वै हसितौ हसद्भिः॥४८॥**

**कृपा टीका**—अपने मित्रों और भरत शत्रुघ्न को मिलकर अधर और नेत्रों को चलाते हुए परस्पर के हास विलास से युक्त हँसते हुए मित्रमण्डली के साथ विहार करने लगे॥४८॥

**राजा पुनश्चापि सुतैश्चतुर्भिर्वृतो विरेजे मिथिलानगर्याम्।**
**प्रपन्न ईशं विषयाद् विरक्तो यथा विमुक्तेश्च चतुः प्रकारैः॥४९॥**

**कृपा टीका**—महाराज दशरथ अपने चारों पुत्रों के साथ मिथिला नगरी में उसी प्रकार सुशोभित हुए जैसे भगवत्प्रपन्न चारों मुक्तियों के साथ सुशोभित होता है॥४९॥

**विशेष**—सालोक्य, सामीप्य, सारूप्य और सार्ष्टि चार मुक्तियाँ होती हैं।

**अथागमद्दिव्यविवाहलग्नं सुमङ्गलं मङ्गलवासराढ्यम्।**
**स मार्गशीर्षामलपंचमीकं हेमन्तहेमायितशालिशालि॥५०॥**

**कृपा टीका**—इसके अनंतर हेमन्त ऋतु के कारण धान की खेती को पीली बनाता हुआ, मंगल दिन मार्गशीर्ष शुक्ल पंचमी से युक्त परम पावन विवाह का मुहूर्त आ गया॥५०॥

**शुभावहं सोत्तरफाल्गुनीकं गोधूलिवेलार्जितपुण्यवेलम्।**
**भानूत्तरं धर्ममयोत्तरं यत् ज्योतिर्विदः पुण्यतमं वदन्ति॥५१॥**

**कृपा टीका**—वह विवाहलग्न कल्याणकारी उत्तरफाल्गुनी नक्षत्र से युक्त, गोधूलि वेलाके द्वारा पुण्यमयी वेला के संग्रह से युक्त तथा सूर्यनारायण के उत्तरायणकाल से युक्त था। जिसे ज्योतिषीलोग बहुत श्रेष्ठ मुहूर्त मानते हैं॥५१॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**तदेव मौहूर्तिकमब्जयोनिः संप्रेषयामास स नारदेन।**
**विदेहराजस्य यदेवपूर्वमजीगणन् वै गणकप्रधानाः॥५२॥**

**कृपा टीका**—जिस मुहूर्त को जनकजी के ज्योतिषियों ने निश्चित किया था, उस मुहूर्त को ब्रह्माजी ने नारदजी से भिजवाया॥५२॥

**प्रमाणितं पद्मभुवैव साक्षात् प्रामाणिकत्त्वं किल मैथिलानाम्।**
**ज्योतिर्विदामित्यवधार्य वृत्तं मोदं ययुः पौरजनाः प्रकामम्॥५३॥**

**कृपा टीका**—ब्रह्माजी ने ही मिथिला के ज्योतिषियों की प्रामाणिकता को प्रमाणित कर दिया है, यह जानकर मिथिलावासी बहुत प्रसन्न हुए॥५३॥

**ततश्शतानन्दमुनिः क्षितीशं विज्ञापयामास विवाहलग्नम्।**
**स सीरकेतूरघुवंशकेतुमामन्त्रयिष्यन् सचिवान् जगाद॥५४॥**

**कृपा टीका**—इसके अनंतर शतानन्दजी ने महाराज जनक से विवाह का मुहूर्त कहा। अनंतर श्री दशरथ जी को आमंत्रित करते हुए जनकजी मंत्रियों से बोले॥५४॥

**क्षिप्रं शतानन्दवचोऽनुसारं सम्पाद्यतां माङ्गलिकं समस्तम्।**
**सामात्यमित्रः पुरुहूतमित्र आमन्त्र्यतां येन विवाहकार्ये॥५५॥**

**कृपा टीका**—शतानन्द जी के कथनानुसार शीघ्र ही सभी मांगलिक व्यवस्थायें कर ली जायें। जिससे वैवाहिक विधि संपन्न करने के लिये बन्धुबान्धवों सहित इन्द्र के मित्र दशरथ जी को आमन्त्रित किया जा सके॥५५॥

**तथेति सम्पादितपूर्वमेतत् कृतं कृतज्ञाः कथयाम्बभूवुः।**
**बभौ विदेहोऽपि विशिष्टदेहो वैवाहिके कर्मणि कन्यकानाम्॥५६॥**

**कृपा टीका**—महाराज की आज्ञा सुनकर कृतज्ञ मंत्रियों ने महाराज से निवेदन किया कि यह सब पहले ही किया जा चुका है। कन्या की विवाह विधि के समय विदेह अर्थात् देहरहित जनकजी भी विशिष्ट देह वाले हो गये॥५६॥

**सीताञ्च सौभाग्यजुषः पुरन्ध्र्यः शृङ्गारयामासुरनिन्द्यरूपाम्।**
**किं भूषणैर्भूषणभूषणाङ्ग्या भाग्योत्सवो ह्येष विभूषणानाम्॥५७॥**

**कृपा टीका**—सुन्दर रूपवाली सीताजी को सुहागिनी नारियों ने सजाया। जिनके अंग भूषणों को भी विभूषित करते हैं उनका आभूषण क्या? यह तो अलंकारों का ही भाग्योत्सव है॥५७॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**संस्नाप्य सीतां विधिवद् विधिज्ञा आकाशगङ्गापयसा शुभेन।**
**लिम्पन्त्य ये नां सुभगाङ्गरागै वैंवाहिकं मङ्गलमभ्यगायन्॥५८॥**

**कृपा टीका**—विधि को जानने वाली सुवासिनियों ने आकाशगंगा के दिव्य जल से सीताजी को स्नान कराकर हल्दी आदि मांगलिक अंगरागों से उनका लेप करते हुए विवाह के मंगलगीत गाए॥५८॥

**नील्या च शाट्या लसितामलाङ्गी बभौ चिरं मैथिलिराजकन्या।**
**विद्युन्मयी काऽपि नवीनयोषा व्योम्नीव नीलाम्बुदवर्धिताभा॥५९॥**

**कृपा टीका**—नीली साड़ी से सुशोभित निर्मल अङ्गवाली मिथिलाधिराज की कन्या सीताजी आकाश में नीले बादल से सुशोभित बिज़ली से ही निर्मित अलौकिक ललना जैसी सुशोभित हुईं॥५९॥

**सीमन्तिनी काचन चारुशीला सीमन्तमस्याः समलञ्चकार।**
**श्यामालकं नन्दनचारुपुष्पैर्व्योमेवनक्षत्रदिनेशचन्द्रैः॥६०॥**

**कृपा टीका**—किसी एक चारुशीला नामक श्रेष्ठ सखी ने सीताजी के नीले बालों वाले जूड़े को तारा सूर्य और चन्द्रमा से युक्त आकाश के ही समान नन्दनवन के पुष्पों से सजाया॥६०॥

**तस्या ललाटे विललासविन्दुरिन्दाविवेन्दुः किल कोसलेन्दुः।**
**विभूषणीभूय निजस्वरूपैः किं भूषयामास विभूषणीयाम्॥६१॥**

**कृपा टीका**—सीताजी के दिव्यमस्तक पर चन्द्रमा में चन्द्रमा के समान बिन्दी बहुत सुशोभित हुई। क्या स्वयं को आभूषण बनाकर कोसलचन्द्र भगवान ने ही सजाने योग्य सीताजी को तो नहीं सजा दिया?॥६१॥

**सुकुण्डले चन्द्रमुखीकपोलौ कामं स्पृशन्तौ परिरेजतुःस्म।**
**मनोजकेतू स्मरजीवनार्थं सुधामिवेन्दुं परियाचमानौ॥६२॥**

**कृपा टीका**—चन्द्रमुखी सीताजी के कपोलों को स्पर्श करते हुये दोनों कुण्डल बहुत शोभित हो रहे हैं, मानों कामदेव को जीवित करने के लिये उसकी पताका में लगी हुई दोनों मछली चन्द्रमा से अमृत की याचना कर रही हों॥६२॥

**ताम्बूलवीट्याऽधरपल्लवोऽस्या विरोचयामास मुखं सुमुख्याः।**
**शङ्केऽमृतांशुस्तनयं पृथिव्याः स्वाङ्कं समारोप्य ललास लक्ष्म्या॥६३॥**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—सुमुखी सीताजी के मुख को पान की बीड़े से युक्त पल्लव के समान लाल अधर ने अधिक सजा दिया। मुझे तो शंका होती है कि साक्षात् चन्द्रमा ही पृथ्वीपुत्र मंगल को गोद में बिठाकर सुशोभित हो रहे थे॥६३॥

**तन्नासिका निन्दितकीरचञ्चुर्मुक्तालता सम्महितोत्तरोष्ठा।**
**शुक्रस्य भौमेन कृतात्मसन्धेरिवैन्दुबिम्बां सुषमां सुपोष॥६४॥**

**कृपा टीका**—तोते की चोंच को लजाने वाली मोती की बेसर (नथ) से युक्त उत्तरोष्ठ को सुशोभित करने वाली सीताजी की नासिका मंगल के साथ संधि किये हुये शुक्र की चन्द्रबिम्ब के साथ अलौकिक शोभा का पोष कर रही थी॥६४॥

**तस्या दृशौ कामगवी सगव्यक्लृप्ताज्जनैरञ्जयति स्म तन्वी।**
**नूनं दृशो राघवनीलिमैव लब्धाञ्जनः खञ्जनमप्यहार्षीत्॥६५॥**

**कृपा टीका**—सीताजी के नेत्रों को सखी ने कामधेनु के घी से बने हुए अंजन से रंजित किया। निश्चित ही नेत्रों में विराजमान श्रीराघव की नीलिमा ही अंजन बनकर खंजन की शोभा को भी चुरा रही थी॥६५॥

**केयूरमंजू किल भौमिबाहू समुल्लसत् कञ्जकरो च तस्याः।**
**सरोजदण्डाविव नाथलाभाद् विकासमाप्ताविति मे वितर्कः॥६६॥**

**कृपा टीका**—कमलकर से सुशोभित सीताजी के बाहु केयूर से सुशोभित हो रहे थे। दो कमलदण्ड ही मानो सूर्य की प्राप्ति से विकसित हो रहे थे, ऐसा मेरा वितर्क है॥६६॥

**वक्षोरुहोत्सेध विकृष्टपट्टं वक्षःप्रियालिङ्गनलाभयोग्यम्।**
**पाटीरचर्चार्चितचित्रपत्रं हारैः सुहारैः कलयाम्बभूव॥६७॥**

**कृपा टीका**—स्तनों की विशालता से खिंचे हुए कंचुकवाला प्रिय के आलिंगन के लाभ के लिए योग्य सीताजी का वक्षस्थल चंदन से बने हुये चित्रपत्रों एवं अमृतवर्षी हारों से बहुत सुन्दर लग रहा था॥६७॥

**पदाम्बुजे नूपुरसिञ्जनाढ्ये आलक्तकैः रञ्जयति स्म काचित्।**
**मुनीन्द्रसन्मानसहंसकेलिभूमी विदित्वा प्रचुचुम्ब भौम्याः॥६८॥**

**कृपा टीका**—नूपुर की ध्वनि से युक्त सीताजी के चरणकमल को किसी सखीने महावर से सजाया और कोई सखी सीताजी के चरणों को मुनिजनों के मनमानस के हंसों का क्रीडास्थल समझकर चूमने लगी॥६८॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

इत्थं जगत्या जननीप्रियार्थं विवाहवेषा वरवर्णिनीड्या।
वधूर्बुभूषन्त्यथ ताटकारेः प्रतीक्ष्यमाणास्त विवाहवेलाम्॥६९॥

**कृपा टीका**—इस प्रकार विवाहसंबंधी वेष धारण की हुई, श्रेष्ठ दुलहन जगज्जननी सीताजी प्रभु श्रीराम के लिये उन्हीं ताटकाशत्रु प्रभु की वधू बनने की इच्छा करती हुई विवाहवेला की प्रतीक्षा कर रही थीं॥६९॥

रामोऽपि संक्लृप्तविवाहवेषो मनोरमः केकिगलावदातः।
मनुष्यमौलिर्धृतमञ्जुमौलिर्द्वारं विदेहस्य ययौ सबन्धुः॥७०॥

**कृपा टीका**—विवाह वेष धारण किये हुए, मयूर के गले के समान श्यामल सुन्दर श्रीराम भी मनुष्यवेषधारी होकर भी सिर पर मौर धारण करके विवाहार्थ भाइयों सहित जनकजी के द्वार पर पधारे॥७०॥

उच्चैःश्रवोंऽशं गतिलुब्धहंसं हयं समारुह्य हयास्यकल्पम्।
हरिर्हयग्रीवनिजावतारं स्मरन्महाविष्णुरथप्रतस्थे॥७१॥

**कृपा टीका**—उच्चैः श्रवा के वंश में उत्पन्न हुये, गति से राजहंस को लुब्ध कररने वाले हयग्रीव के समान घोड़े पर आरुढ़ होकर अपने हयग्रीवावतार का स्मरण करते हुए श्रीहरि महाविष्णु श्रीराम ने जनकराज के द्वार पर प्रस्थान किया॥७१॥

स श्यामकर्णः शशिशुभ्रवर्णो लसल्ललामामितचित्रवर्णः।
मुरारिजायाग्रभवोत्तमर्णो मारस्तु यस्यास्तकिलाधर्मणः॥७२॥

**कृपा टीका**—वह घोड़ा श्यामकर्ण चन्द्रमा के समान शुभ्रवर्ण वाला एवं अनेक सुन्दर रत्नों से सुशोभित था। मुरारि श्रीविष्णु की जाया अर्थात् पत्नीके भी बड़े भ्राता उच्चैःश्रवा का भी वह उत्तमर्ण था, अंर्थात् उच्चैः श्रवाको इस घोड़े से ही शोभा मिली थी। और स्वयं कामदेव भी जिसका अधमेर्ण था॥ अर्थात् इसी से काम ने भी शोभा पाई थी॥७२॥

सुवर्णरश्मिप्रभयातिमात्रं रराज सीता वरवाजिवक्त्रम्।
रामप्रियत्वात् किमु रश्मिमाली संलालयन्नास्त करैस्तदास्यम्॥७३॥

**कृपा टीका**—सोने की लगाम की शोभा से श्रीराम के घोड़े का मुख बहुत सुन्दर लग रहा था। क्या इसे श्रीराम का प्रिय मानकर स्वयं सूर्यनारायण ही लगाम बनकर घोड़े का मुख दुलार तो नहीं रहे थे?॥७३॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**स वै चतुष्पादतुरगश्चतुष्पादविभूतिनाथं विवहन् विरेजे।**
**नभो यथा पत्रनिषण्णलोलद्रोलम्बमम्भोजमिवातिशुभ्रः॥७४॥**

**कृपा टीका**—वह चार चरणोंवाला घोड़ा चतुष्पाद विभूति के ईश्वर, आकाश जैसे प्रभु को ले जाता हुआ ऐसा लग रहा था, जैसे भ्रमरों से व्याप्त पत्रवाले कमल को ढोता हुआ आकाश हो॥७४॥

**पृष्ठेन विभ्रत् स हरिं हरीशो हरन् हरीणां सुषमां हरीष्टः।**
**हरीष्टवाही हरिहृष्टरोमा हरिर्हरेर्यानजवं जिगाय॥७५॥**

**कृपा टीका**—वह श्रेष्ठ घोड़ा हरि अर्थात् चन्द्र इन्द्र आदि की शोभा को चुराता हुआ, हरि श्रीराम का प्रेमभाजन बना हुआ हरि अर्थात् भगवान विष्णु को भी इष्ट महाविष्णु श्रीराम को ढोता हुआ हरि अर्थात् अनुकूल वायु के कारण रोमांचित वह हयग्रीवरूप घोड़ा नारायण के यान गरुड़ के भी वेग को जीत रहा था॥७५॥

**तं वर्त्मनि प्रेक्ष्य वरं वरेण्यं नीलाम्बुदश्यामलकम्रकान्तिम्।**
**प्रहृष्टचित्ता मिथिलापुरन्ध्र्यो जगुः कलं गीतमगीतपूर्वम्॥७६॥**

**कृपा टीका**—नीले बादल के समान सुन्दर कान्तिवाले, श्रेष्ठवर श्रीराम को मार्ग में देखकर मिथिला की नारियों ने प्रसन्न होकर पहले कभी न गाया हुआ गीत गाया॥७६॥

**पश्य सखि पश्य सखि मिथिलामण्डपमभि**
**जनकजामाता रामो याति हे।**
**अश्वमधिरूढो रूढो दशरथमनोरथं**
**गूढोऽप्येष महाविष्णुर्भाति हे**
**पश्य सखि.....॥**
**मणिमयमञ्जुमौलिं सुरकुलमौलिरेष**
**वहन्मृदुमस्तके विभाति हे,**
**जानकीग्रहीतुकामो मौलिमिषतोऽप्यकामो**
**भक्तिमिव बिभ्रत् प्रतिभाति हे**
**इममवलोक्य लोकविस्मृतिर्भवति सखि**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

आनन्दो मनसि न सम्माति हे
चेतो मे चकोर इव रामचन्द्र मुखचन्द्र
छविसुधां पिबन्न जहाति हे।
वरयात्रिभिः समेतो जानकीवरणहेतोः
शनैःशनैः पदं विदधाति हे
रामभद्राचार्यगुरुवेदमन्त्रं श्रावं श्रावं
भक्तिमयदक्षिणां ददाति हे।
पश्य सखि पश्य सखि.....।।७७।।

**कृपा टीका**—हे सखि! देखो मिथिला के मण्डप में जनक जी के जामाता श्रीराम जा रहे हैं। घोड़े तथा दशरथ जी के मन पर आरूढ़ हुए छिपे होने पर भी ये महाविष्णु ही लग रहे हैं। देखो तो सही देवताओं के मुकुटमौलि होकर भी सुन्दर मस्तक पर मणिजटित मौर धारण करते हुए बहुत सुन्दर लग रहे हैं। अकाम होने पर भी जानकीजी को ग्रहण करने की इच्छा से मौर धारण करने के बहाने ये शिर पर भक्ति को ही धारण कर रहे हैं। हे सखि! इन्हें देखकर लोक का विस्मरण हो रहा है और मन में आनन्द नहीं समा रहा है। मेरा चित्त श्रीरामचन्द्र की मुखचन्द्रसुधा को पीता हुआ चकोर की भाँति उसे नहीं छोड़ रहा है।

देखो बरातियों के साथ जानकीजी के विवाह के लिये धीरे धीरे चरण रख रहे हैं। रामभद्राचार्यरूप गुरुदेव के वेदमन्त्र को सुनकर उन्हें भक्तिमय दक्षिणा दे रहे हैं।।७७।। यह गीतिका छन्द है।

अथागतं मङ्गलमञ्जुमूर्तिं सभ्रातृतातं जनपारिजातम्।
सम्पूज्य पूज्यं विधिवद् विदेहो रामं मुदा मण्डपमानिनाय।।७८।।

**कृपा टीका**—इस प्रकार भक्तों के पारिजात मंगलमूर्ति श्रीराम जी को आया हुआ देखकर महाराज जनक उन पूजनीय प्रभु की विधिवत् पूजा करके प्रेमपूर्वक मण्डप में ले आये।।७८।। यहाँ से श्लोक ९१ तक उपजाति छन्द है।

तिष्ठत्सु सर्वेषु शुभासनेषु प्रसन्नचित्तो नृपचक्रवर्ती।।
गवामसंख्यानि ददौ द्विजेभ्यो निसर्गसिद्धा हि सतां विसर्गाः।।७९।।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—सबके यथोचित आसन पर बैठ जाने पर महाराज दशरथजी ने असंख्य गोदान किया। क्योंकि सन्तों का त्याग निसर्गसिद्ध होता है॥७९॥

**वेद्यां समाधिष्ठितपावकायां कुर्वत्सु विप्रेषु च शान्तिपाठम्।**
**सीतां समानिन्युरथाभिरामं सख्यो विभां भानुमिवेशवेला॥८०॥**

**कृपा टीका**—वेदी पर अग्निदेव के प्रज्वलित होने पर ब्राह्मणों के शान्तिपाठ करते रहने पर सखियाँ सीताजी को श्रीराम के पास उसी प्रकार ले आयीं जैसे ब्रह्मवेला सूर्य के पास प्रभा को ले आती हैं॥८०॥

**उपस्थितां रामसमीप्यमीड्यां विवाहमङ्गल्यविभूषणाढ्याम्।**
**नेमुर्जनास्तामुपपारिजातं सुकल्पवल्लीमिव भूमिपुत्रीम्॥८१॥**

**कृपा टीका**—श्रीराम के समीप विराजमान वैवाहिक मंगल विभूषणों से सुशोभित पृथ्वीपुत्री सीताजी को लोगों ने कल्पवृक्ष के पास विराजमान कल्पलता के समान प्रणाम किया॥८१॥

**ततो वसिष्ठः प्रथितैर्मुनीन्द्रैः विधिं विवाहस्य विधातुमैच्छत्।**
**श्रीजानकीराघवयोरतीते कल्पे यथा पूर्वमकल्पयत् सः॥८२॥**

**कृपा टीका**—इसके अनंतर श्रेष्ठ मुनियों के साथ वसिष्ठ जी ने श्रीसीताराम जी के विवाह का प्रारंभ करने का मन बनाया। जिस प्रकार अतीत कल्पों में ब्रह्माजी ने श्री सीतारामजी के विधान की व्यवस्था की थी॥८२॥

**पूजा गणेशाम्बिकयोश्च ताभ्यां विधापिता शाश्वतदम्पतीभ्याम्।**
**नूनं श्रुतीनां विधयोविधीशे प्रकल्पिताः सार्थकतां भजन्ते॥८३॥**

**कृपा टीका**—इसके पश्चात् मुनियों के द्वारा इन आदर्श दंपती से गौरी गणेश की पूजा कराई गई निश्चित ही वेदों की विधियाँ भगवान के चरित्र में प्रयुक्त होकर सार्थक हो जाती हैं॥८३॥

**सूर्यः कुलाचारमथ प्रवक्तुं त्यक्त्वास्त शैलं पुर आविरासीत्।**
**तयोर्निशायामपि रामसीतावैवाहिके सर्वमिदं हि युक्तम्॥८४॥**

**कृपा टीका**—अपना कुलाचार कहने के लिये अस्ताचल को छोड़कर सूर्यनारायण सीताराम जी के समक्ष प्रकट हो गये। क्योंकि परमेश्वर के विवाह में सब कुछ संगत है॥८४॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

वेदा धृतब्राह्मणवर्यवेषाः सम्पादयन्ति स्म विवाहकृत्यम्।
मूर्तो हुताशोऽपि च रामसीताकराम्बुजोत्क्षिप्तहविर्विलुब्धः॥८५॥

**कृपा टीका**—वेद ब्राह्मणवेश धारण करके विवाह विधि करा रहे थे और अग्निदेव मूर्तिमान होकर श्रीराम सीताजी के करकमल से डाली हुई आहुति लोभपूर्वक ले रहे थे॥८५॥

देवाश्च सर्वे वरपक्षमेते समाश्रिता वै वरयात्रिरूपाः।
देव्यो विदेहाधिपनारिमिश्रा ददुर्ह्ययोध्यापतये सुगालीः॥८६॥

**कृपा टीका**—देवता बराती बनकर वरपक्ष में आ गये और देवियाँ जनकपुर की नारियों में मिलकर अयोध्यापति को गाली देने लगीं॥८६॥

ततो विदेहः सह धर्मपत्न्या पादौ पवित्रौ ननु ताटकारेः।
पापच्छिदौ गौतमधर्मपत्न्या ईशानहृतकञ्जशुभद्विरेफौ॥८७॥

प्रक्षाल्य सीतां भगवत् स्वरूपां ददौ स रामाय पुराणपुंसे।
अयोनिजां स्वां तनयां महीशः सिन्धुश्रियं पूर्वमिवाच्युताय॥८८॥

**कृपा टीका**—इसके अनंतर महाराज जनक ने गौतमपत्नीके पाप को नष्ट करने वाले, शंकर भगवान के हृदयकमल के भ्रमर, ताटकाशत्रु श्रीराम के पवित्र चरणों को विधिवत् प्रक्षालन करके भगवत्स्वरूपा अयोनिजा भगवती सीताजीको पुराणपुरुष श्रीरामचन्द्र जी के लिये उसी प्रकार सौंप दिया, जैसे चाक्षुष मन्वन्तर में समुद्र ने श्रीनारायण को लक्ष्मीजी को सौंपा था॥८७-८८॥

ततो दिवो दुन्दुभयः प्रणेदुः सुराः प्रसूनैर्ववृषुः प्रसन्नाः।
जगुः कलं किम्पुरुषाश्च देव्यो प्रीता अनृत्यन् सुरवारमुख्यः॥८९॥

**कृपा टीका**—इसके अनंतर आकाश में नगाड़े बज उठे, प्रसन्न देवताओं ने पुष्प बरषाए। किन्नरों ने गीत गाए और अप्सराओं ने नृत्य किया॥८९॥

लाजाहुतिं तौ ददतुः सलज्जौ धूमेन संरक्तविशालनेत्रौ।
संस्मारयन्तौ स्म जनैर्निशायां प्रभातराजीव विभामिवाद्यौ॥९०॥

**कृपा टीका**—अनंतर उन दिव्य दम्पती ने धुयें से लाल हुए अपने नेत्रों से रात्रि में भी दर्शक लोगों को प्रभातकालीन लालकमल का स्मरण कराते हुए लज्जापूर्वक लाजाहुति दी॥९०॥

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

ततश्च संग्रन्थितसूत्तरीयौ विधित्सितभ्रामरिकाविधानौ।
शम्पाब्दसाधारणतामुपेतौ व्यलोभयेतां भजतां दृशस्तौ॥९१॥

**कृपा टीका**—इसके पश्चात् चुनरी और दुपट्टे में गाँठ बाँधकर भ्रामरी (फेरा) विधान करने की इच्छा करते हुए, दोनों ने ही बिजली और बादल की शोभा को एक दूसरे में सन्निहित करके भजन करनेवालों के नेत्रों को लुभा लिया॥९१॥

ततः सीतादेव्या शुभशिरसि सिन्दूरमनघं
ददानः श्रीरामोऽलभत सुषमां कामपि विभुः।
भुजो भूम्नश्चन्द्रं रमयितुमलं पद्मरजसा
सुधालिप्सोः शोभामभजत भुजङ्गस्य भगवान्॥९२॥

**कृपा टीका**—इसके अनंतर सीतादेवी के शिर पर सिन्दूर देते हुए प्रभु श्रीराम ने एक अपूर्व शोभा पाई। प्रभु की भुजा ने कमल के पराग से चन्द्र को सुशोभित करते हुए अमृत के लोभी चन्द्र की सुषमा को प्राप्त किया॥९२॥ शिखरिणी छन्द।

वसिष्ठाज्ञावेकं कलकनकसिंहासनमथा
स्थितौ सीतारामौ विमलचपलानीरदनिभौ।
निरीक्ष्यैतद् द्वन्द्वं पुलकिततनुः श्रीदशरथो
मनोद्वन्द्वव्यूहं क्षपयितुमिवासीत् कृतमतिः॥९३॥

**कृपा टीका**—वसिष्ठजी की आज्ञा से एक ही स्वर्णसिंहासन पर बैठे हुए भगवान श्रीसीताराम ने बिजली और बादल की शोभा प्राप्त की। इन अपूर्वक दंपती को देखकर पुलकित शरीर श्रीदशरथ ने अपने मानसिक द्वन्द्वसमूह को नष्ट करने का मानों मन बना लिया॥९३॥ शिखरिणी छन्द।

प्राप्य श्रीभरतः कुशध्वजसुतां भेजे मुदं माण्डवीं
कान्तामाप्य च लक्ष्मणोऽप्युर्मिलां जातोऽनुरूपां सुखी।
शत्रुघ्नः श्रुतिकीर्तिमेत्य मुमुदे तान्वीक्ष्य ताभिर्नृपो
विद्याभिश्चतुरश्चितचतसृभिः प्रीतः पुमर्थानिव॥९४॥

**कृपा टीका**—इस प्रकार भरत जी माण्डवी को प्राप्त कर प्रसन्न हुए, लक्ष्मण जी अनुरूप उर्मिला को प्राप्त कर सुखी हुए, शत्रुघ्न जी श्रुतिकीर्ति को प्राप्त कर

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

मुदित हुये। और इन्हीं सीता-माण्डवी-उर्मिला-श्रुतिकीर्ति से युक्त श्रीराम-भरत-लक्ष्मण-शत्रुघ्न को प्राप्त कर दशरथ जी महाराज इतने प्रसन्न हुये मानो आन्वीक्षिकी-त्रयी-वार्ता-दण्डनीति के साथ मोक्ष-काम-धर्म-अर्थ को प्राप्त कर लिया हो॥९४॥ शार्दूलविक्रीडित छन्द।

**इत्थं लोकललामवीरसमितौ भङ्क्त्वा धनुः शाङ्करं**
**स्वस्मिंश्च प्रविलाप्य भार्गवमहः शम्पामिवाम्भोधरे।**
**श्रीसीतां परिणीय वेदविधिना दारान्वितैः सोदरैः**
**श्रीरामो मिथिलापुरात्प्रमुदितः प्रस्थातुमैच्छत् प्रभुः॥९५॥**

**कृपा टीका**—इस प्रकार लोकरत्न वीरों की सभा में शिवधनुष तोड़कर, बादल में बिजली के समान अपने में परशुराम जी के तेज को विलीन करके, वेद विधि से श्री सीताराजी को विवाहित करके, सपत्नीक तीनों भाइयों सहित प्रभु श्रीराम ने मिथिलापुरी से अयोध्या प्रस्थान करने की इच्छा की॥९५॥ शार्दूलविक्रीड़ित छन्द।

**श्रुत्वा स्वं गमनञ्च कोसलपुरे बाष्पाणि सीतादृशो**
**मुञ्चन्ती जनकेन पृष्टनिंगमा तातं जगादातुरा।**
**एकस्माज्जठरादुभौ प्रजनितौ पुत्रस्तथा कन्यका**
**पुत्रस्तिष्ठति तातसद्मनि कथं दूरं सुता प्रेष्यते॥९६॥**

**कृपा टीका**—अयोध्या को अपना गमन सुनकर एकान्त में नेत्रों से जल बहाती हुई सीताजीने जनक द्वारा कारण पूछने पर पिताश्री से आतुरतापूर्वक कहा, हे पिताश्री बेटा और बेटी एक ही कोख से जन्म लेते हैं परंतु बेटे को क्यों घर में रखा जाता है और बेटी को क्यों दूर भेज दिया जाता है?॥९६॥ शार्दूलविक्रीडित छन्द।

**अथजनकनृपालं सामभिः सान्त्वयित्वा**
**दुहितृविरतमूर्छच्चेतनं चित्स्वरूपः।**
**दशरथरथरूढः सीतया पूर्णकामः**
**शुचिसरितमयोध्यां जानकीजानिरागात्॥९७॥**

**कृपा टीका**—इसके अनन्तर बेटी के विरह से मूर्छित चेतना वाले, चीत्कार करते हुए जनक जी को सान्त्वना देकर सीताजी के साथ दशरथ जी के रथ पर आरूढ़ होकर पूर्णकाम सीतापति श्रीराम पवित्र सरयू नदी से युक्त श्रीअयोध्या में पधारे॥९७॥ यहाँ मालिनी छन्द है।

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कौसल्या किल कैकयेन्द्रतनया देवी सुमित्रा तथा**
**दृष्ट्वा स्वांस्तनयान् कलत्रसहितान् भेजुर्मुदं सुस्मिताः।**
**इत्थं द्वादशवार्षिकं स भगवान् नीत्वा पुरेऽनेहसं**
**भूमेर्भारजिहीर्षया वनमितो रामश्रिया बन्धुना।।९८।।**

**कृपा टीका**—कौसल्या कैकेयी एवं सुमित्रा वधुओं सहित पुत्रों को देखकर बहुत प्रसन्न हुईं। इस प्रकार अयोध्या में बारह वर्ष व्यतीत कर पृथ्वी का भार हरण करने की इच्छा से भगवान् श्रीराम ने सीता एवं लक्ष्मण जी के साथ वन को प्रस्थान किया।।९८।। यहाँ शार्दूलविक्रीडित छन्द है।

**निहत्य युधि रावणं जनकजाहृतिक्षोभितः**
**कपीन्द्रबलवान्विभुर्हनुमता चिरं भावितः।**
**पुनः पुरमुपागतस्त्रिभुवनेश्वरःश्रीहरि-**
**र्विराजति ससीतया प्रणतभार्गवो राघवः।।९९।।**

**कृपा टीका**—इस प्रकार सीताहरण से क्षुब्ध श्रीराम, युद्ध में रावण को मारकर सुग्रीव के बल से युक्त और हनुमान जी से सुशोभित होकर, पुनःअयोध्या को आकर, त्रिभुवन के साम्राज्य सिंहासन पर आसीन होकर, परशुराम जी द्वारा प्रणत, भगवान श्रीराम राघवेन्द्र सीताजी के सहित नित्य विराज रहे हैं।।९९।। यहाँ पृथ्वी छन्द है।

**एवं भार्गवराघवीयसुमहाकाव्यं मया निर्मितं**
**सीतारामपरायणेन पयसा षाण्मासिकानुष्ठितौ।**
**सर्गैर्भूषितमेकविंशतिमितैः श्लोकैश्च तादृक् शतैः**
**प्रेम्णा गायत रामभद्रलसिताचार्येण तुष्ट्यै हरेः।।१००।।**

**कृपा टीका**—इस प्रकार अपने छठे षाण्मासिक पयोव्रत अनुष्ठान में इक्कीस सर्गों और इक्कीस सौ इक्कीस श्लोकों से युक्त यह 'भार्गवराघवीय' नामक महाकाव्य मुझ स्वामी रामभद्राचार्य द्वारा रचा गया। आप सब भगवान की सन्तुष्टि के लिये इसे प्रेमपूर्वक गाएँ।।१००।। यहाँ शार्दूलविक्रीडित छन्द है।

**इत्थं शुभे भार्गवराघवीये**
**भव्ये महाकाव्य उदारवृत्ते।**
**ब्रह्माक्षिसर्गः कवि रामभद्रा-**
**चार्यप्रणीतेऽस्तु सतां श्रियै नः।।१०१।।**

CCO. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

**कृपा टीका**—इस प्रकार परमकलयाणकारी, भव्य अनेक उदार छन्दों में निबद्ध मुझ महाकवि रामभद्राचार्य द्वारा प्रणीत "श्रीभार्गवराघवीय" नामक महाकाव्य में प्रस्तुत इक्कीसवाँ सर्ग हम सन्तों की प्रपत्ति-संपत्ति और श्री का संवर्धन करे॥१०१॥ उपजाति छन्द।

**इति धर्मचक्रवर्ति महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामिरामभद्राचार्यप्रणीते श्रीभार्गवराघवीयेमहाकाव्ये 'श्रीराघवपरिणयो' नाम एकविंशः सर्गः॥**

**॥श्रीराघवः शन्तनोतु॥**

इस प्रकार धर्मचक्रवर्ती महामहोपाध्याय श्रीचित्रकूटतुलसीपीठाधीश्वर जगद्गुरु रामानन्दाचार्य महाकवि स्वामी रामभद्राचार्य द्वारा प्रणीत "श्रीभार्गवराघवीयम्" नामक महाकाव्य में 'श्रीराघवपरिणय' नामक इक्कीसवाँ सर्ग सम्पन्न हुआ॥

॥श्रीराघवः शन्तनोतु॥

CC0. Vasishtha Tripathi Collection. Digitized By Siddhanta eGangotri Gyaan Kosha

